सरस्वतीभवन-अध्ययनमाला

[ २७ ]

# भारतीयकर्मकाण्डस्वरूपाध्ययनम्

लेखकः सम्पादकश्च

**डॉ० विन्ध्येश्वरीप्रसादत्रिपाठी**

प्राध्यापकचरः, वेदविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

# SARASVATĪBHAVANA-STUDIES

[ Vol. XXVII ]

# BHĀRATĪYAKARMAKĀṆḌA-SVARŪPĀDHYAYANAM

by

**Dr. VINDHYEŚVARĪ PRASĀDA TRIPĀṬHĪ**
Ex-Lecturer in the Veda Department
Sampurnanand Sanskrit Vishvavidyalaya.



Research Publication Supervisor
DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'
**Director, Research Institute,**
**Sampurnanand Sanskrit Vishvavidyalaya,**

**VARANASI**
**1980**

**Published by—**
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

[This thesis has been approved for the 'Vācaspati' ( D. Litt. ) degree of Sampurnanand Sanskrit Vishvavidyalaya and has been published out of generous grant from University Grants Commission, New Delhi]

**Available At—**
Sales Department,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi-221002.

**First Edition : 1000 Copies**
**Price : 26-00**

**Printed by—**
**Sudarshana Mudraka**
**Uttara benia.**
**Varanasi.**

सरस्वतीभवन-अध्ययनमाला

[ २७ ]

# भारतीयकर्मकाण्डस्वरूपाध्ययनम्

लेखकः सम्पादकश्च

**डॉ० विन्ध्येश्वरीप्रसादत्रिपाठी**

प्राध्यापकचरः, वेदविभागस्य,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः




अनुसन्धानप्रकाशनपर्यवेक्षकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्

२०३७ तमे वैक्रमाब्दे    १९०२ तमे शकाब्दे    १९८० तमे खैस्ताब्दे

प्रकाशकः—
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये,
वाराणसी.

[ अनुसन्धानप्रबन्धोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन 'वाचस्पतिः' ( डी० लिट्० ) इत्युपाध्यर्थं स्वीकृतः, विश्वविद्यालयानुदानायोगतो लब्धेनाऽऽर्थिकसाहाय्येन मुद्रापितश्च ]

प्राप्तिस्थानम्—
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी-२२१००२.

प्रथमं संस्करणम् : १००० प्रतिरूपाणि

मूल्यम् : २६—०० रूप्यकाणि

मुद्रकः—
सुदर्शन मुद्रक,
उत्तर बेनिया,
वाराणसी।

# प्रास्ताविकम्

सर्वविद्याकरत्वं वेदानां प्रथितम्। किन्तु साक्षाद् वेदानामध्ययनेन तास्ता विद्या अध्येतॄणां न स्फुरन्ति। तदर्थं वेदाङ्गानामध्ययनमावश्यकम्। ततोऽप्यग्रे स्मृतीनां पुराणानां च परिशीलनेन वेदार्थोपबृंहणं जायते। षट्सु वेदाङ्गेष्वन्यतमेन कल्पेन श्रौत-धर्म-गृह्याख्यानां सूत्राणां ग्रहणं जायते। श्रौतसूत्रेष्वग्न्याधानाग्निहोत्र-दर्शपूर्णमासेष्टि-सोमयागादिश्रौतविषया वर्ण्यन्ते। शुल्बसूत्राण्यपि श्रौतसूत्राङ्गभूतानि विराजन्ते। तत्र कुण्डमण्डपादिनियमा यागादिसहायकाः प्रतिपाद्यन्ते। केषां वैदिकानां मन्त्राणां केषु कर्मसु विनियोगः स्यादिति श्रौतसूत्रेषु, क्वचित् स्मृतिषु, पुराणेषु, तान्त्रिकग्रन्थेषु चोपन्यस्तम्। इतो भिन्नमधुना मिश्रकर्मकाण्डमपि दृश्यते। तत्र 'शन्नो देवीः' इति मन्त्रेण शनैश्चरोपासना क्रियते। वेदपक्षपातिभिः कैश्चित् तत्रास्य मन्त्रस्य विनियोगः काल्पनिको मन्यते। किन्तु याज्ञवल्क्यस्मृतौ (आचाराध्याये ३००-१) सदृशः संकेतो लभ्यते नवग्रहपूजाविधिवर्णनप्रसङ्गे -

आ कृष्णेन इमं देवा अग्निर्मूर्धा दिवः ककुत्।
उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्तिताः॥
बृहस्पतेऽतियदर्यस्तथैवान्नात् परिस्रुतः।
शन्नो देवीस्तथा काण्डात् केतुं कृण्वन्निमांस्तथा॥ इति।

तत्र मिताक्षरायाम्—'आ कृष्णेन रजसा वर्तमानः (ऋ० १।३।६।२) इत्यादयो नव मन्त्रा यथाक्रममादित्यादीनां वेदितव्याः' इति स्पष्टितम्।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये वेदप्राध्यापकः पण्डितप्रवरः श्रीविन्ध्येश्वरीप्रसादत्रिपाठी प्रचलितकर्मकाण्डस्वरूपपरिशीलनाय वाचस्पति (डी० लिट्०) इत्युपाध्यर्थकस्यानुसन्धानस्य कृते पञ्जीकृतः। श्रीत्रिपाठिना 'भारतीयकर्मकाण्डस्वरूपाध्ययनम्' इत्याख्येऽस्मिन् गवेषणाप्रबन्धे श्रौतस्मार्तपौराणिकतान्त्रिकमिश्रकर्मकाण्डप्रकाराः सुष्ठु विश्लेषिताः। तत्र कर्मकाण्डस्वरूपपरिचायनाध्याये संपूर्णं संस्कृतवाङ्मयं परिमथ्य सारः समुपस्थापितः कर्मकाण्डस्वरूपपरिचयाय। कर्मकाण्डे के के पदार्था उपयोगिनो भवन्तीति जिज्ञासूनामवबोधाय पञ्चमेऽध्याये विवरणं प्रस्तुतम्। सम्प्रति कर्मकाण्डस्य किं स्वरूपम्? किञ्च युक्तियुक्तमिति विवेचनाय पृथक् पृथग् अध्यायद्वयं संदृब्धम्—कर्मकाण्डानां साम्प्रतिकानुष्ठानस्वरूपाध्यायो मनीषिमताध्यायश्चेति। अस्मिन् वैज्ञानिके युगे कर्मकाण्डस्य खलु कोपयोगितेति प्रश्नस्य समाधानाय श्रीत्रिपाठिना कर्मकाण्डस्य युगोपयोगिताऽध्यायः संनिवेशितः।

श्रीत्रिपाठिना विरचितोऽयं गवेषणाप्रबन्धो बंहिष्ठां प्रशंसामर्हतीति विषयस्य पर्यवेक्षणेन परीक्षकाणां प्रतिवेदनेन च विज्ञायते। सामयत्वाद् श्रीत्रिपाठी गवेषणाप्रबन्धमेतं सम्पादयितुं न प्राभवदिति विश्वविद्यालयेन संशोधनादिकर्मनिर्वर्तनार्थमनुसन्धान-संस्थानस्यानुसन्धानाधिकारिष्वन्यतमः श्रीरामगोविन्दशुक्लो नियोजितः। सरस्वती-भवन-अध्ययनमालायाः सप्तविंशपुष्पतया प्रकाशितेनानेन विद्वज्जना जिज्ञासवश्च नूनं प्रीणिता उपकृताश्च भविष्यन्तीति दृढं मे प्रत्ययः।

विश्वविद्यालयानुदानायोगस्य वैत्तिकेन साहाय्येन गवेषणाप्रबन्धोऽयं मुद्रित इति विश्वविद्यालयपक्षतस्तत्रत्यान् अधिकारिणो धन्यवादैः सभाजयति

वाराणस्याम्
विजयदशम्याम् २०३७ वै०
( १९-१०-८० खी० स्वौ )

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

## अग्निवाङ्मङ्गलस्तुतिः

अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो-
भूयिष्ठान्ते नम उक्तिं विधेम ॥

प्रज्ञानानन्दमूर्तिः सकलदिगतिगः सर्वदा सन्ननन्यः
सर्वस्मात् स्वप्रकाशः स्थिरचरनिलयः प्रत्यगात्मा सदैव ।
श्रौतस्मार्तक्रियात्मा श्रुतिमनननिदिध्यासवैराग्यलभ्यः
स ब्रह्मा विष्णुरीशः सकलमपि जगत् सर्वदाव्यादसौ नः ॥ १ ॥

फलं श्रुतीनां फलदं क्रतूनां
गुणातिगं सर्वगुणाभिरामम् ॥
सपर्यया सर्वजनीनवृत्ति
परं पुमांसं परया भजेम ॥ २ ॥

आनन्दरूपं जगदेकवन्द्यं गौरीपतिं सिद्धिकरं गुणाढ्यम् ।
वाराणसीनाथमनाथनाथं श्रीविश्वनाथं शिरसा नमामि ॥ ३ ॥

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः ॥ ४ ॥

---

# उपकृति-संस्मरणम्

मङ्गलमय्या निखिलविश्वधारिण्या अघटितघटनापटीयस्या अपि अरूपायाः सच्चिदानन्दरूपिण्याः, महामाया-पराम्बा-जगदम्बायाः श्रीमत्या भगवत्या अन्नपूर्णाया विश्वनाथस्य च भगवतः श्रीविश्वनाथस्य चासीमयाऽनुकम्पया सम्पूर्णतामगमन्मे शोधकार्यमिदं भारतीयकर्मकाण्डस्वरूपाध्ययनं नाम। तदेतद्यावतां परिश्रमविदां सहृदयानां विदुषां पुरः उपस्थापयन्नहं परमं प्रमोदमनुभवामि।

कार्येऽस्मिन्नहं येषां प्राथमिकेन हार्दिकसाहाय्येन प्रेरणया निर्देशनेन च संलग्नोऽभवम्, सर्वप्रथमं तेषु वाराणसेय-संस्कृतविश्वविद्यालयस्य अनुसन्धानसञ्चालकचराणामाचार्य-श्रीबलदेवोपाध्यायमहोदयानाम्, वेदविभागाध्यक्षचराणां पं० श्री भगवत्प्रसादमिश्रमहोदयानाञ्चोपकारं हृदयेन स्मरामि।

दुःशकमपीदं कार्यं येषां निर्देशनबुद्धिवैभवैः सर्वथैव सुशकमभूत् तांश्च प्रत्यग्रधिषणान् विद्वत्सार्वभौमान् संस्कृतविश्वविद्यालयस्य अनुसन्धानसञ्चालकमहाभागान् आचार्यश्रीबदरीनाथशुक्ल-न्यायवैशेषिकाचार्यान् एम्० ए० महोदयान् प्रति तेषां स्वरूपानुरूपं वाक्कुसुमचयं कर्त्तुमनीशानः केवलया हार्दिक्या कृतज्ञतया तान् सादरं भूयो भूयः प्रणमामि। प्रसङ्गेऽस्मिन् वेद-धर्मशास्त्र मीमांसाचार्य-वेदतीर्थान् वेदविभागाध्यक्षान् सम्प्रदायविदः प० श्रीगोपालचन्द्रमिश्रमहोदयान् अपि हार्दिकैर्धन्यवादशतैर्योजयामि, यैरनेकविधसहयोगप्रदानेन कार्यमिदं सुसम्पन्नं व्यधायि। अथाप्यत्र बहवष्टङ्कणजन्याक्षरदोषाष्टङ्कणयन्त्रपारवश्येन संस्कृताभिज्ञस्य टङ्कणकर्त्तुर्दौर्लभ्येन च तथैव विद्यमानाः सन्ति। सर्वथैव निर्दोषं टङ्कणं कारयितुं वाञ्छन्नपि तन्नापारयम्। अतस्तत्तट्टङ्कणदोषान् क्षन्तुं मानवसुलभा अन्याश्चापि वर्तमानास्त्रुटीरविगणय्यैव प्रबन्धमेनं द्रष्टुं विनिवेदये। इति शम्।

# आमुखम्

ऋग्यजु:सामाथर्वेति संज्ञया प्रथितः साङ्गोपाङ्गः, इतिहासपुराणोपपुराण-स्मृत्यादिभिरुपबृंहितः, निखिलज्ञानमयः स्वरूपोऽनन्तो ज्ञानाम्बुधितया चागाधः, साकल्येन धारणे स्मरणे ज्ञाने हि किमुत सामान्यबुद्धिभिरपि तु महार्माहमतपो-बुद्धिशालिभिर्ऋषिमर्हर्षिभिः साक्षात्कृतधर्मभिरपि 'अनन्ता वै वेदाः' इत्येवम् आसृष्टेरद्य यावत् स्मर्यमाणः श्रीभगवान् वेदः, सार्वभौममानवकल्याणसाधक-सिद्धान्तोपदेशगवेषणापथजुषाम्, उदारचेतसां विदुषां तथा भारतीयसंस्कृतिसभ्यतासु श्रद्दधानानामाविद्वद्गोपालाङ्गनानां भारतभूजनिमतां सामान्यानामपि केषां विश्वस्य जगतो जनानां वेद इति नाम्नाविदितो नास्ते ? सर्वैरपि जनैः प्रायो वेद इति श्रुतिमात्रेण किमप्यादरणीयत्वेनावश्यं बुद्ध्यत एव। अहो महिमा भगवतो वेदस्य।

वेदस्यैव प्रायोगिकं किमपि विलक्षणं स्वरूपं भारतीयं कर्मकाण्डं नाम। यथासौ मन्त्रब्राह्मणात्मकः शब्दराशिः सर्वतो हि दुरधिगमस्तथैव तस्य वेदस्य प्रायोगिकं स्वरूपं भारतीयं सर्वमपि कर्मकाण्डं परमदुर्गममिति नाविदितं विदुषाम्।

भारतीयकर्मकाण्डानां केचिदंशाः साक्षाद् वेदप्रतिपादिताः श्रौतापरपर्यायाः, केचिच्च वेदमूलकस्मृतिपुराणादिविभिन्नधर्मग्रन्थोक्ता ऋषिमर्हर्षिभिः साक्षात्कृत-धर्मभिर्विवृताः, केचिद्धि तत्तद्वेद-वेदमूलकशास्त्रच्छायाश्रिताः, अलौकिकशक्ति-शालिभिः सत्यवाग्भिः सिद्धिसिद्धमहात्मभिरपि निरूपिता विराजन्तेतमाम्। तेषु ये साक्षाच्छ्रुतिप्रतिपादनविरहवन्तोऽप्यंशास्तेऽपि प्रामाण्यं भजन्त एव, सिद्धानां महात्मनां निष्कारणकरुणावतां तेषां तपःसमाधिस्मरण-वागादिप्रभावयोगात्। इमे सर्वेपि कर्मकाण्डव्यूहभागा भारतस्य मूलस्वरूपसंरक्षणे, तस्य सम्प्रवर्धने, मानवतायाः प्रसारणे, राष्ट्रस्यैकताया जनसङ्घटनस्य संवहने मानवानां लौकिकपारलौकिक-सर्वविधकल्याणसम्पादने, भारतस्य तात्त्विक्याः सांस्कृतिकपरम्परायाः स्वरूपावबोधने परमोपकारिणः सन्तीति कृत्वा प्रबन्धनीयप्रबन्धस्य मर्यादिताकारं मनसि निरूप्य यावद्युक्तानि तेषां स्वरूपाण्यधीतानि सन्ति। अथ च प्रसङ्गतः समापतिताः सम्बद्धा बहवोऽन्येऽपि उपयोगिनो विषया अत्राधीता–( विमर्शिताः ) श्च सन्ति। ते सर्वेऽपि विषयाः प्रधानरूपेणावान्तररूपेण च विद्यमाना अग्रेदत्तया विषयसूच्या साकल्येनावगता भविष्यन्ति। अथाप्यत्रापीदं समासतया संसूचनं स्थाने मन्ये यदत्र प्रबन्धे विभिन्ननाम्ना अष्टौ अध्यायाः प्रबद्धाः सन्ति। तत्र सर्वादौ प्रबद्धतया—

**१. विषयविमर्शाध्यायनामके प्रथमेऽध्याये**

कर्मभूमित्वाद् भारतस्य भारतमेव कर्मकाण्डभूमिः, विश्वस्य अन्याः सर्वा अपि भूमयो भोगभूमय इति विमृशता प्रसङ्गतः भरत-भारतशब्दयोस्तर्कानुसृतान् शास्त्रानुसृतान् व्याकरणदृशा प्रकृतिप्रत्ययविश्लेषणपूर्वकं विविधान् अर्थान् सबीजमुपस्थाप्य भारतस्यास्य महादेशस्य नाम भारतं भारतवर्षं वा कस्य भरतस्य सम्बन्धेन नाम्ना वा जातमिति महता संरम्भेण निर्णीय बहूनां विशिष्टविचारकाणां पुनर्विचारस्यावसरोऽवरुद्धः । अथ च दौष्यन्तेः शाकुन्तलेयस्य भरतस्य नाम्ना देशोऽयं 'भारतम्' 'भारतवर्षम्' वेति केषाञ्चिद् भ्रान्तिः प्रवृद्धा या जागर्ति सा सर्वथैव स्थापिता सत्तर्कैः प्रमाणैर्निरस्तेति । भारतस्यैव कर्मकाण्डभूमित्वं च साधितम् ।

**२. कर्मकाण्डविधाध्यायनामके द्वितीयाध्याये**

कर्मकाण्डस्य पञ्चापि विधा निर्दिश्य उपर्युक्तानि कर्मकाण्डे प्रमाणानि, श्रौतकर्मकाण्डविधासु प्रकृतिविकृतिभावः । होमयागयोः स्वरूपम् । इष्टिः, इष्टिभेदाः, यावदुक्तकर्म अन्तापच्छिन्नकर्म, पशुयागः, पशुयागभेदः, सोमयागः, दीक्षा, उपसत्, सोमयागे यजमाननियमाः । स्मार्तकर्मविधाः, स्मार्तकर्मकाण्डम्, पौराणिककर्मकाण्डस्वरूपम्, मिश्रकर्मकाण्डमित्यादिविषया विवेचिता अधीताः सन्ति ।

**३. कर्मकाण्डाधिकाराध्यायनामके तृतीयेऽध्याये**

कर्मकाण्डस्य मानवाधिकारित्वम्, सहाधिकारः, सङ्घाधिकार, विशेषाधिकारः, स्मार्ते विशेषाधिकारचिन्ता, रथकाराधिकारः, निषादस्थापत्यधिकारः, कर्त्तृवेवाधिकरणे फलाधिकारः इत्येवमादयो विषया चिन्तिता अधीता वर्तन्ते ।

**४. कर्मकाण्डपरिचायनाध्यायनामके चतुर्थेऽध्याये**

दर्शपूर्णमासयागः । सप्तपाकयज्ञसंस्थाः । सप्तहविर्यज्ञसंस्थाः । सप्तसोमयज्ञसंस्थाः । कारीरीष्टिः, दर्शपूर्णमासेष्ट्यामपि वृष्टिसिद्धिः । सत्रम् । पुरुषमेधः इत्येवं बहवो विषया विवृता अधीताः । तत्र पुरुषमेधे मनुष्यमारणस्य प्रवादोऽपि प्रमाणैर्निरस्तः ।

**५. कर्मकाण्डोपयोगिपदार्थस्वरूपप्रकाशनाध्यायनामके पञ्चमाध्याये**

काल-मन्त्रादिविषयाः साधु विवेचिताः । तत्र सर्वकर्मकाण्डेषु सर्वत्रैवोउपयोगित्वेन दृष्टानामपां दर्भाणां चाअध्ययनं विशिष्य कृतम्, यज्ञीयानां पात्राणां कश्चित् परिचयोऽपि दत्त आस्ते ।

**६. कर्मकाण्डस्य साम्प्रतिकानुष्ठानस्वरूपचिन्तनाध्यायनामके षष्ठेऽध्याये**

अध्यायनामानुरूपा बहुविषयाः निरूपिताः सन्ति । सर्पसत्रम्, सन्तानकामेष्टिश्चापि चिन्तितास्ते ।

**७. मनीषिमतप्रकाशनाध्यायनामके सप्तमाध्याये**

अध्यायस्य नामानुरूपमुपस्थापनम् ।

**८. कर्मकाण्डस्य युगोपयोगिताध्यायनामकेऽष्टमाध्याये—**

सोपक्रममुपयुक्तमावश्यकं विचार्य विनिवेद्य चात्रैवोउपसंहृतोऽयं प्रबन्धः । एवमत्रातिसंक्षिप्यापि परिचायितः, अग्रे दीयमानया विषयसूच्या, आत्मनो वास्तविकं विस्तृतं विशिष्टं च स्वरूपं प्रकाशयन्नष्टभिः सिद्धिभिरिव, अष्टभिरध्यायैः सिद्धः ( प्रबद्धोऽयं ) प्रबन्धोऽमोष्टां सिद्धिं दद्यादिति प्रार्थये परमेश्वरं भवानीपतिं साम्बं सदाशिवं विश्वनाथं काशीनाथम् ।

स्वाध्यायेऽधिकृतैर्द्विजैः कलियुगस्योद्भूतदोषोच्चया-<br>
च्छाखाधीतिरपि प्रमादवशतस्त्यक्ता यतश्चात्मनः ।<br>
स्मृत्याचारगृहीतकर्मसु ततो दुःसाध्यतादर्शना-<br>
च्छोधं कर्मनिरूपणे सुविततं प्रस्तौमि विद्वन् मुदे ॥

विन्ध्येश्वरीप्रसादत्रिपाठी

# विषयानुक्रमणिका

| विषयः | पृष्ठम् |
|---|---|

# भारतीयकर्मकाण्डस्वरूपाध्ययनम्

## विषयविमर्शाध्यायः

विश्वकल्याणकामानां राष्ट्रस्यास्य सर्वविधाभ्युदयमभिलषतां कर्मकाण्डेनैहिकामुष्मिकश्रेयःसिद्धिमात्मनो मन्वानानां भारतीयकर्मकाण्डेषु श्रद्दधतां सामान्यजनानां विद्यार्थिनां विदुषां मुदे ह्यात्मनोऽन्तस्तोषाय च क्रियमाणेनानेन शोधकार्येण तत्तज्जनानां काचित् जिज्ञासापि समाहिता भवेदिति बुद्ध्यैव सर्वमपि शोधकार्यजातमनुष्ठेयमास्ते। अतो हि विशेषज्ञानां विदुषां कृतेऽनपेक्षितं सदपि तादृशानां सामान्यजनानां मादृशानां केषाञ्चिदात्मनश्च कृते समपेक्षितं समुपयोगि सन्तोषावहं च यत् किमपि तत्तज्जिज्ञासासमाधानात्मकं साधारणमपि विमर्शनीयमध्ययनं वास्ति तदप्यत्र विदधतैव मया कार्यमिदं सम्पूरयिष्यते। मन्ये चाहमेतेनापि केषाञ्चित् कश्चिल्लाभोऽवश्यं भवितैवेति, तदनुसारमादौ विमर्शनीयतामुपगतानामध्येयत्वेन मतानाम् "भारतीयकर्मकाण्डस्वरूपाध्ययनम्" इति शोधविषयस्य नाम्नि मूलरूपेण विद्यमानानां विषयनाम्नो घटकानां पदानाम् (भरत-भारत-भारतीय-कर्मकाण्ड-प्रभृतिशब्दानां) किञ्चिद् विस्तरतोऽर्थावबोधाय शब्दशास्त्रप्रसिद्धानां कृत्तद्धित-समासैकशेषसनाद्यन्तधातुरूपाणां पञ्चानामपि वृत्तीनां वृत्त्यर्थावबोधकानि वाक्यान्यपि यथाप्रयोजनमाश्रित्य शास्त्रीयोदाहरणप्रमाणयुक्त्यादिभिस्त एते (भरत-भारत-भारतीयकर्मकाण्डादिशब्दाः) व्यस्तरूपेण समस्तरूपेण चोभयथापि मया विमर्शयिष्यन्ते, अध्येष्यन्ते। तत्र विषयनाम्नि सर्वादौ पठितस्य भारतीयेति शब्दस्य मूलभूतो भरतशब्द एव विमृश्यते[1] अधीयते।

**भरतः**

शब्दोऽयं व्याकरणदृष्ट्या भरति भरते, वेति विग्रहे भृञ् भरणे इति (भ्वा० उ० प० अ०) भृधातोः, अथवा 'डुभृञ् धारणपोषणयोः' इति (जुहो०

---

१. मृश आमर्शने, आमर्शनं स्पर्शः। तुदादिः परस्मैपदी धातुः। सि० कौ० पृ० ४८२।
मृष तितिक्षायाम् मृष्यति, मृष्यते दिवादिः, उभयपदी। सि० कौ० पृ० ४७३।
,, ,, (चुरादिः) स्वरितेत् मर्षयति मर्षति, मर्षते।
मृष्यति मृष्यते इति दिवादौ। सेचने शपि मर्षति इति। सि० कौ० पृ० ४६४।

उ० प० अ० ) भृधातोर्वा ( भृ-मृ-दृशि-यजि-पर्वि-पच्यमि-तमि-नमि-हर्येभ्योऽतच्[1] ) इति ( उणादि ३।१११ ) सूत्रेण अतच् प्रत्यये कृते निष्पन्नो भवति।

भरतशब्दस्य वाच्याऽर्थविचारे—

शलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः।

भरता इत्यपि नटाः—इत्यमर ( २।१०।१२ )कोशात्, तथा एतस्य च रामाश्रमीटीकायां "रङ्गावतारी शैलूषो नटो भरत-भारतौ" इति वाचस्पतिवचनोद्धरणात्।

शब्दकल्पद्रुमेऽपि—

नाट्यशास्त्रम्। मुनिविशेषः। स तु अलङ्कारादिशास्त्रस्य सूत्रकर्त्ता। भरतस्य शिष्यः ( तस्येदमित्यण् अणो लुक्। शबरः। तन्तुवायः। क्षेत्रम्........ ( अग्रे ) भरतपुत्रकः ( भरतस्य नाट्यशास्त्रप्रणेतुः पुत्रः ) इत्युल्लेखाच्च, भरतशब्देन नटः, रङ्गावतारी शैलूषः, नाट्यशास्त्रम्, अलङ्कारादिशास्त्रस्य सूत्रकर्त्ता, नाट्यशास्त्रप्रणेता, मुनिविशेषः शबरः, तन्तुवायो भरतस्य शिष्योऽपि सामान्यतया गृह्यते।

अन्यत्रापि—

ऋग्वेद-यजुर्वेद-शतपथब्राह्मण-कौषीतकीब्राह्मणनिरुक्तबाल्मीकीयरामायणवायु-पुराण-श्रीमद्भागवतादिषु भरतशब्दस्यार्था बहवो विलोक्यन्ते।

ऋग्वेदे—( २।३६।२ ) मन्त्रस्य "भरतस्य सूनवः" इत्यस्य सायणभाष्ये "भरतस्य जगतो भर्तू रुद्रस्य पुत्राः" इत्युल्लेखात्।

"जनस्य गोपाः.........भरतेभ्यः शुचिः" इति ऋग्वेद( ५।११।१ )मन्त्रस्य सायणभाष्ये भरतेभ्य ऋत्विग्भ्य इत्युक्तत्वात्।

निरुक्ते—निघण्टुभाष्ये ( ५।२ ) दैवतकाण्डे अष्टमाध्याये 'तिस्रो देवीः' पदोदाहरणे दत्तायाम् "आनो यज्ञं भारतीसूयमेत्विक्ता सरस्वती०" इत्यृचि पठितस्य भारतीशब्दस्य निर्वचने 'भरतः=आदित्यस्तस्य भा' इत्युक्तात्। अत्रैव दुर्गाचार्य-वृत्तावपि भरत आदित्यः सर्वभूतान्युदकेन बिभर्ति इति व्याख्यानाच्च।

यजुर्वेदमाध्यन्दिनसंहितायां समाम्नातायाः (१२।३४) 'प्र-प्रायमग्निर्भरतस्य शृण्वे' इति कण्डिकायाः विवरणे प्रजापतिर्भरतः सहीदं बिभर्ति इति शतपथ-

1. ( एभ्यो- ) दशभ्यो- ) अतच् स्यात्। भरतः। मरतो मृत्युः। दर्शतः सोमसूर्ययोः। यजत ऋत्विक्। पर्वतः। पचतोऽग्निः। अमतो रोगः। तमतस्तृष्णापरः। नमतः प्रह्वः। हर्यतोऽश्वेः। इति ( सि० कौ० पृ० ६२८ ) तस्य सूत्रस्य वृत्तावुदाहरणानि।

( ६।८।१।१४ ) वचनात्, "एष ( अग्निः ) हि देवेभ्यो हव्यं वहति तस्माद् भरतोऽग्निरित्याहुः' इत्यपि शतपथ( १।४।२।२ )ब्राह्मणोक्तेः।

एष ( अग्निः ) उ वा इमाः प्रजाः प्राणो भूत्वा।
बिभर्त्ति तस्मादेवाह भरतवदिति शतपथे। (१।५।८), प्रोक्तात्
"अग्निर्वै भरतः स वै देवेभ्यो हव्यं भरति" इति कौषीतकीब्राह्मणकथनात्,

तथैव च—

भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः।
साक्षाद् विष्णोश्चतुर्भागः सर्वैः प्रमुदितैर्गुणैः॥

इति बाल्मीकीयरामायणस्य १८ सर्गे १३ श्लोकात्, मनसुखरायमोरद्वारा कलकत्तायां प्रकाशितवायुराणस्य अग्निवंशवर्णननामके २९ अध्याये ११७ पृष्ठे—

वैद्युतो लौकिकाग्निस्तु प्रथमो ब्रह्मणः स्मृतः।
ब्रह्मौदनाग्निस्तत्पुत्रो भरतो नाम विश्रुतः॥ ७॥

इत्युक्ताच्च पूर्वोक्तेभ्योऽन्येऽपि रुद्रः, ऋत्विक्, आदित्यः, प्रजापतिः, अग्निः, अग्निपुत्रः, रामानुज इत्येतेऽपि भरतशब्देन गृह्यन्ते।

तथैवैको भरतो समाह अपि सार्वभौमचक्रवर्तिनो राज्ञश्चन्द्रवंशीयस्य दुष्यन्तस्य पुत्रः शाकुन्तलेयः (महाराजदुष्यन्तात् शकुन्तलायां जातः) यो हि शताश्वमेधयज्ञानामाहर्त्ता पुराणेषु शब्द्यते। येन नानाविधान् यज्ञान् कुर्वता सप्तविंशतिसहस्रवत्सरान् एकच्छत्रं भुवो राज्यं चक्रे, यस्योत्पत्त्यादि च भारतीयवाङ्मये बहुत्र चर्चितमास्ते। यस्य चर्चास्थलानां सङ्ग्रहोऽपि एको ग्रन्थो भविष्यति।

एतस्य भरतस्य विषये—

अथातः श्रूयतां राजन् वंशः सोमस्य पावनः।
यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः॥

इत्येवं श्रीमद्भागवते ( ९।१४।१ ) सोमवंशम् ( चन्द्रवंशम् ) उपक्रम्य तत्र ( चन्द्रवंशे ) जातस्य पुरोर्महाराजस्य वंशे सुमतिः, सुमते रैभ्यो, रैभ्याद् दुष्यन्तोऽभूत्। इत्थं तत्र भागवते ( ९।१०।१-७ ) पद्यैः प्रतिपाद्य ततो हि मृगयाप्रसङ्गमादाय शकुन्तलया सह दुष्यन्तस्य गान्धर्वविवाहस्ततश्च शकुन्तलातो भरतस्य जन्मादि प्रतिपादितमास्ते।

यथा हि श्रीमद्भागवते ९ स्क० २० अध्याये—

दुष्यन्तो मृगयां यातः कण्वाश्रमपदं गतः।
तत्रासीनां स्वप्रभया मण्डयन्तीं रमामिव॥
विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम्॥८॥
बभाषे तां वरारोहां भटैः कतिपयैर्वृतः॥९॥

तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः ।
पप्रच्छ कामसन्तप्तः प्रहसन् श्लक्ष्णया गिरा ॥ १० ॥
का त्वं कमलपत्राक्षि कस्यासि हृदयङ्गमे ।
किं वा चिकीर्षितं त्वत्र भवत्या निर्जने वने ॥ ११ ॥
व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ।
नहि चेतः पौरवाणामधर्मे रमते क्वचित् ॥ १२ ॥

शकुन्तलोवाच—

विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ।
वेदैतद् भगवान् कण्वो वीर किं करवाम ते ॥ १३ ॥
आस्यतां ह्यरविन्दाक्ष गृह्यतामर्हणं च नः ।
भुज्यन्तां सन्ति नीवारा उष्यतां यदि रोचते ॥ १४ ॥

दुष्यन्त उवाच—

उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये ।
स्वयं हि वृणुते राज्ञां कन्यका सदृशं वरम् ॥ १५ ॥
ओमित्युक्ते यथाधर्ममुपयेमे शकुन्तलाम् ।
गान्धर्वविधिना राजा देशकालविभागवित् ॥ १६ ॥
अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ।
श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥ १७ ॥
कण्वः कुमारस्य वने चक्रे समुदिताः क्रियाः ।
बद्ध्वा मृगेन्द्रांस्तरसा क्रीडति स्म स बालकः ॥ १८ ॥
तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा ।
हरेरंशांशसम्भूतं भर्तुरन्तिकमागमत् ॥ १९ ॥
पितर्युपरते सोऽपि चक्रवर्ती महायशाः ।
महिमा गीयते तस्य हरेरंशभुवो भुवि ॥ २३ ॥
चक्रं दक्षिणहस्तेऽस्य पद्मकोशोऽस्य पादयोः ॥ २४ ॥
भरतस्य हि दौष्यन्तेरग्निः [1]साचीगुणोचितः ।
सहस्रं बद्वशो[2] यस्मिन् ब्राह्मणा गा विभेजिरे ॥ २७ ॥
भरतस्य महत् कर्म न पूर्वं नापरे नृपाः ।
नैवापुर्नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा ॥ ३० ॥

---

१. साचीगुणे प्रकृष्टगुणवति देशेऽग्निश्चितोऽभूत्, यस्मिन् अग्निचयनस्थले सहस्रं ब्राह्मणा भरतेन दत्ता गाः बद्वशः प्रत्येकं बद्वं बद्वं विभेजिरे विभज्य, जगृहुरित्यर्थः ॥

२. चतुरशीत्यधिकैः त्रयोदशसहस्रैरेकं बद्वं भवति (९।२०।२७) भाग० अन्वितार्थटीका ।

किरातहूणान् यवनान् आन्ध्रान् कङ्कान् कशाञ्छकान् ।
अब्रह्मण्यान् नृपांश्चाहन् म्लेच्छान् दिग्विजयेऽखिलान् ॥ ३१ ॥
सर्वकामान् दुदुहतुः प्रजानां तस्य रोदसी ।
समास्त्रिणवसाहस्रीर्दिक्षु चक्रमवर्तयत् ॥ ३३ ॥
स सम्राट् लोकपालाख्यमैश्वर्यमधिराट्श्रियम्[१] ।
चक्रं चास्खलितं प्राणान् मृषेत्युपरराम ह ॥ ३४ ॥

**एकोऽन्योपि भरतो महाराजः**

यो हि अजनाभवर्षाधिपतेर्भगवदवतारात्[२] ऋषभ[३]देवात् इन्द्रदत्तायां जयन्त्यां जातशतपुत्रान्तर्गतः प्रथमः (ज्येष्ठः) महायोगी परमभागवतो भगवज्जन-परायणो धरणीपालः, विश्रुतकीर्तिर्बभूव ।

यथाह भागवते (५।४।८-९) गद्याभ्याम्—

अथाह भगवान् ऋषभदेवः स्ववर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासो लब्धवरैर्गुरुभिरनुज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो जयन्त्यामिन्द्रदत्तायामुभय-

---

१. अधिराजां श्रियम् ।

२. नाभिरपत्यकामो प्रजया मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्मा यजत ॥ १ ॥

तस्य ह वाव श्रद्धया विशुद्धभावेन यजतः प्रवर्ग्येषु प्रचरत्सु द्रव्यदेशकालमन्त्रा-र्त्विग्दक्षिणाविधानयोगोपपत्त्या दुरधिगमोऽपि भगवान् भागवतवात्सल्यतया सुप्रतीक आत्मानमपराजितं निजजनाभिप्रेतार्थविधित्सया गृहीतहृदयो हृदयङ्गमं मनोनयना-नन्दनावयवाभिराममाविश्चकार ॥ २ ॥

ततो भगवन्तम् ऋत्विज ऊचुः—किञ्चायं राजर्षिरपत्यकामः प्रजां भवादृशी-माशासान ईश्वरमाशिषां स्वर्गापवर्गयोरपि भवन्तमुपधावति प्रजायामर्थप्रत्ययो धनदमिवाधनः फलीकरणम् ॥ १३ ॥

श्री भगवान् उवाच । अहो बताहमृषयो भवद्भिरवितथगीर्भिर्वरमसुलभमभि-याचितो यदमुष्यात्मजो मया सदृशो भूयादिति ममाहमेवाभिरूपः कैवल्यादथापि ब्रह्मवादो न मृषा भवितुमर्हति । ममैव हि मुखं यद् द्विजदेवकुलम् ॥ १७ ॥ तत आग्नीध्रीयेंशकलयावतरिष्याम्यात्मतुल्यमनुपलभमानः ॥ १८ ॥ ··· ··· इति निशामयन्त्या मेरुदेव्याः पतिमभिधायान्तर्दधे भगवान् ॥ १९ ॥ ··· ···भगवान् परमर्षिभिः प्रसादितो नाभेःप्रियचिकीर्षया तदवरोधायने मेरुदेव्यां ··· ··· शुक्लया तन्वावततार ॥ २० ॥

३. तस्य ह वा इत्थं वर्ष्मणा वरीयसा बृहच्छ्लोकेन च ओजसा बलेन श्रिया यशसा वीर्यशौर्याभ्यां च पिता ऋषभ इतीदं नाम चकार । भा० ५।४।२ ।

को नु तत्कर्म राजर्षेर्नाभेरन्वाचरेत्पुमान् ।
अपत्यतामगाद्यस्य हरिः शुद्धेन कर्मणा ॥ (भाग० ५।४।६)

लक्षणं कर्म समाम्नायाम्नातमभियुञ्जन्नात्मजानामात्मसमानानां शतं जनयामास ॥८॥ येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीत् ॥ ९ ॥

( भागवते स्क० ५ अ० ४ श्लोकाः )

एतस्य महात्मनो राज्ञो भरतस्य विषये पिता भगवान् ऋषभदेवः, अन्यान् स्वात्मजान् आह—( भाग० ५।५ )

इदं शरीरं मम दुर्विभाव्यं सत्त्वं हि मे हृदयं यत्र धर्मः ।
पृष्ठे कृतो मे यदधर्म आरादतो हि मामृषभं प्राहुरार्याः ॥१९॥
तस्माद् भवन्तो हृदयेन जाताः सर्वे महीयांसममुं सनामम् ।
अक्लिष्टबुद्ध्या भरतं भजध्वं शुश्रूषणं तद्भरणं प्रजानाम् ॥२०॥

अयं हि भरतो महान् विरक्तो महाभागवतोऽपि पित्रा भगवता ऋषभदेवेन यदा अवनितलपरिपालनाय सञ्चिन्तितस्तदा तस्याज्ञानुसारी सन् विश्वरूपदुहितरं पञ्चजनीं विवाह्य वंशपरम्परामपि वर्धितवान् । उच्चावचान् बहून् यज्ञानपि अनुष्ठितवान् । ततश्च भगवति अतिशयेन प्रवर्धमानानुरागोऽन्ते स्वतनयेभ्यो रिक्थं पितृपैतामहं यथादायं विभज्य पुलहाश्रमं प्रवव्राज । अन्यस्मिन् जन्मनि ब्राह्मणवंशे गृहीतजन्मा जडभरतनाम्ना ख्यातो महाज्ञानी । परमविरक्तोऽयं तस्मिन् जन्मनि रहूगणेन, अज्ञानतया शिबिकावाहपुरुषत्वेन पूर्वं गृहीतोऽपि पश्चात् ।

नमो नमः कारणविग्रहाय स्वरूपतुच्छीकृतविग्रहाय ।
नमोऽवधूतद्विजबन्धुलिङ्गनिगूढनित्यानुभवाय तुभ्यम् ।

इत्यादिभाग० (५।१२।१) शब्दव्यूहैः स्तुतः प्रार्थितश्च, तस्मै रहूगणाय तादृशं सुदृढं ब्रह्मज्ञानं प्रदत्तवान् । येन ज्ञानेन राजा रहूगणः, सौवीरपतिः स आत्मन्यविद्याध्यारोपितां देहात्ममतातिसयो विससर्जेति ( भागवत० ५।१३ )प्रभृतिभारतीयवाङ्मयेन ज्ञायते ।

**भारतशब्दः**

एतस्यानन्तरविमर्शितस्याधीतस्य भरतशब्दस्य विकृतिभूतोः (भारतशब्दस्यार्थसम्बन्धेन निष्पन्नः ) ख्यातो भारतशब्दोऽपि बह्वर्थाभिधायी । यथा हि क्रमशः द्रष्टव्यः—

**ग्रन्थवाचको भारतशब्दः**

भारतान्[1] भरतस्य राज्ञो वंशीयान् अधिकृत्य कृतो ग्रन्थः, इत्यर्थे द्वितीयासमर्थाद् भरतशब्दात् 'अधिकृत्य कृते ग्रन्थे' (४।३।८७) इत्यणि प्रत्यये कृते, अथवा

१. भरतस्य गोत्रापत्यं पुमान् इत्यर्थे भरतशब्दात् तस्येदमित्यणि अणो लोपे च भरत इति भरतवंशे जातस्य पुरुषस्य भरतवंशीयस्य बोधको भरत-शब्दो व्युत्पन्नो भवति, अत एव तथा विगृहीतम् ।

भारं चतुर्वेदादिशास्त्रेभ्योऽपि सारांशं तनोतीत्यर्थे भारतशब्दोपपदात् 'तनु विस्तारे' इति तनाद्युभयपदिधातोर्डप्रत्यये डित्वसामर्थ्यादभस्यापि टेर्लोपे ग्रन्थ-वाचको भारत-शब्दो निष्पद्यते। अनेन भारतशब्देन सुप्रसिद्धो [1]व्यासमहर्षिप्रणीतलक्षश्लोकात्मको महाभारतसंज्ञकः इतिहास, इतिहासादिविविधज्ञानकरो विशिष्टो महाग्रन्थो गृह्यते। भारतशब्दस्य ग्रन्थवाचकत्वं परिपोषयन्ति बहूनि वाक्यानि—

भारतं शृणुयान्नित्यं भारतं परिकीर्तयेत्।
भारतं भवने यस्य तस्य हस्तगतो जयः॥

यो गोशतं कनकशृङ्गमयं ददाति
विप्राय वेदविदुषे सुबहुश्रुताय।
पुण्याञ्च भारतकथां शृणुयाच्च नित्यं
तुल्यं फलं भवति तस्य च तस्य चैव॥

नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा।
ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम्॥
यथैतानीतिहासानां तथा भारतमुच्यते।
यश्चैनं श्रावयेत् श्राद्धे ब्राह्मणान् पादमन्ततः॥
अक्षय्यमन्नपानं वै पितृंस्तस्योपतिष्ठते।
(शब्दकल्पद्रुमे महाभारतवचनत्वेन)

ततः सस्मार हेरम्बं व्यासः सत्यवतीसुतः।
स्मृतमात्रो गणेशानो भक्तचिन्तितपूरकः॥७५॥
तत्राजगाम विघ्नेशो वेदव्यासो यतः स्थितः।
पूजितश्चोपविष्टश्च व्यासेनोक्तस्तदानघ।॥७६॥
लेखको भारतस्यास्य भव त्वं गणनायक।
मयैव प्रोच्यमानस्य मनसा कल्पितस्य च॥७७॥
(इति महाभा० आदिपर्वान्तर्गतानुक्रमणिकापर्वणि पृ० ७ सं० १)
चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम्।
उपाख्यानैर्विना तावद् भारतं प्रोच्यते बुधैः॥
तत्रैवानुक्रमणिकापर्वणि।

**गरुडे महापुराणे १५० अध्यायेऽपि ब्रह्मोवाच—**

भारतं सम्प्रवक्ष्यामि भारावतरणं भुवः।
चक्रे कृष्णो युध्यमानः पाण्डवादिनिमित्ततः॥

---

१. तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्।
इतिहासमिमं चक्रे पुण्यं सत्यवती सुतः॥५०॥
(इति महाभा० अनुशा० अनुक्रमणिकापर्वणि)

**भारतशब्दो देशविशेषवाचकः**

भरतस्येदमित्यर्थे तस्येदम् ( ४।३।१२० ) सूत्रेण अणि कृते "भारतम्" इति देशविशेषवाचको भारतशब्दो निष्पद्यते। भारतो हि जम्बूद्वीपस्य नववर्षान्तर्गतः। नवमो[1] वर्षः। भारतशब्दस्य देशवाचकत्वं सर्वत्र प्रसिद्धमस्ति। यथा च विष्णुपुराणे २ अंशे ३ अध्याये—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने।
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम्॥
इतः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते।
न खल्वन्यत्र मर्त्यानां कर्मभूमौ विधीयते॥
भारतस्यास्य वर्षस्य नव भेदान्निशामय।
इन्द्रद्वीपः कशेरुश्च ताम्रपर्णो गभस्तिमान्॥
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः।
अयन्तु नवमस्तेषां द्वीपः[2] सागरसंवृतः॥
योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरम्।
पूर्वे किराताः यस्यान्ते पश्चिमे यवनाः स्थिताः॥
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः।
इज्यायुद्धवणिज्याद्यैर्वर्तयन्तो व्यवस्थिताः॥
शतद्रुश्चन्द्रभागाद्या हिमवत्पादनिःसृताः।
नर्मदा सुरसाद्याश्च नद्यौ विन्ध्यविनिःसृताः॥
···नद्युपनद्यश्च सन्त्यान्याश्च सहस्रशः।
चत्वारि भारते वर्षे युगान्यत्र महामुने॥
कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न क्वचित्।
तपस्तप्यन्ति यतयो जुह्वते चात्र यज्विनः।
दानानि चात्र दीयन्ते परलोकार्थमादरात्॥

---

१. "पुंनपुंसकयोर्वर्षं जम्बूद्वीपाब्दवृष्टिषु" इति रुद्रः। "वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिसु" इत्यमरकोश ( २।१।६ ) श्लोकस्य रामाश्रमीव्याख्यायाम् ( श्रीभट्टोजिदीक्षितात्मजभानुजीदीक्षितकृतव्याख्यायां सुधाख्यायां रामाश्रमीति प्रसिद्धायाम् )।

२. अयं तु नवमस्तेषामित्यनेन भारतद्वीपः, ( भारतस्य प्रधानभूतो मुख्यो भागः कथितः प्रतीयते )।

तत्रापि भारतश्रेष्ठं जम्बूद्वीपे महामुने।
यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः॥
अत्र जन्मसहस्राणां सहस्रैरपि सत्तम।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात्॥
गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात्॥

ब्रह्मवैवर्ते कृष्णजन्मखण्डे (१।५९)
हिमालयादासमुद्रं पुण्यक्षेत्रं च भारतम्।

श्रीमार्कण्डेयपुराणे भारतखण्डवर्णननामके ५७ अध्यायेऽपि—

एतत्तु भारतं वर्षं चतुःसंस्थानसंस्थितम्।
दक्षिणे परतो ह्यस्य पूर्वेण च महोदधिः॥
हिमवानुत्तरेणास्य कार्मुकस्य यथा गुणः।
तदेतद् भारतं वर्षं सर्वबीजं द्विजोत्तम।
मनुष्यः कुरुते तत्तु यन्न शक्यं सुरासुरैः। (श० क०)

तत्रैव ५८ अध्याये क्रोष्टुकिरुवाच—

भगवन् कथितं सम्यग् भवता भारतं मम।
किन्तु कूर्मस्त्वया पूर्वं भारते भगवान् हरिः।
कथितस्तस्य संस्थानं श्रोतुमिच्छाम्यशेषतः॥

तथा ५९ अध्याये—

एवं तु भारतं वर्षं यथावत् कथितं मुने॥१॥

श्रीमद्भागवते ५ स्कन्धे १९ अध्यायेऽपि—

भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः सन्ति बहवः॥१८॥

अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्य-मानुष-नारकगतयो बह्व्य आत्मन आनुपूर्वेण सर्वा ह्येव सर्वेषां विधीयन्ते यथावर्णविधानमपवर्गश्चापि भवति॥ १९॥ देवा गायन्ति—

अहो अमीषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिकं स्पृहा हि नः॥ २१॥

किं दुष्कृतैर्नः क्रतुभिस्तपोव्रतै-
र्दानादिभिर्वा द्युजयेन फल्गुना।
न यत्र नारायणपादपङ्कज-
स्मृतिः प्रमुष्टातिशयेन्द्रियोत् सवात् ॥ २२ ॥
कल्पायुषां स्थानजयात्पुनर्भवात्।
क्षणायुषां भारतभूमयो वरम्।
क्षणेन मर्त्येन कृतं मनस्विनः।
संन्यस्य संयान्त्यभयं पदं हरेः ॥२३॥

भारतशब्दो भरतवंशोत्पन्नतत्तत्पुरुषवाचकोऽपि, यथा—
तत्रैव श्रीमद्भागवते ( ५।१९ )—

"एवं तव भारतोत्तम (जम्बूद्वीपवर्षविभागो यथोपदेशमुपवर्णित इति ॥३१॥

अत्र "भारतोत्तम" इति भरतगोत्रापत्यानि पुमांसो भारताः, भरत-वंशीयास्तेषु भारतेषु उत्तमो भारतोत्तमस्तत्सम्बुद्धौ हे भारतोत्तम इति वृत्त्यर्थो ज्ञेयोऽस्ति।

एवं गीतायां महाभारतस्यान्यान्यस्थले च सर्वत्राप्येतदर्थेऽपि भारतशब्दस्य प्रयोगबाहुल्यं दरीदृश्यते—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

अत्र भगवता श्रीकृष्णेनार्जुनं प्रति भारतशब्दस्य सम्बोधने प्रयोगो विहितः। पूर्वोक्ते ( ५।१९।३१ ) भागवतगद्ये, अर्जुनपौत्रं परीक्षितं प्रति श्रीशुकदेवेन महामुनिना कृतो भारतशब्दस्य सम्बोधने प्रयोगोऽपि दृश्यत एव।

भारतशब्दस्य भरतवंशीयार्थे भरतकुलजार्थे भरतकुलजातव्यक्तिविशेषार्थे च क्रियमाणो प्रयोगः सर्वत्रैव प्रायः समुपलभ्यते।
विस्तरभयात्तेषां स्थलानां विवृत्ति दातुं नोत्सहे विदितचरमेवैतत्सर्वसाधारणानामपि।

अग्निविशेषणत्वेन भारतशब्दस्य दृष्टप्रयोगतया अग्निवाचकोऽपि भारतशब्दः ऋग्वेदे—( २।७।१ )

श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर।
वसो पुरुस्पृहं रयिम् ॥

अत्र सायणः—हे अग्ने यविष्ठ युवतम हे भारत। भरता ऋत्विजः। तेषां सम्बन्धी भारतः (तत्सम्बुद्धौ हे भारत ) ते अध्वहर्वादिभिः, मंथनहविः स्तोत्रादिना

व्याप्रियमाणत्वात्। तादृश हे वसो वासक व्याप्त वा एवंरूपाग्ने श्रेष्ठम् अति 'प्रशस्यं' द्युमन्तं दीप्तिमन्तं पुरुस्पृहं बहुभिरर्थिभि: स्पृहणीयं रायम् आ भर आहर।

त्वन्नो असि भारताग्ने वशाभिरुक्षभि:।
अष्टापदीभिराहुतः (ऋ० २।७।५)

हे भारत ऋत्विजां पुत्रस्थानीय अग्ने न: अस्मदीय: त्वं वशाभि: वन्ध्याभिर्गोभि: उक्षभि: सेक्तृभिर्बलीवर्दैः, अष्टापदीभि: गर्भिणीभि: आहुत: आराधित: असि, इति सायण:। अत्रापि भारतपदेन अग्निर्गृहीतो दृश्यतेऽर्थदृष्ट्या सुस्पष्टमेव।

उदग्ने भारत द्युमदजस्रेण दविद्युतत्।
शोचा वि भाह्यजर ॥ ऋ० ६।१६।४५ ॥

हे भारत हविषां भर्त्त: अग्ने उत्शोच उद् गततर दीप्यस्व। तदेव विवृणोति। हे अजर जरारहिताग्ने दविद्युतत् द्योतमानस्त्वं द्युमत् द्युमता दीप्तिमता। 'सुपां सुलुक्' इति तृतीयाया लुक्। अजस्रेण अविच्छेदेन तेजसा वि भाहि विशेषेण प्रकाशस्व। यद्वा भातिरत्रान्तर्भावितण्यर्थ:। त्वं प्रथममुद्दीप्यस्व पश्चादात्मीयेन तेजसा सर्वं जगत् प्रकाशयेति योजनीयम्। तथैवात्रापि भरतकुलवाचकोऽपि भारतशब्द: ऋग्वेदे—

य इमे रोदसी उभे अहमिन्द्रमतुष्टवम्।
विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम् ॥ (ऋ०३।५३।१२)

य: अहं विश्वामित्र: उभे इमे रोदसी द्यावापृथिव्यौ, इन्द्रमतुष्टवं स्तावयामि। द्यावापृथिवीभ्यामिन्द्रस्य स्तोत्रं मया कारितमित्यर्थ:। यद्वा उभयो:, रोदस्यो:, अन्तरवस्थितम् इन्द्रं स्तौमि। स्तोत्रं कुर्वाणस्य विश्वामित्रस्य मम इदम् इन्द्रविषयं ब्रह्मस्तोत्रं भारतं भारतकुलं जनं रक्षति पालयति अतुष्टवम्। ष्टुञ् स्तुतौ। ण्यन्तस्य लुङि चङि रूपम्। यद्वृत्तयोगादनिघात:। भारतम्। भरतशब्द उत्सादि:। नित्वादाद्युदात्त:।

अत्र सायणेन भारतं भरतकुलं जनमिति ब्रुवता भारतशब्दस्य कुलवाचकत्व सुस्पष्टतयाभाणि।

तदेव तु स्पष्टं महाभारतेऽपि आदिपर्वणि (७४ अ०)—

दुष्यन्तस्तु ततो राजा पुत्रं शाकुन्तलं तदा।
भरतं नामत: कृत्वा यौवराज्येऽभ्यषेचयत् ॥१४॥

स राजा चक्रवर्त्यासीत् सार्वभौम: प्रतापवान्।
भारताद् भारती कीर्तिर्येनेदं भारतं कुलम् ॥१५॥
(महाभा० आदिप० ७४ अ०)

एवञ्चान्यत्रापि बहुत्र येषां सङ्ग्रहो विस्तरभयान्नोचितोऽत्र प्रतीयते।

**भारतशब्दस्य देशवाचकत्वे प्रवृत्तिनिमित्तम्—**

एवं बह्वर्थाभिधायिनि सत्यपि भारतशब्दे अत्र प्रसङ्गे भारतशब्दो ह्ययं देशवाचकत्वेनेव गृहीतोऽस्ति। अस्य भारतदेशस्य भारतेति नाम्नः प्रवृत्तिनिमित्ते विचार्यमाणे बहवः पक्षाः पुरः स्फुरन्ति, विचारिता विचार्यमाणा विचारपथ-मागच्छन्तश्चेति। किन्तु तेषां सर्वेषामुपस्थानं नैव सुशकमिति द्वित्रान् पक्षानव-श्यमुपस्थापयितुं निर्णेतुं प्रयतामि।

एकः पक्षोऽयमस्ति यत्—

(१) जगतः सर्वं प्रथमं या मानवी सृष्टिः जाता सा अत्रैव (भारते वर्ष एव जाता), ततः क्रमशः अन्यत्रापि विस्तारोऽस्या जात इति। तदानीमत्र मनुर्हि सृष्टेरधि-पतिरासीत्। सर्वां सृष्टिं मनुरेव बिभर्त्ति स्म। सर्वासां तदानीन्तनीनां प्रजानां भर्त्ता ( धारकः पालकश्च ) मनुरासीदतो हि प्रजानां भरणाद् मनुर्हि भरतशब्देन प्रसिद्धो बभूव। ततो हि गच्छति काले भरतेति मनुनाम्नैव सृष्टेः प्रथमसीमागत-भूविशेषस्यास्य भारतम् इति देशनाम जातमिति।

यथाह ब्रह्मपुराणे—

भरणाच्च प्रजानां वै मनुर्भरत उच्यते।
निरुक्तवचनाच्चैव वर्षं तद् भारतं स्मृतम्॥
( ब्रह्मपु० पूर्वभागे ४८।१० )

केचिद्धयेवं कथयन्ति—

अत्र सृष्टेरादिभूते स्थाने वर्तमानस्य जनस्य जातेर्वा नाम भरत आसीत्, स जनो विचरन् यत्र प्रतिष्ठितः स भूप्रदेशो भरतजनपदेति नाम्ना ख्यातः। शनैः शनैस्तस्य विस्तारो भूत्वा समस्तोऽयमादिसृष्टिभूभागो भारतं भारतवर्षं चेति नाम्ना प्रसिद्धः।

अथ च तृतीये पक्षे—

अग्नेर्नाम भरतः, यतो हि तस्य च मनुष्याणां भरणपोषणकरणं वैशिष्ट्यमास्ते। अग्निर्हि प्रजाः भरतेऽतोऽग्निर्भरत इति।

अत्र महाभारतमपि साक्षी—

'भरतेऽसौ प्रजाः सर्वास्ततो भरत उच्यते॥' ( महाभा० वनपर्व २११।१ )

पूर्वमत्र सर्वत्र यज्ञा अनवरतं क्रियामाणा आसन्। तत्र ( यज्ञेषु ) अग्निर्हि मुख्यं तत्त्वमस्ति। अग्निश्च भरतः कथ्यतेऽतस्तस्याग्नेरेव भरतेति नाम्ना देशस्यास्य 'भारत' इति नाम जातमिति केषाञ्चिदाशयः।

दौष्यन्तेः शाकुन्तलेयस्य भरतस्य नाम्ना प्रसिद्धिप्रवादः। केचिच्च कथयन्ति प्रमाणयन्ति चापि महता समारम्भेण यद् दुष्यन्तपुत्रस्य शकुन्तलायां जातस्य

महाराजभरतस्यैव नाम्ना महादेशस्यास्य भारतं भारतवर्षमिति च नाम जातमिति निश्चप्रचम्। मयापि बालकालतो बहुत्र सभायां महता उद्घोषेण कथयता-मुपदेशकानां बहूनां व्याख्यातॄणामुखाच्छ्रूयते स्म यद्दौष्यन्तेर्महाराजभरतस्यैव नाम्ना अयं महादेशो भारतं नामाभूदिति। सामान्या एव नहि केचिद् विशिष्टा विचारका उच्चपदाधिष्ठिता विद्वांसोऽप्येवं ब्रुवते लिखन्ति प्रथयन्ति चेति। महाविचारकाः पुरातत्त्ववेत्तारो डॉ० श्रीवासुदेवशरणअग्रवालमहोदयाः, काशी हिन्दूविश्वविद्यालये इण्डोलाजीविभागाध्यक्षा अपि कथयन्ति स्म[1]। तेन 'भारत की मौलिकता' नाम्नि पुस्तके टिप्पण्यां व्यलेख्यपि यत् दौष्यन्तेः शकुन्तलापुत्रस्यैव नाम्ना देशस्यास्य नाम भारतेति।

एवं हि उत्तरप्रदेशे[2] यदा जगमोहनसिंहनेगी वनविभागस्योपमन्त्री आसीत् तदा तेन लिखितो लेख एक एतादृशो राजकीयसूचनाविभागद्वारा प्रसार्यमाणो बहुषु समाचारपत्रेष्वपि 'भारतभूमि का भारतवर्ष नाम क्यों पड़ा' इति शीर्षकेण प्रकाशितो बभूव। यत्र देशस्य नाम दुष्यन्तपुत्रस्य शाकुन्तलेयस्य भरतस्य नाम्नैव 'भारत' इति जातमिति साधितमासीत्। एकेनान्येनापि विदुषा १० मार्च १९५६ दिनाङ्कस्य 'आज'नाम्नि दैनिकपत्रे तथैव लिखितम्। पूर्वोक्तो नेगीमहोदयस्तु एतदपि लिखितवान् यद् महाराजभरतस्य शाकुन्तलेयस्य दौष्यन्तेर्नाम्ना देशस्य नाम भारतं जातम् तस्य जन्मस्थानं कोटद्वार[3] ( गढ़वाल )तः ६ मीलात्मके पर्वत-प्रान्तेऽस्ति। यतो हि मालिनी नदी विजनौर-जनपदस्य समतलं प्रविशति। तस्या एव नद्यास्तटे महर्षेः कण्वस्य आश्रम आसीत्। यस्मिन् तस्य भरतस्य जन्म जातम्। यद्यप्येतस्मिन् समये तत्र तपस्विनां वासो नास्ति, किन्तु तत्र वनाश्रमस्य मृगपरिवाराणां वंशजा बाहुल्येन उपलभ्यन्त इति तत्स्थानं डॉ० सम्पूर्णानन्द-महोदयेन, उत्तरप्रदेशमुख्यमन्त्रिणादर्श्यपि, तथा चोक्तञ्चापि यत् महत्या लज्जाया अयं विषयो यदेतत् स्थानमस्माकं देशवासिभिरपरिज्ञातं तिष्ठेदत्रैव महतो भरतस्य कोऽपि स्मारको न भवेदिति।

तथैव "हमारा देश वैदिक भारत'[4] नाम्नि पुस्तके डाक्टरसत्यनारायण-महोदयेनापि भारतस्य नाम दौष्यन्तेर्भरतस्य नाम्नैव जातमिति व्यलेखि। इमे

---

१. सन्मार्गप०, व० १२, अं० २४, पृ० ४६६, संवत् २०१३, अषाढकृ० १०, मङ्गलवारे दिना० ३।७।५६।

२. सं० मा० प० व० १२, अं० १६, दि० १०-४-१९५६, सं० २०१२, चैत्रकृ० १४, मङ्गल० पृ० ३७५।

३. सं० मा० प० व० १२, अं० १५, दि० ३१-१-१९५६, सं० २०१२, माघकृ० ४, मंगल० पृ० २७६। ४.

पूर्वनिर्दिष्टा महानुभावाः, अन्ये च महान्तो विचारका इतिहासज्ञाः सन्ति। नाहमेनानधिक्षेप्तुं कामये, तथापि इदं वक्तुमवश्यं प्रभवामि यदेभिः सर्वैः प्रायो द्वित्राणि समानानि एव प्रमाणानि साक्षित्वेन समुपस्थापितानि तान्यवश्यमेव पुनर्विचारणीयानि सन्ति। "युक्तियुक्तं वचोग्राह्यं न ग्राह्यं गुरुगौरवात्" इत्यभियुक्तानामाज्ञानुसारेण मया तैर्दत्तानि प्रमाणान्येव विचार्यन्ते। तानि प्रमाणानि समीक्ष्य मम दृष्टिपथमागतानि, यान्यन्यानि प्रमाणानि सन्ति तानि समुपस्थाप्य अन्येषामपि कृते नूतनविचारस्य समग्रो मया दास्यत इति। अस्तु—

दौष्यन्तस्य शाकुन्तलेयस्य महाराज-भरतस्य नाम्ना देशस्यास्य भारतं भारतवर्षं वेति नामकरणं जातमिति ब्रुवन्तः समर्थयन्तो महानुभावाः प्रायोऽधोङ्कितमेव प्रमाणत्वेन प्रस्तुवन्ति—

शकुन्तलायां भरतो यस्य नाम्ना तु भारतम्। (वायु० पु० ६६।१३४)
शकुन्तलायां बली यस्य नाम्ना तु भारताः। (अग्निपुराण २३७।७)

किन्तु दौष्यन्तेः शाकुन्तलेयस्य महाराजभरतनाम्ना भारतेति देशनामप्रसिद्धमिति ब्रुवतां समर्थयतां प्रमाणत्वेन उपस्थापितम्—

चक्रवर्त्ती ततो जज्ञे दौष्यन्तिर्नृपसत्तम॥
शकुन्तलायां भरतो यस्य नाम्ना तु भारतम्।
(वायुपुराणे ३ अनुषङ्गपादे ६६ अध्याये)

इति दीयमानं वाक्यमपि न प्रमाणकोटिमारोहति।

अन्यस्यापि कस्यचित्पुष्टप्रमाणस्याभावाद् नायं दौष्यन्तिर्भरतोऽस्य देशस्य नामकरणे कथमपि हेतुभूतः। भरतो ह्ययमपि सम्राट् सर्वगुणसम्पन्नः श्लाघ्यस्तथापि तस्य नाम्ना देशस्य नामकरणं न जातम्। उपर्युक्तेनानेन 'शकुन्तलायां भरतो यस्य नाम्ना तु भारतम्' इति वायुपुराणीयेन वाक्येन शाकुन्तलेयभरतनाम्ना कुलस्यैव नाम 'भारतम्' जातमित्येव सिद्ध्यति। यतो हि तत्रैव वायुपुराणे, अन्यत्र—

ऋषभाद् भरतो जज्ञे वीरः पुत्रशताग्रजः।
सोऽभिषिच्याथ भरतं पुत्रं प्राव्राज्यमास्थितः॥
हिमाह्वयं दक्षिणं वर्षं भरताय न्यवेदयत्।
तस्मात्तद् भारतं वर्षं तस्य नाम्ना विदुर्बुधाः॥
(वायु० पु० ३३।५१-५२) पृ० १४७)

आभ्यां पद्याभ्यामृषभदेवपुत्रस्यैव भरतस्य नाम्ना देशस्य नाम भारतमभूदिति सुस्पष्टमेव प्रतिपादितं प्रत्यक्षतो दृश्यते। हिमवर्षं वा, अजनाभवर्षम्—इति नाम्ना प्रथितस्य देशस्य नाम अस्यैव भगवदृषभदेवपुत्रस्य भरतस्य नाम्ना भारतं

भारतवर्षं वा बभूवेत्यत्र बहूनिं प्रमाणानि विलोक्यन्ते। तेषु केषाञ्चिदुउपस्थापनमत्र स्थाने मन्ये।

श्रीमद्भागवते (५।३।१) महाराजनाभिपुत्रो भगवान् ऋषभदेवः (भाग० ५।४।२) भगवतो हि ऋषभदेवस्य शतं पुत्राः (भाग० ५।४।८) उक्तास्ततस्तानधिकृत्याह—

येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद्येनेदं वर्षं भारतमिति व्यपदिशन्ति। (भागव० ५।४।९)

पुनश्च तत्रैव भागवते—

अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति (भाग० ५।८।३)

मार्कण्डेयपुराणेऽपि तमेव ऋषभदेवमुपवर्ण्य आह—

हिमाद्रेर्दक्षिणं वर्षं भरताय ददौ पिता (पिता ऋषभदेव इति)।
तस्माच्च भारतं वर्षं तस्य नाम्ना महात्मनः॥ (मार्क० पु० अ० ५७)

नारसिंहपुराणे च—

नाभेः पुत्रस्तु ऋषभो भरतश्चाभवत्ततः।
तस्य नाम्ना त्विदं वर्षं भारतञ्चेति कीर्त्यते॥
(नारपु० ३० अध्याये)

अग्निपुराणे—

ऋषभो मेरुदेव्यां च ऋषभाद् भरतोऽभवत्।
भरताद् भारतं वर्षं भरतात् सुमतिस्त्वभूत्॥ (१०७।९-१०)

विष्णुपुराणे[1]—

हिमाह्वयं तु वै वर्षं नाभेरासीन्महात्मनः।
तस्यर्षभोऽभवत् पुत्रो मेरुदेव्यां महाद्युतिः॥
ऋषभाद् भरतो यज्ञे ज्येष्ठः पुत्रशतस्य सः।
कृत्वा राज्यं स्वधर्मेण तथेष्ट्वा विविधान्मखान्॥
अभिषिच्य सुतं वीरं भरतं पृथिवीपतिः।
तपसे स महाभागः पुलहस्याश्रमं ययौ॥
वानप्रस्थविधानेन तत्रापि कृतनिश्चयः।
तपस्तेपे यथान्यायमियाज स महीपतिः॥
तपसा कर्षितोऽत्यर्थं कृशो धमनिसन्ततः।
नग्नो वीटां मुखे कृत्वा वीराध्वानं ततो गतः॥

---

१. वि० पु० २।१।२७–३२।

ततश्च भारतं वर्षमेतल्लोकेषु गीयते।
भरताय यतः पित्रा दत्तं प्रातिष्ठता वनम्॥

लिङ्गपुराणे[१]—

स्वायम्भुवस्य च मनोः पौत्रास्त्वासन् महाबलाः।
प्रियव्रतात्मजा वीरास्ते दशेह प्रकीर्तिताः।
अग्नीध्रश्चाऽग्निबाहुश्च मेधामेधातिथिर्वसुः॥
जम्बूद्वीपेश्वरं चक्रे आग्नीध्रं सुमहाबलम्।
तस्य पुत्रा बभूवुस्ते प्रजापतिसमा नव॥
ज्येष्ठो नाभिरिति ख्यातस्तस्य किम्पुरुषोऽनुजः।
नाभिस्त्वजनयत्पुत्रं मेरुदेव्यां महामतिः।
ऋषभं पार्थिवश्रेष्ठं सर्वक्षत्रस्य पूजितम्॥
ऋषभाद् भरतो यज्ञे वीरः पुत्रशताग्रजः।
सोऽभिषिच्याथ ऋषभो भरतं पुत्रवत्सलः॥
हिमाद्रेर्दक्षिणं वर्षं भरताय न्यवेदयत्।
तस्मात्तु भारतं वर्षं तस्य नाम्ना विदुर्बुधाः॥

एवमेव ब्रह्मपुराणे (१४।६२) नारदपुराणे (पूर्व० : ४८:५) वाराहपुराणे (७४ अ०) गरुडपुराणे (पू० ५४ अ०) सर्वत्रैव कथितमस्ति। अतो हीदं कथितुमवश्यं दृढतया निर्णयामि यद् ऋषभदेवपुत्रस्य भरतस्यैव नाम्ना देशस्य नाम भारतम्, भारतवर्षं वा बभूवेति दिक्।

अथ च पूर्वोक्तः कोऽयं भारतदेश इति प्रश्ने सोऽयमेव महादेशो भारतं नाम, यत्र च वयम्—लोकधारकसार्वभौममानवतासम्बर्द्धन-संरक्षण-समुपयोगि-स्व-स्वकर्त्तव्यानुष्ठाने ऐहिकामुष्मिक-सर्वविधकल्याणकृद्धर्मकर्म संस्कृतिसभ्यतादि-समस्तविषये वेदादिशास्त्रैकप्रमाणाः, गो-गङ्गा-गायत्री-सीता-सावित्रीरामकृष्ण-परशुराम-कपिलकणादविश्वामित्रभरद्वाजगर्गगौतमशाण्डिल्यवत्सपराशरवशिष्ठाश्व-लायनकौशल्यशिबिरन्तिदेवादिनामश्रवणादौ बद्धादराः, परलोकपुनर्जन्म-विश्वासभाजः, मानवार्यहिन्द्वादिविशिष्टजातिवाचकपदैः सम्बोध्यमानाः, परम्परया भारतीसन्ततिरूपेण ख्याताः, पितृ-पितामह-प्रपितामहादिक्रमेणानादिकालतः (सृष्ट्यादित एव) निवसामः—

"उत्तरे यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः॥ (विष्णुपु० २।२१)

इतीमामेव भूमिमात्मनो मातृभूमिं पितृभूमिं धर्मकर्मभूमिं राष्ट्रभूमिञ्च मन्वाना वसामः। यत्राधुनापि प्रादुर्बभूव शङ्कराचार्याः, रामानुजाचार्याः, वल्लभाचार्या,

१. लिं० पु० पू० ४६, ४७।

भगवन्तो गौतमबुद्धाः, सम्राट्, अशोकः, महात्मानो गान्धिप्रभृतयोऽनेके राजनीति-नेतारो धर्मनेतारः सर्वमपि जगदुपकृतवन्तः स्वमहिम्नेति।

**भारतस्य सीमा**

तस्यास्य भारतमहादेशस्य सङ्कुचिता या सम्प्रति सीमा[१] दृश्यते सेयमेतावत्येव नासीत्सीमास्य महादेशस्य। अस्य महादेशस्य पूर्व-पश्चिम-सीमे ( सीमानौ ) विस्तृते, आस्ताम्। भारतस्य पूर्वसीमा चीनसागर आसीत्, यस्यान्तर्गताः ब्रह्मदेश-( बर्मा ) श्यामप्रभृतयोऽप्यासन्। भारतस्य पश्चिमसीमा भूमध्यसागरं (लालसागरं) यावद् आसीद्।

अस्माकं दौर्भाग्यान्निर्बलतातो वा १९४७ ईशवीये वर्तमानमपि भारतं खण्डयित्वा समुत्पन्नम्। पश्चिमपाकिस्तानस्तथा विलोचिस्तान-ईरान-मेसोपो-टामिया-अरबेत्याद्याख्या देशा अपि सम्मिलिता अभूवन्। इत्थं पूर्वसमुद्रतः ( चीनसागरतः ) पश्चिम समुद्रं भूमध्यसागरं ( लालसागरं ) यावत् भारतदेशः कथ्यते स्म। अत्र विषये बहूनि प्रमाणानि सन्ति किन्तु सर्वेषां तेषां समुपस्थापनस्यावसरो विस्तर-भयान्नास्ति एकमेव प्रमाणमत्र पर्याप्तं भविष्यतीति कृत्वा तदेव समुपस्थाप्यते।

भारतस्य दक्षिणोत्तरसीमा आसेतुहिमालयं ( कन्याकुमारीतो हिमाचलं ) यावत् प्रसिद्धैवास्ते[२]। तत्र नास्ति कोपि सन्देहावसरः, किन्तु भारतस्य पूर्वपश्चिमसीमा एव विचारणीयास्ति। तत्र विदितचरमेतद् यदार्यावर्तो भारतदेशान्तर्गत एवास्ति। तदेनमार्यावर्तं निर्दिशन्मनुराह—

आसमुद्रात्तु वै पूर्वादासमुद्रात्तु[१] पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः॥ (मनुस्मृ० २।२२)

अत्र पूर्वसमुद्रपदेन वर्तमानभारतस्य पूर्वस्यां समुपलभ्यमानः पूर्वसमुद्रः ( बङ्गाल की खाड़ी ), पश्चिमसमुद्र, अरबसागरश्च नाभीष्टौ स्तः, अपि तु चीनसागरः भूमध्यसागरः (लालसागरः) एवाभीष्टौ स्तः। यतो हि—भूगोलमानचित्रे विन्ध्याचल-हिमालयेति निर्दिष्टगिर्योस्तयोरन्तरतः ( मध्यभागतः ) पूर्वस्यां च सूत्रदानेन सरलरेखानयने सरलपङ्क्तौ पूर्वोक्तौ तावेव द्वौ चीनसागर-भूमध्यसागर ( लालसागरेति ) नामानौ समुद्रौ एव समागमिष्यतो नान्यौ। बङ्गाल की खाड़ी-अरबसागरेति नामानौ तु समुद्रौ—रेखातो दक्षिणस्यां भविष्यतः।

---

१. ··· ··सीमा-सीमे स्त्रियामुभौ। ··· ··· ···अमरको० २।२।२० रामाश्रमी पृ० १२३ हि० पृ० ६३।

२. उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः॥ विष्णु पु० अंश २ अध्याय ३।१ पृ० १४३।

अतो भगवान् मनुः सुस्पष्टमभिधत्ते विस्तृतां भारतस्य पूर्वपश्चिमसीमानम्, पूर्वस्यां चीनसागरं पश्चिमायां भूमध्यसागरं ( लालसागरमिति ) यावत् ।

तस्मात् इयं समस्ता भूमिः शास्त्रे लोके च भारतं नाम्ना प्रसिद्धा आसीत् । यस्याः सङ्कुचितायां वर्तमानायां सीमायां सम्प्रति वयं वर्तामहे ।

---

**भारतीय-शब्दः**

भारते भवम् इत्थं भारतशब्देन निष्पन्नोऽयं भारतीयशब्दः । "जन्महरौ भवौ" इति, ( ३।३।२०६ ) अमरकोशानुसारेण "भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः" इति मेदिनीकोशानुसारेण अर्थवतो भवशब्दस्यार्थे वर्तमानः भारतीयशब्दोऽत्र भारते जन्मवतः, भारते सत्तावतः, भारते प्राप्तस्य पदार्थस्य वाचकः ।

**कर्म**

क्रियत इति विग्रहे भावे कर्मणि चार्थे "सर्वधातुभ्यो मनिन्" इत्युणादि ४।१४५ सूत्रेण मनिन् प्रत्यये कृते कर्मशब्दो निष्पद्यते । कर्मशब्दोऽयं विभिन्नदृष्ट्या नानाविधार्थकः ।

"कर्मक्रिया तत्सातत्ये गम्ये स्युरपरस्पराः" (३।२।१५) इत्यमरकोशानुसारेण कर्मशब्दः क्रियाशब्दश्च अनर्थान्तरवचनः ।

वैयाकरणदृष्ट्या कर्मत्वं च परसमवेतधात्वर्थजन्यफलशालित्वं नाम । यत् क्रियते तत् कर्म इति प्रसिद्धेः । करोतेर्निखिलक्रियावाचकत्वात् कर्तुर्व्यापारैर्यत् साध्यते तत् कर्म नाम । अतएव क्रिया व्याप्यं कर्म उच्यते च तत् कर्म चतुर्विधम् ।

१—**निर्वर्त्यम्**—यथा घटं करोति, पुत्रं प्रसूते ।

२—**विकार्यम्**—तदपि द्विविधम् ।

(क) **प्रकृतेरुच्छेदकं**—यथा काष्ठं भस्म करोति ।

(ख) गुणान्तराधायकम्—यथा सुवर्णं कुण्डलं करोति ।

३—**प्राप्यम्**—यथा ग्रामं गच्छति, चन्द्रं पश्यति ।

४—**अनीप्सितं**—यथा पापं त्यजति ।

न्यायवैशेषिकदृष्ट्या च कर्म-द्रव्यगुणकर्मसामान्यविशेषसमवायाभावेति सप्तसु पदार्थेषु तृतीयः पदार्थः । तच्च तत्र उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनेति भेदैः पञ्चविधम् ।

अन्यत्र सात्त्विक-राजस-तामस-भेदेन त्रिविधम्, यागहिंसादि च कर्म उच्यते । ज्योतिर्विदृष्ट्या लग्नाद् दशमं स्थानं दशमं लग्नं कर्म कथ्यते । "तैर्लग्नाम्ब-

द्यूनकर्माणि केन्द्रमुक्तं च कण्टकम्" इति कर्मणः केन्द्रकण्टकसंज्ञापि क्रियते।

वेदे, वेदस्य प्रायोगिके रूपे कर्मकाण्डेऽत्र प्रसङ्गे नित्य-नैमित्तिक-काम्य-प्रायश्चित्त-निषिद्धभेदात् पञ्चविधम्। प्रायश्चित्तस्य च नैमित्तिकेऽन्तर्भावात् चतुर्विधमेव प्रायःकर्म। "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" (यजु। ४०।२) इत्यस्य भाष्ये अग्निहोत्रादीनि कर्माणीति प्रतिपादितत्वात्। अथ च कर्मपदेन ऋग्वेद (१।३१।८, १।१७३।६६।३७।२) प्रभृतिषु बहूनां मन्त्राणां भाष्यकारैर्यज्ञादीनां लोकपरलोकाभ्युदयकारकालौकिककार्याणां मन्त्रब्राह्मणात्मकवेदतन्मूलकशास्त्रेषु प्रतिपादितानां विभिन्नधार्मिकव्यापाराणाम् अदृष्टसाधकानां निर्देशात् तान्येव तत्त्वान्यत्र कर्मपदवाच्यानि कर्मपदेनात्र गृहीतानि सन्ति।

**काण्डम्**

कनतीति विग्रहे कनी दीप्तौ। कनी दीप्तिकान्तिगतिषु (सि० कौ० पृ० ४३४, भ्वादि प० से०) कन् धातोः, 'अमन्ताड्' डडः (उ० १।११४) सूत्रेण प्रत्ययेऽनुबन्धलोपे 'क्वादिभ्यः कित्' (उ० १।११५) सूत्रेण कित्संज्ञायाम् "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५। इति अनुनासिकान्तस्याङ्गस्य कन् इत्यस्य उपधायाः दीर्घे, अनुस्वारपररूपादिकार्ये काण्डमिति शब्दो निष्पद्यते।

'काण्डो' स्त्री दण्डबाणार्णव-वर्गावसरवरिषु' इति (३।३।४३) अमरकोषानुसारेण तथा शरवृक्षः, अर्वा, कुत्सितः, वर्गः (वर्गश्च एकजातीयसमवायः)। यथाह भागवते—'क्रिया काण्डेषु निष्णातो योगेषु च कुरूद्वह'। काण्डर्षिः, काण्डस्य वेदविभागस्य ऋषिः। यद्वा काण्डेषु, एकजातीयक्रियादिसमवायेषु ऋषिर्विचारकः इति शब्दकल्पद्रुमोक्त्यनुसारेण—

'काण्डं चावसरे चाणो नाले स्कन्धे च शाखिनाम्।
…स्तम्बे रहसि वर्गे च।

इति धरणिकोशानुसारेण च काण्डशब्दो हि अनेकार्थः। तेषु अनेकार्थेषु अत्र एकजातीयक्रियासमवायः वर्गः (एकजातीयसमवायो वा) अर्थो गृहीतोऽस्ति।

**स्वशब्दः**

स्वशब्दः स्वनतीति विग्रहे स्वन शब्दे इति (भ्वादि प० सं०) धातोः "अन्येभ्योऽपि दृश्यते" (वा ३।२।१०१) इति डप्रत्यये स्वशब्दः सिद्ध्यति। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वो स्त्रियां धने। 'अमरकोशात्० (३।२११) "स्वो ज्ञातात्मनोः स्वं निजे घने" हेमचन्द्रकोशात्, स्वः स्यात् पुंस्यात्मनि ज्ञातौ। त्रिष्वात्मीये स्त्रियां धने।' इति मेदिनीकोशात्। सगोत्र बान्धव-ज्ञाति-बन्धु स्व-स्वजनाः समाः। इति, अमरकोशाच्च (२।६।२४)। सत्यपि स्वशब्देऽनेकार्थे च, आत्मार्थे गृहीतोऽस्ति कर्मकाण्डपक्षे।

**रूपशब्दः**

रूप्यतीत्यर्थे 'रूप विमोहने' दिवादिपरस्मैपदि सेड् धातोः ( सि० कौ० पृ० ४७६ ) अच् प्रत्यये कृते सिद्ध्यति ।

**शब्दकल्पद्रुमे**

रूपम्—क्ली० ( रूप्यते कीर्त्यते रौतीति वा खष्पशिल्पशष्पेति' ( उणादि ३।२८ ) इति पः दीर्घश्च । रूपयतीति । ( रूप् अच् वा ) स्वभावः । सौन्दर्यम् । नामकम् । पश्वुः शब्दः । ग्रन्थावृत्तिः । नाटकादिः । आकारः ।
यथा मनुः—

तदध्यास्योद्वहेद् भार्यां सवर्णां लक्षणान्विताम् ।
कुले महति सम्भूतां हृद्यां रूपगुणान्विताम् ॥ ७।७७ ॥

**रूपन्तु षोडशविधम्**

ह्रस्वम् । दीर्घम् । स्थूलम् । चतुरस्रम् । वृत्तम् । शुक्लम् । कृष्णम् । नीलमरुणम् । रक्तम् । पीतम् । कठिनम् । चिक्कणम् । श्लक्ष्णम् । पिच्छिलम् । मृदु । दारुणम् ।

अङ्गान्यभूषितान्येव केनचिद् भूषणादिना ।
येन भूषितवद् भान्ति तद् रूपमिति कथ्यते ॥

इत्युज्ज्वलनीलमणिः । इत्येवं विकृतत्वात् बह्वर्थकोऽपि रूपशब्दोऽत्र स्वाभाविकाकर्षणशीललोकपरलोकाभ्युदयसाधककर्मकाण्डतत्वाकारार्थपरः ।

**अध्ययनम्**

अधीयतेऽर्थे अधिपूर्वकात् इङ् अध्ययने ( अदा० आ० अ० ) धातोः भावे ल्युटि प्रत्यये, अध्ययनशब्दो निष्पन्नो भवति । अध्ययनशब्दोऽयं गुरुमुखाद् आनुपूर्वी-श्रवणोच्चारणमननाद्यर्थे प्रसिद्धोऽप्यत्र विवेचनपूर्वकविवरणप्रकाशनेऽर्थे स्वीकृतोऽस्ति ( मतोऽस्ति ) ।

इत्थं व्यस्तरूपेण भरत-भारत-भारतीयकर्मकाण्ड-स्वरूप अध्ययनेतिपदाना-मर्थप्रकाशेन शोधविषयनाम्नः "भारतीयकर्मकाण्डस्वरूपाध्ययनम्" इत्यस्य समस्त-पदस्य समासवृत्त्यर्थावबोधकानि लौकिकवाक्यानि ( विग्रहवाक्यानीति यावत् ) अधोङ्कितानि चैवं भविष्यन्ति—

बिभर्त्तीति भरतः[१] । भरतस्येदं भारतम्[२] । भारते भवानि भारतीयानि[३] । क्रियन्त इति कर्माणि[४] । कनन्तीति काण्डानि[५] । कर्मणां काण्डानि, कर्मकाण्डानि । भारतीयानि च तानि कर्मकाण्डानि भारतीयकर्मकाण्डानि । स्वनतीति स्वः[६] । रोपयतीति रूप्यति वेति रूपम् । स्वस्य रूपम्, स्वरूपम्[७] । भारतीयकर्मकाण्डानां स्वरूपम् भारतीयकर्मकाण्डस्वरूपम् । अधीयत इत्यध्ययनम्[८] । भारतीयकर्मकाण्ड-स्वरूपस्याध्ययनं भारतीयकर्मकाण्डस्वरूपाध्ययनम् ।

भारतवर्षे सत्तावतां कर्त्तव्यतया विहितानां लोकपरलोकाभ्युदयसाधक-क्रियासमवायानां तत्वाकारविशेषस्य विवेचनपूर्वकप्रकाशनम् एव भारतीयकर्म-काण्डस्वरूपाध्ययनं नामेति, निष्कर्षार्थः शोधविषयनाम्नो बोध्य इति दिक् ।

---

१. भरतशब्देन, अत्र प्रसङ्गे पूर्वोक्तः, अजनाभवर्षाधिपतेर्यज्ञावतारस्य महाराजस्य भगवत ऋषभदेवस्य पुत्रो महाराजो भरत एव । भरतो यो हि अन्यस्मिन् अग्रे जन्मनि ब्राह्मणवंशे जातो ज्ञानातिशयेन जडभरतेति नाम्ना लोके ख्यातो बभूवेति ।

२. भारतशब्देनात्र पूर्वं हिमवर्षं ततोऽजनाभवर्षं तदनन्तरं चार्षम् भरतसम्बन्धेन ख्यातः महादेशोऽसौ गृहीतोऽस्ति यस्मिन् वयं वसाम इति ।

३. भारतीयशब्देन भवशब्दस्य पूर्वोक्तप्रकारेण जन्मसत्ताद्यर्थात् कारणात् भारते प्रादुर्भूतानि, भारते सत्तावन्ति, भारते करणीयानि कर्मभूमित्वादस्य भारतवर्षस्य भारते, एव कृतानि सन्ति फलदायकानि तत्त्वानि ।

४. पूर्वोक्तेन कर्मपदार्थविवेचनेन बहुवचने वर्तमानेन कर्मपदेन मन्त्रब्राह्मणात्मकेषु वेदेषु तन्मूलकशास्त्रेषु श्रौतगृह्य-धर्मसूत्र-स्मृति-पुराणागमादिषु, अन्येषु धर्मग्रन्थतया मान्यभारतीयवाङ्मयेषु साक्षात्प्रतिपादिताः तत्तद्वचनच्छायाश्रिता वा लोकपरलोकाभ्युदयसाधकादृष्टशक्तिविशेषोत्पादकाः विभिन्ना धार्मिकव्यवहाराः अघटितघटनाघटकानि अदृष्टाज्ञातविशेषशक्तिमन्ति विभिन्न-व्यापाररूपाणि कानिचन विशिष्टकार्याणि यज्ञयागपूजापाठहोमजपतन्त्रमन्त्रधर्मकर्मस्तुतिप्रभृतिभिर्विविधनामभिः सृष्ट्यादितोऽद्य यावत् स्थितानि तत्त्वानि चात्र कर्मपदेन गृहीतानि (मतानि) बोद्धव्यानि ।

५. पूर्वोक्तकाण्डपदार्थविवेचनानुसारेण बहुवचने वर्तमानस्य काण्डपदस्य वर्गाः (कर्मसमवायाः) एकजातीयक्रियासमवायाः, एकजातीयसमवाया वा बोद्धव्याः ।

६. आत्मा पूर्वोक्तः

७. विमोहकाकारविशेषः । अत्र प्रसङ्गे पूर्वं विवृतो लोकपरलोकाभ्युदयसाधकतत्त्वाकारविशेषः ।

८. विवेचनपूर्वकविवरणप्रकाशनम् ॥



**भारतमेव कर्मभूमिः**

नहि भारतवर्षादन्यत्र कृतानि कर्माणि कर्मकाण्डानि फलानि साधयन्ति। भारतभूमिरेव कर्मभूमिः। अतोऽत्रैव कृतानि कर्माणि फलजनकानि भवन्ति। भारतातिरिक्ताः यावत्यो भूमयः सन्ति सर्वास्ता भोगभूमय एव। अत्र कृतानां कर्मणामन्यत्रापि फलं लभ्यते किन्त्वन्यत्र कर्माणि नानुष्ठीयन्ते फलाभावात्। भारतभूमिः कर्मभूमिरित्यत्र विषये बहूनि वचनानि प्रायः सर्वत्रैव दृश्यन्ते। द्रष्टव्यानि तेषु कानिचन—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः॥ १॥
.............................................
कर्मभूमिरिदं स्वर्गमपवर्गं च गच्छताम्॥ २॥
इतः स्वर्गश्च मोक्षश्च मध्यं चान्तश्च गम्यते।
न खल्वन्यत्र मर्त्यानां कर्मभूमिर्विधीयते॥ ५॥
तपस्तपन्ति मुनयो जुह्वते चात्र यज्विनः।
दानानि चात्र दीयन्ते परलोकार्थमादरात्॥ २०॥
अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने।
यतो हि कर्मभूरेषा ह्यतोऽन्या भोगभूमयः॥ २२॥

—( २ अंशे ३ अ० विष्णुपुराणे पृ० १४३ )

एवमेव श्रीमद्भागवतादिषु बहुत्र प्रमाणानि विलोक्यन्ते भारतभूमेः कर्मभूमित्वसाधकानि। अत एव स्वोन्नत्यै पुण्यकर्मसाधनार्थं पापापनोदनप्रायश्चित्त-कर्मसाधनार्थं वा देवा अपि भारतभूमावत्र आगच्छन्ति तत्तत्कर्मकाण्डानि चानुष्ठीयन्ते स्म च पुराकाले। तत्तु पुराणेषु द्रष्टव्यम्।

इन्द्रजिता मेघनादनाम्ना ख्यातेन रावणपुत्रेण जितस्य देवाधिपतेः शक्रस्यापि स्वोत्थानाय भूमौ यज्ञकरणं, तेन स्वर्गप्राप्तिश्च बाल्मीकीयरामायणे चर्चितास्ति।

शीघ्रं वै यज यज्ञं त्वं वैष्णवं सुसमाहितः॥
पावितस्तेन यज्ञेन यास्यसे त्रिदिवं ततः।
एतच्छ्रुत्वा महेन्द्रस्तु यज्ञमिष्ट्वा च वैष्णवम्॥
पुनस्त्रिदिवमाक्रामदन्वशासच्च देवराट्।

( वा० रा० उ० का० ३०।४८।४९।५० )

दिङ्मात्रमिह निर्दिश्य विरमामि। देवानां भूमौ भारतभूमौ यज्ञकरणं देवानां कुरुक्षेत्रं देवयजनमासीदित्येवंरीत्या शतपथब्राह्मणादौ वैदिके पौराणिकेऽपि वाङ्मये बहुत्र सन्ति। तत एव द्रष्टव्यं, विस्तरभयादेवात्र प्रकरणमिदं संक्षिप्तम्।

## भारतीयकर्मकाण्डानां देशान्तरक्रियाभ्यो वैलक्षण्यम्

कर्मकाण्डं नाम ऐहिकामुष्मिकफलप्राप्तिकामनया क्रियमाणः सम्प्रदायानुसृतो भौतिकपदार्थानुबिद्धो मानवेन्द्रियाणामसत्प्रवृत्तिनिरोधकः समाजानुमोदितो व्यापारः। स च सर्वस्मिन्नपि भूतले यथाकथञ्चित् प्रवर्तत एव। संप्रति परिज्ञातेऽस्मिन् भूतले बहूनि राष्ट्राणि धर्माश्च विद्यन्ते। तेषु सर्वेष्वपि मानवजातेः शान्तये समृद्धये सुस्थित्यै च ये नियमाः सन्ति ते द्विधा विभक्तुं शक्यन्ते। व्यावहारिकाः, श्रद्धात्मकाश्च। तत्र व्यावहारिकान् नियमानादाय शासनस्य सभ्यतायाश्च स्वरूपमवतिष्ठते। श्रद्धात्मकाँश्च नियमानादाय सर्वत्र धर्मसृष्टिः।

अतएव भारतेतरदेशेषु धर्मस्य स्वरूपं क्षेत्रं च व्यावहारिकनियमेभ्यो भिद्यते। ततश्च कर्मकाण्डमामुष्मिकफलपर्यवसायीति तत्र विशेषतः प्रतिपत्तिः। आमुष्मिकफलानामेवेश्वरप्रार्थना—हृजकरणादीनामानुषङ्गिकतया व्यावहारिकत्वम्।

भारतीयकर्मकाण्डे तु अस्ति अनितरसाधारणं वैशिष्ट्यम्। अस्माकं पूर्वजा महर्षयो मानवस्य प्रत्येकं व्यावहारिकं कृत्यं प्रकृतिप्राप्तं मत्वापि तत्र सर्वास्वपि साहजिकासु क्रियासु तत्त्वसाक्षात्कारेण धर्मानुवेधेन परममुत्कर्षमुपयोगं च समलभन्। ततश्च भारतीयं कर्मकाण्डं वैदेशिकदृष्ट्या धर्मतः संबद्धमपि व्यावहारिकतामपि नातिक्रामति। एवं च भारते यत् कर्मकाण्डं प्रसृतं तस्य धर्म इत्यप्यस्ति व्यवहारः। तस्य महान् वाङ्मयः सूक्ष्मेक्षिकया विचारश्च यादृशोऽस्माकं पूर्वाचार्यैः कृतः सोऽन्यत्र उपलब्धुं द्रष्टुं वा न शक्यते।

तदेतस्य महत्त्वघोषस्य प्रामाण्याय कर्मस्वरूपं तद्भेदाश्च निरूप्यन्ते। येषां विचारः वैदेशिकेषु धर्मविचारग्रन्थेषु नोपलभ्यते। अस्माकं शास्त्रेषु कमप्यपूर्वं नाम पदार्थमुद्भावयति। तस्याश्च क्रियायाः परिज्ञानं शास्त्रवाक्येभ्यो जायते। तत्र वाक्ये बहूनि पदानि भवन्ति। तत्र केन पदेन अपूर्वं ज्ञातव्यमिति चिन्त्यते।

### अपूर्वप्रतिपादकशब्दचिन्तनम्

'वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः' इति हि श्रुतिप्रतिपादितस्य धर्मस्य[1] लक्षणम्। स्मृतिग्रन्था हि साक्षाद्रूपेण वेदाः न सन्ति, तथापि ते वेदमनुसरन्ति[2]। वैदिकैरनभिभूतरागद्वेषमोहादिदोषकदम्बान्तःकरणैः तत्त्वदर्शिभिर्महर्षिभिर्वेदमूलकत्वेन स्मृतत्वात्[3] स्मृतिरित्युच्यन्ते। स्मृतेश्च प्रामाण्यं मीमांसकैः स्पष्टं प्रतिपादितम्। ततश्च स्मृतिप्रतिपाद्ये धर्मे वेदशब्दः वेदतन्मूलकाप्तवचनपरः। एवं च वेदेन वेदमूलकाप्तवचनेन च प्रतिपाद्यः प्रयोजनवदर्थो धर्म इति फलति। यथा[4] हि चोदनापरपर्यायो वेदः क्रियायाः अभिधायकं वाक्यं, तथैव स्मृत्यादिवाक्यमपि

१. अर्थसंग्रहे

२. 'श्रुतेरिवार्थं स्मृतिरन्वगच्छत्' रघुवंश २।२।

३. अनुभूतविषयासंप्रमोषणं स्मृतिः। योगसूत्र० १।११।

४. शाबरभाष्यविचारोऽत्र संगृहीतः।

क्रियायाः अभिधायकम् । वाक्ये च पदानामर्थाः तत्र किं प्रत्येकं पदेन धर्मः, उत सर्वैरेक एवेति विचारे प्रतिपदं धर्म इति पूर्वपक्षः । सिद्धान्ते तु एकस्माद् भावपदादपूर्वापरपर्यायो धर्मः । यदा एकस्मादपूर्वं, तदा अन्यत्पदजातं तदर्थं भविष्यति । एवमल्पीयसी अदृष्टार्थानुमानप्रसङ्गकल्पना भविष्यति । तस्मात्प्रवर्त्तके वाक्ये एकस्मात्पदादपूर्वमिति सिद्ध्यति ।

यथैकस्मात्पदादपूर्वं तर्हि किं तत् भावशब्देभ्यः, उत द्रव्यगुणशब्देभ्य इति सन्देहः । कः पुनर्भावः ? के ते पुनर्भावशब्दाः ? इत्यत्रोच्यते-यजेत, दद्यात्, जुहुयात् इत्येवमादयो भावशब्दाः ।

ननु यागदानहोमशब्दा एते, न भावशब्दाः । नैतदेवम् । यागादिशब्दाश्चैते भावशब्दाश्च । एभ्यो हि यज्याद्यर्था अवगम्यन्ते भावयेदिति च । तथा यजेत यथा किंचिद् भवति । तथा दद्याद्यथा किंचिद् भवति । तथा जुहुयाद् यथा किंचिद् भवति । तेनैते एव भावशब्दाः । द्रव्यगुणशब्देभ्यो हि द्रव्यगुणज्ञानं भवति न भावनायाः । अतः द्रव्यगुणशब्दा न भावशब्दा भवन्ति । ये किल भावार्थाः शब्दाः ते कर्मशब्दाः । यतो हि तेभ्यः क्रिया प्रतीयते । एतदेव जैमिनिना सूत्रितम्–(२।१।१)

"भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत एवं ह्यर्थो विधीयते" इति । एवं च भाववाचिनो शब्दाः कर्माणि, तेभ्यश्चापूर्वं भवतीति निश्चयः ।

**मूलतः कर्मभेदाः**

यद्यपि कर्मणामानन्त्यं वर्त्तते तथापि सर्वेषामेव चतुर्षु विभाजनं कर्त्तुं शक्यते[१] । संप्रदायविद्भिः तानि च चत्वारि कर्माणि नाम्ना—

(१) नित्यम् (२) नैमित्तिकम् (३) काम्यम् (४) निषिद्धञ् चेति व्यवह्रियन्ते ।

**१—नित्यम्**—यस्य अकरणे प्रत्यवायः[२] तत्कर्मनित्यमित्यभिधीयते । यथा—सन्ध्यावन्दनम् । यदि उपनीतो मनुजः सन्ध्यां न करोति तदा तस्य पातित्यं स्मर्यते । यथा—

न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥ ( मनु० २।१०३ )

यच्च नित्ये कर्मणि फलं श्रूयते तत्प्रवृत्यर्थमिति केचित् । नित्यत्वेऽपि सर्वदापेक्षितपापक्षयस्य फलत्वम् विरुद्धमिति कुल्लूकभट्टः ( मनु० २।१०३ ) । अतएव सन्ध्यायाः फलमपि स्मर्यते—

पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति ।
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् ॥ इति ( मनु० २।१०२ )

---

१. तै० भा० भू० ५ पृ०, मी० प० २४ पृ० । २. वे० सा० ४ पृ० ।

एतत्त्ववधेयं यद् नित्यैः कर्मभिः पापनाशो य उक्तः स ज्ञानकृते पापे न प्रवर्तते। अज्ञानकृतानामेव पापानां नित्यकर्मणा नाशो भवति। तथा चोक्तम्—

न वेदबलमाश्रित्य पापकर्मरतिर्भवेत्।
अज्ञानाच्च प्रमादाच्च दह्यते कर्म नेतरत्॥ इति।
(शिक्षावल्ली, पृ०२५)

मन्वर्थमुक्तावल्यामपि—एतच्चाज्ञानादिकृतपापविषयम्। अत एव याज्ञवल्क्यः—

दिवा वा यदि वा रात्रौ यदज्ञानकृतं भवेत्।
त्रिकालसन्ध्याकरणात् तत्सर्वं विप्रणश्यति॥इति। (मु०२।१०२)

नित्यस्य कर्मणो ज्ञानं कथं भवेदित्यत्र किमपि प्रस्तूयते—१. नियतनिमित्तता २. प्रत्यवादश्रवणम्, ३. पदवीप्सा, ४. सदा नित्यमित्यादिसार्वकालिकपदबोध्यता, ५. निन्दाश्रुतिः, ६. प्रायश्चित्तविधानम्, ७. नियतसहपाठः, ८. संपदुपदेश। इत्येते यत्र भवन्ति तत्कर्म नित्यमिति शास्त्रविद्भिरुच्यते। एकस्य कर्मणो नित्यताबोधनमेकयैव विधया स्यादिति न नियमः, अनेकाः स्मृतयः श्रुतयोऽपि भिन्नभिन्नाभिर्विधाभिरुपदिशन्त्योऽपि नित्यत्वमैकरूप्यमेव बोधयन्ति। क्वचिदेकैव श्रुतिरेकमेव कर्म बहुभिः प्रकारैर्नित्यमुपदिशतीत्यवधेयम्। अथात्र स्पष्टप्रतिपत्तये एतेषां सोदाहरणं विवरणं लिख्यते।

## १. नियतनिमित्तता

(क) 'यावज्जीवमग्निहोत्रं जुहोति' (आप० श्रौ० ३।१४।११)। 'सायं जुहोति, प्रातर्जुहोति' इति जीवता पुरुषेण सायंप्रातःकालयोर्नियमेन कर्तव्यतयाऽवगतमग्निहोत्रादिकं नित्यम्, यावज्जीवरूपस्य निमित्तस्य जीवनेन सह नियतत्वात्।

अत्र कर्काचार्यः 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति श्रुतिवाक्यमुपस्थाप्य काम्यत्वसन्देहमेव निराकरोति—

ननु च 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति च। तत्र प्रकरणात् काम्यस्यैवेष कर्मणो धर्मः, ततश्च याथाकाम्यमित्येवं प्राप्ते उच्यते। प्रकरणादेष कर्मधर्मः स्यात्, यावज्जीविकता। तत्रापि लक्षणया कर्माभ्यास उपदिश्यते। विहिता हि सायं-प्रातः परिसमाप्तिः। तेन 'यावज्जीवं जुहुयाद्' इत्यनेनाभ्यासो लक्ष्यते, कर्तृधर्मे पुनर्जुहुयादिति स्वार्थे एव वर्त्तते नाभ्यासं लक्षयति। जीवने च निमित्ते ज्ञाते होमो विधीयते। तस्मात् कर्तृधर्मो यावज्जीविकता। ततश्च न याथाकाम्यम्।" (का० श्रौ० १।२।११)।

वृत्तिकारस्तु स्पष्टमेवं विवृणोति—

"यद्यपि 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिना फलार्थतयापि श्रवणमस्ति, तथापि स पृथक्काम्यप्रयोगः। अयम् (याज्जीवबोधितः) ततो भिन्न इति वेदितव्यम्। अतः काम्येऽपि क्रियमाणे नित्यस्य तेनैव गतार्थता इत्यपि बोध्यम्" इति (का० श्रौ० १।२।११)।

'काम्यकर्मणा नित्यसिद्धिः' इति काम्येऽपि प्रयोगे क्रियमाणे नैयमिकः कृत एव भवति। सोऽप्यग्निहोत्रप्रयोग एवेति' कर्कभाष्ये (का० श्रौ० १।२।११) स्पष्टमुक्तम्।

पारस्करगृह्यसूत्रे "अस्तमितानुदितयोर्दध्ना तण्डुलैरक्षतैर्वा" (१।९।२) इति सूत्रेण स्मार्ताग्निहोत्रहोम उपदिष्टः। तस्य च नित्यत्वं ततो स्तमितेऽस्तमिते अग्निं परिचर्य (पा० गृ० २।१४।२२) इत्युपदेशेनास्तीति कर्कादयः।

मनुस्मृतौ तु—'अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा' (४।२५) इति सदापदेन नित्यत्वमुक्तम्।

**यावज्जीवशब्दार्थन्यायः**

'यावज्जीवमग्निहोत्रं जुहोति' इति हि विधिवाक्यम्। तत्र जीवनस्य निमित्तत्वेनोपन्यासात् सति निमित्ते नैमित्तिकस्याप्यवश्यंभावाज्जीवतोऽखण्डहरिनामसङ्कीर्तनमिवाग्निहोत्रानुष्ठानसातत्यमत्र वर्ण्यते इति पूर्वपक्षः।

'सायं प्रातरग्निहोत्रं जुहुयात्' इति भिन्नं वाक्यम्। एतच्च कर्मणोऽङ्गम्। काले हि मीमांसानयेऽनुपादेयम् (कु० बृ० २।३।११)। अतोऽनुपादेयत्वाद् विधेयमपि न भवितुमर्हति। तस्मात् सायंप्रातःकालयोः प्रकृत्या स्वयमुद्भूतयोस्तत्र कर्मैवानुष्ठेयतया विधातुं शक्यते। तस्य च सायंप्रातःकालस्य जीवनरूपनिमित्तसंकोचकत्वेनैव कर्मण्यन्वयः। तथा सत्युक्तकालविशिष्टमेव जीवनं निमित्तम्। तस्मिन् नियते निमित्ते सायंप्रातरूपे स्वकालेऽग्निहोत्रानुष्ठानम्।

अयमेव न्यायो "अहरहः सन्ध्यामुपासीत" इत्यादौ प्रवर्तते। अत एव च सन्ध्यादीनां यथाकालमनुष्ठानम्।

**२. प्रत्यवायश्रवणम्**

यस्याकरणे प्रत्यवायः स्मर्यते तन्नित्यम्। यथा हि सायणाचार्यः काण्वसंहिताभाष्ये—"ग्रहणाध्ययनस्य नित्यत्वप्रकरणे प्रत्यवायस्मरणादवगन्तव्यम्। तथा च स्मर्यते—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ इति।
(मनु० २।१६८)

प्रत्यवायो नाम सत्त्वगुणरूपस्य नैर्मल्यस्य प्रतिबन्धकः पतनपर्यवासी आत्मनिष्ठो विशेषः" (काण्वसंहिताभाष्यभूमिका, पृ० ११०)।

३. वीप्सा

वीप्सा नाम विधेयपदस्याभ्यासः। स च प्रायसो द्विरेव भवति। निरुक्ते 'अभ्यासे भूयांसमर्थं मन्यते' इत्युक्तम्।

तत्र विधेयेऽर्थस्य भूयस्त्वं नित्यतैव। ततश्च विधायकवाक्ये कस्यचन पदस्य वीप्सा नित्यत्वं साधयति वीप्सायाः श्रौतोदाहरणानि यथा—

'वसन्ते वसन्ते ज्योतिषा यजते।
ऋतुमुखे ऋतुमुखे चातुर्मास्यैर्यजते॥
(का० श्रौ० १।२।१२-१३)

पुराणेषु तु वीप्साया बाहुल्यमेव नित्यत्वसाधनाय, तेषु कानिचिल्लिख्यन्ते—

(१) 'वर्षे वर्षे तु या नारी कृष्णजन्माष्टमीव्रतम्।
न करोति महाप्राज्ञ व्याली भवति कानने॥

इति स्कान्दे 'वीप्साश्रुतेश्च' (नि० सि० ६६ पृ०) जन्माष्टमीव्रतस्य नित्यत्वम्।

(२) पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम्।
इति नारदोक्तेश्च नित्यता (नि० सि० २५ पृ०) वीप्सयैव।

४. सार्वकालिकपदबोध्यता

सदा, सर्वदा, नित्यमित्यादिसार्वकालिकतापदेन कर्मणो नित्यत्वं ज्ञायते। तत्रोदाहरणानि यथैकादशीप्रकरणे—

"ब्रह्मचारी च नारी च शुक्लामेव सदा गृही।"
इति भविष्यवचने (नि० सि० ३२) सदापदोक्तेर्नित्यत्वम्।

५. निन्दाश्रुतिः

यस्याकरणे निन्दा श्रूयते तदपि कर्म नित्यं भवति। यथा मनुस्मृतौ (४।२७-२८) आग्रयणेष्ट्यपरपर्यायाया नवसस्येष्टेर्नित्यत्वं निन्दाश्रुत्यैव प्रतिपाद्यते यथा—

नानिष्ट्वा नवसस्येष्ट्या पशुना चाग्निमान् द्विजः ।
नवान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः ॥
न वै नार्नाचिता ह्यस्य पशुहव्येन चाग्नयः ।
प्राणानेवात्तुमिच्छन्ति नवान्नामिषगर्धिनः ।

एवं पारस्करीये देवर्षिपितृतर्पणकर्मणोऽपि नित्यत्वम्—

"अतर्पिता देहाद्रुधिरं पिबन्ति" इति (त्रिकाण्डिकासूत्रे ३ क०) निन्दाबोधमुक्तम् ।

**६. प्रायश्चित्तविधानम्**

प्रायश्चित्तविधानमपि कर्मणो नित्यत्वं बोधयति । यथा आग्रयणेष्ट्या अकरणे प्रायश्चित्तं स्मर्यते । यथा कात्यायनः—

नित्ययज्ञात्यये चैव वैश्वदेवद्वयस्य च ।
अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा ॥
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत् ॥

कारिकापि—( नि० सि० १४३ )

अकृताग्रयणो ऽश्नीयान्नवान्नं यदि वै नरः ।
वैश्वानराय कर्तव्यश्चरुपूर्णाहुतिस्तु वा ॥

ऋग्विधाने—

समिन्द्रराया मन्त्रेण वर्षे वर्षे जपेच्छतम् ।
आग्रयणं यदा न्यूनं तदा संपूर्णमेति तत् ॥ इति ।

**७. नियतसहपाठः**

यस्य नित्यतया बोधनीयस्य कर्मणो नियतनिमित्तादयो ज्ञापका नोपलभ्यन्ते, अथापि = तथापि नियतैः = नित्यैः कर्मभिः सह पठ्यते चेत्तस्य साहचर्यान्नित्यत्वमस्तीति ज्ञानं भवति । सोऽयं नित्यताज्ञापको विषयः कात्यायनेन—"नियतसहपाठात्" (१।२।१४) इति सूत्रेण दर्शितः ।

अस्यार्थः—चातुर्मास्यानां नियतैर्नाम नित्यैर्दर्शपूर्णमासादिभिः सह पाठोऽस्ति । तस्माच्चातुर्मास्यानां नित्यत्वमिति । अयं नियतसहपाठ एव प्रायोपाठ-शब्देनापि निर्दिश्यते ( द्र० तत्रैव वृत्तौ ) ।

**८. सम्पदुपदेशः**

अकृतं नित्यकर्म दोषाय प्रभवति । विधानान् असामर्थ्यादन्यस्माद् वा दैवान्मानुषाद्वा हेतोर्यदि तत्कर्म कर्तुं न शक्यते, तदा तस्य कयापि वैधविधया संपादनं

कर्तव्यम् । कृतायां च तस्यां विधायां तत्कार्यकरणेन संपदवाप्ता भवति । अयं संपदुपदेश एवानुकल्पः, अनुग्रहः "नित्यादिशब्दैस्तत्र तत्र शास्त्रकृतः" व्यवहरन्ति । एतस्य श्रौतमुदाहरणम् 'दर्शनाच्च' इति कात्यायनश्रौतसूत्रे (१।२।१५) वृत्तिकार एवं स्पष्टयति—गवामयनप्रकरणे—"कथमेषां सोमोऽनन्तरितो भवति" इति प्रश्नं कृत्वा "पयस्ययेति ब्रूयात्" ( श० १२।३।५।८ ) इति तत्र समाधानकरणेन नित्यत्व-दर्शनादित्यर्थः ।

अयं भावः—गवामयनं संवत्सरसत्रम्, तस्य फाल्गुन्यां दीक्षारम्भे कृते ततः प्रभृति संवत्सरपर्यन्तं साङ्गस्यैव तस्य गवामयनस्यानुष्ठेयतया मध्येऽन्यस्य कस्यचिद-नुष्ठानेऽपि "वा एतस्य यज्ञश्छिद्यते यदन्यस्य तन्त्रे अन्यस्य तन्त्रं प्रतीयते" ( आप० श्रौ० ६।४।४ ) इति "दीक्षितो न जुहोति न ददाति" ( का० सं० श्रौ० ३।६।५ ), ( आप० श्रौ० १०।१४।३ ) इति श्रुत्या च मध्येऽन्यस्य करणे दोषापत्त्या चातुर्मास्यानामकरणापत्तौ नित्यस्याकरणे प्रत्यवायापत्त्या कथमेषां स्वरूपसम्पत्तिः कर्तुं शक्यत इति प्रश्नस्याभिप्रायः । गवामयनमध्ये पयस्यायागस्याप्यभिधानात्तेनैव चातुर्मास्यस्वरूपस्य सिद्धत्वान्न पृथगनुष्ठानेऽपि दोष इति समाधानार्थः । एवं च नित्यत्वे सत्येव तेषामनुष्ठाने प्राप्ते प्रकारान्तरेणानुग्रहोक्तिर्युक्तेति भावः ॥ १५ ॥

स्मार्तोदाहरणं तु श्राद्धमवगन्तव्यम्, यस्मिन् दिने श्राद्धमवश्यकर्तव्यतया पतति, न च तत् कृत्स्नं निर्वर्तयितुं शक्यते । तदा ( ३३२ पृ० ) निर्णयसिन्धौ । अशक्तौ पृथवीचन्द्रोदये बृहन्नारदीये—

द्रव्याभावे द्विजाभावे अन्नमात्रं तु पाचयेत् ।
पैतृकेन तु सूक्तेन होमं कुर्याद्विचक्षणः ॥

देवलः—

पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ।
श्राद्धीयाहनि संप्राप्ते भवेन्निरशनोऽपि वा ॥

वृद्धवसिष्ठः—

किञ्चिद् दद्यादशक्तस्तु उदकुम्भादिकं द्विज ।
तृणानि वा गवे दद्यात् पिण्डान् वापीषु निर्वपेत् ॥
तिलदर्भैः पितॄन् वापि तर्पयेत् स्नानपूर्वकम् ।

हेमाद्रौ भविष्ये—

अग्निना वा दहेत् कक्षं श्राद्धकाले समागते ।
तस्मिन् वोपवसेदह्नि जपेद्वा श्राद्धकल्पकम् ।

विष्णुनारदपुराणयोः—

असमर्थोऽन्नदानस्य धान्यं मांसं स्वशक्तितः।
प्रदास्यति तिलान् वापि स्वल्पां वापि च दक्षिणाम्।
सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः।
सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति॥
न मेऽस्ति वित्तं न धनं न चान्नं
श्राद्धोपयोगि स्वपितॄन्नतोऽस्मि।
तृप्यन्तु भक्त्या पितरौ मयैतौ
भुजौ कृतौ वर्त्मनि मारुतस्य॥
इत्येत् पितृभिर्गीतं भावाभावप्रयोजनम्।
यः करोति कृतं तेन श्राद्धं भवति भारत॥

प्रभासखण्डे—

गत्वारण्यं मयानुष्यमूर्ध्वबाहुर्विरोम्यदः।
निरन्नो निर्धनो देवाः पितरो माऽनृणं कृथाः॥
न मेऽस्ति वित्तं न धनं न भार्या
श्राद्धं कथं वः पितरः करोमि।
वनं प्रविश्येह तु तन्मयोच्चै-
र्भुजौ कृतौ वर्त्मनि मारुतस्य॥
श्राद्धार्थमेतद् भवता प्रदत्तं
मह्यं दयध्वं पितृदेवताद्याः।
आख्याय चोत्क्षिप्य भुजौ ततो वै
दिवा च रात्रिं समुपोष्य तिष्ठेत्॥
भवेत् स वै तेन कृतेन तेषा-
मृणेन मुक्तः पितृदेवतानाम्।

इत्युक्तम्।

अत्र 'ऋणेन मुक्तः पितृदेवतानाम्' इति श्राद्धफलसंपत्तिरनुकल्पविधाभिरुपदिष्टा। इत्येवं नित्यविषयो विचारितः।

**नित्यकर्मणो यथाशक्त्यनुष्ठानम्**

नित्ये कर्मणि शास्त्रकथितानि सर्वाण्यङ्गानि उपसंहृत्य तद्विशिष्ट एव प्रयोगः कर्तव्यः। कुतो भावनांशस्य कथंभावस्य समुच्चितैः सर्वैरङ्गैः परिपूरणेन सर्वाङ्गोपेतस्यैव प्रधानस्य फलवत्त्वादिति प्राप्ते मीमांसका निर्णयन्ति यद् नित्येन फलसाधनत्वेन विधिः, किन्तु जीवननिमित्तसंयोगेन। तथा सत्यङ्गवैकल्येऽपि निमित्तेन जीवनेन नैमित्तिकः कर्मसंयोगः श्रुत्यभिमतो नापैति। ततो विकलाङ्गमपि

कर्तव्यमेव। अत एव नित्यस्याकरणे प्रत्यवायः प्रायश्चित्तम्, तेन चेति द्वयं शास्त्रेष्ववगम्यते। नित्यं तु यथा शक्नुयात्तथा कुर्यात्। तस्माद् वाक्यावगतेष्वङ्गेष्वशक्यं किञ्चिदङ्गं परित्यज्यापि शक्यैरङ्गैरुपेतं प्रधानं कर्मानुष्ठेयमेवेति (जै० न्या० ६।३।१)।

एवमेव न्यायमनुसृत्यैकादशीप्रकरणे कमलाकरः—"एते च नियमाः काम्यव्रते नियताः। नित्यव्रते सति संभवे कार्याः। शक्तिमांस्तु पुनः कुर्यान्नियमं सविशेषणमिति कात्यायनोक्तेः" इत्याह (नि० सि० ३५ पृ०)।

**नैमित्तिकम्**

निमित्तं हेतुः (अ० कौ० २४८७ पं०) निमित्ते भवं नैमित्तिकम्। कमपि असाधारणं कामनातिरिक्तं हेतुं पुरस्कृत्य यत्कर्म क्रियते तन्नैमित्तिकम्। जीवनादिसाधारणस्य निमित्तस्य हेतुतया क्रियमाणे कर्मणि नित्यमिति व्यवहारः। तत्र नियतनिमित्तत्वादिति हेतोः सायणाचार्यादिभिरुपपादितत्वात् (तै० भा० भू० १५)

अनियतनिमित्तत्वेन क्रियमाणं कर्म नैमित्तिकमिति तत्रैव (तै० भा० भू०५)। ज्ञायते। यथा—"यस्य गृहान् दहति अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्" इतीयं क्षामवतीष्टिर्नैमित्तिका, गृहदाहस्यानियतत्वात्। यदि कदाचिद् गृहदाहः सम्भवति, तदा इष्टिरियं क्रियते। एवमेव स्मार्त्तेषु कर्मसु प्रायश्चित्तं शान्तिः, ग्रहणादियोगस्नानम्, दर्शसंक्रान्त्यादि श्राद्धम्, नैमित्तिककर्मसु परिगण्यन्ते। तत्र नैमित्तिकानि सर्वाण्यपि कर्माणि नित्यवत् सर्वथैवानुष्ठेयानि। तेषामकरणे प्रत्यवायो नित्यवद् भवति, करणेन तु प्रत्यवायरूपमनिष्टं परिह्रियते। अत एव यथाशक्त्याङ्गानुष्ठानम्।

**नैमित्तिकेषु फलम्**

नैमित्तिकेषु कर्मसु कुत्रचित् फलमपि स्मर्यते। परं तत्फलं प्ररोचनार्थमेव। अन्यथा तस्य काम्यत्वं स्यात्। काम्यत्वे न कामार्थिन एव प्रवृत्तेः, अकरणे प्रत्यवायकथनं व्यर्थं स्यात्।

यथाहि—नित्यमपि कर्मवचनान्तरेण काम्यमिति बोध्यते। तत्र काम्यप्रयोगेण नित्यसिद्धिर्यथ ऽस्ति, तथैव नैमित्तिकेषु कर्मसु यत्फलं श्रूयते तदुद्दिश्यापि तत्करणे न नैमित्तिकत्वव्याघातः, नित्यनैमित्तिकयोरकरणे प्रत्यवायोत्पादनस्य समानत्वात्। सर्वथा काम्यत्वं तु नैमित्तिकानां न भवति।

अत्र तैत्तिरीयभाष्यभूमिकायां विशेषः (पृ० ५)—

"तेषु नित्यनैमित्तिकानुष्ठानात्तदकरणप्रत्यवायरूपमनिष्टं परिह्रियते। स च प्रत्यवायो याज्ञवल्क्येन समर्थ्यते—

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥ इति।

(या० स्मृ० ३।२२९)

वेदान्तसारे तु (पृ० ५)—'नित्यनैमित्तिकोपासनानां त्ववान्तरफलं पितृलोकसत्यलोकप्राप्तिः।' 'कर्मणा पितृलोको विद्यया देवलोकः' इत्यादिश्रुतेः (बृ० उ० १।५।१६) इत्युक्तम्। तत्प्ररोचनार्थमानुषङ्गिकं वेति ध्येयम्।

**नैमित्तिकसम्पाते विचारः**

यदैकस्मिन् काले बहूनि निमित्तानि समापतन्ति, तदा सर्वेषां निमित्तानां कृत उपदिष्टानि सर्वाण्यपि कर्माणि कार्याणीति जैमिनिना 'समुच्चयस्त्वदोषनिर्घातार्थेषु' इति (१२।३।१७ सू०) सूत्रयित्वा निर्णीतम्।

एवं च यथा—यदि कश्चन अमायां मूलनक्षत्रे दुर्योगे चोत्पद्यते, तदा सर्वाणि निमित्तान्यधिकृत्य प्रोक्तानां कर्मणां समुच्चयः कर्त्तव्यः। तेषां च समेषां कर्मणां तन्त्रेणानुष्ठानं याज्ञिका अनुतिष्ठन्ति। देवताद्येकत्वे तु केषाञ्चित् कर्मणां प्रसङ्गतोऽपि सिद्धिर्भवति। तथा च निर्णयसिन्धौ (पृ० ४७)—

"अत्र ग्रहणनिमित्तकश्राद्धेनैवामासंक्रान्त्यादिनैमित्तिकानां सिद्धिरिति। संस्कारगणपतौ तु—प्रतिनिमित्तं नैमित्तिकानामावृत्तिस्वतन्त्रो वेत्युक्तम्। 'यदा बहुनिमित्तसम्पातस्तदा प्रतिनिमित्तं नैमित्तिकम्' इति न्यायेन सर्वाणि नैमित्तिकानि कार्याणि। यथा—अमावस्यायां ज्येष्ठानक्षत्रे व्यतीपातादौ जातस्य अमावास्यादि-शान्तिः क्रियते। तत्र क्रमस्त्वैच्छिकः। यद्वा तन्त्रेणैव कार्याणि, कर्त्रादीना-मेकत्वात्। कुमार्या अप्येतत्कार्यम्" (सं० ग० पृ० ४६१) इति।

'प्रतिनिमित्तं नैमित्तिकावृत्तिरि'त्यपि जैमिनीयं मतम् (६।२।१०)। आशौच-प्रकरणेऽपि निर्णयसिन्धौ (३८१) पृ०) अनुगतमस्ति।

**नैमित्तिककर्मावबोधः**

नैमित्तिककर्मज्ञानाय यदि शब्दादयो कर्मविधावुपलभ्यन्ते। तथा हि दधि-ग्रहनित्यताधिकरणे माधवः—(१) निमित्तत्वे यदि शब्द उपबध्येत, (२) सप्तमी वा श्रूयेत, (३) मच्छब्दो वान्तराम-कर्त्रोः सामानाधिकरण्येन प्रयुज्येत, (जै० न्या० ४।४।५) इति।

यथा—'यदि कुमार उत्पद्येत' (पा० गृ० १।१६।२४) इत्यत्र यदिशब्दः।

सुतत्रये सुता चेत् स्यात्तत्त्रये वा सुतौ यदि।
तत्र शान्तिं प्रकुर्वीत वित्तशाठ्यविवर्जितः॥'

इति गदाधरभाष्ये (पा० गृ० १।१६) सप्तमी।

अपि नः स कुले जायाद्यो नो दद्यात् त्रयोदशीम्।
पायसं मधु सर्पिश्च प्राक् छाये कुञ्जरस्य च॥

पायसं मधु सर्पिश्च प्राक् छाये कुंजरस्य च। इति मनुवचने (३।२।७४) कर्तृसमानाधिकृतेन यच्छब्देन जनिं निमित्तीकृत्यविधानम्।

**नित्यनैमित्तिकयोरानुषङ्गिकफलम्**

नित्यनैमित्तिककर्मोपदेशकेषु यावज्जीवादिवाक्येषु अनुक्तमपि फलं भवत्येवेति सायणाचार्यः तैत्तिरीयभाष्यभूमिकायामेवमाह—(पृ० ६)

'यावज्जीवादिवाक्येषु अनुक्तोप्यवर्जनीयतया स्वाभीष्टः स्वर्गः प्राप्यते। तथा चापस्तम्बः—तद्यथा आम्रे फलार्थे निर्म्मितेच्छायागन्धावप्यनूत्पद्येते एवं धर्म्मेऽपि चर्य्यमाणेऽर्था अनूत्पद्यन्त इति।

काम्यस्येष्टप्राप्तिहेतुत्वं तद्विधिवाक्य एव स्पष्टम्। इष्टविघातमनिष्टञ्चार्थात् परिह्रियते। निषिद्धवर्जनेन रागप्राप्तनिषिद्धानुष्ठानजन्यो नरकपातः परिह्रियते।

न केवलं नित्यनैमित्तिकाभ्यामानुषङ्गिकस्वर्गप्राप्तिः किन्तु धीशुध्यादि-विविदिषोत्पादनद्वारा ब्रह्मज्ञानहेतुत्वमपि तयोरस्ति। तथा च वाजसनेयिनः समामनन्ति—'तमेतं वेदानुवचनेन ब्राह्मणा विविदषन्ति यज्ञेन दानेन नाशकेन' इति नैमित्तिककर्मविषयः।

**काम्यम्**

अभिलषितेष्टफलप्रापकं कर्म काम्यम्।

कामः सुखम्। तस्मै करणत्वेन यद्विहितं कर्म तत् काम्यम्। तत्र कामस्वरूपमुक्तं भारते—

'इन्द्रियाणां हि पञ्चानां मनसो हृदयस्य च।
विषये वर्तमानानां या प्रीतिरुपजायते॥
स काम इति मे बुद्धिः कर्मणां फलमुत्तमम्।
द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते।
स कामश्चित्तसङ्कल्पः शरीरं नास्य दृश्यते॥

एवं च स्वेष्टसुखाय यत् शास्त्रे कर्म उपदिश्यते तत् काम्यम्। कामाश्च बहवः। तस्मात् कामानां भेदेन कर्माण्यपि तत्तत्फलसिद्धये उपदिष्टानि। काम्ये च कर्मणि कामनावानेव अधिकारी। नित्यनैमित्तिकयोः स्वरूपतः—काम्यत्वाभावः।

सन्ति काम्यानि कर्माणि कतिचिदेवंविधानि यानि नित्यत्वेनापि शास्त्रे पठितानि। तत्र नित्येषु नैमित्तिकेषु च न फलप्रभवः। अन्ये तु तत्रोभयत्र दुरितनिवृत्ति फलमभिप्रयन्ति—

'नित्यनैमित्तिकैश्चैव कुर्वाणो दुरितक्षयम्। (मी० प० २४ पृ०) इत्यादि वाक्यैः दुरितक्षयनिवृत्तः फलत्वेन श्रूयमाणत्वात्।

५

न चैवं तयोरपि काम्यत्वापत्तिः फलवत्वादिति वाच्यम्। फलकामनापूर्वकानुष्ठानाभावात्। तत्तद्विधिवाक्ये फलकाममुद्दिश्य तदर्थं फलसाधनत्वेन विधानाभावाच्च काम्यत्वानुपपत्तेः।

**काम्यकर्मणस्त्रैविध्यम्**

मीमांसकाः काम्यं कर्म त्रिविधमभिप्रयन्ति। तथा च मीमांसापरिभाषायाम्—(पृ० २५)।

"काम्यमपि कर्म्म त्रिविधम्—केवलमैहिकफलम्, आमुष्मिकफलकम्, ऐहिकामुष्मिकफलञ्चेति। तत्राद्यं यथा—कारीर्य्यादि। तत्तत्समयवर्त्तिशुष्यत्सस्यसञ्जीवनहेतुः, वृष्टिकामिना क्रियते, न कालान्तरभाविवृष्टिकामेन, जन्मान्तरीयवृष्टिकामेन वा। केवलामुष्मिकफलकं यथा—स्वर्गाद्यर्थं दर्शपूर्णमासादिकम्। स्वर्गस्य इहलोकभोग्यत्वाभावात्। ऐहिकामुष्मिकसाधारणफलकं यथा—'वायव्यं श्वेतमालभेत भूतिकामः' इति भूत्यादिफलकमिति।

स्मार्त–पौराण–तान्त्रिककर्मसु केवलं ऐहिकफलकानि—काम्यानि कर्माणि उतूलपरियेह (पा० गृ० ३।७) शीर्षरोगभेषज (पा० गृ० ३।६) सभाप्रवेशनम् (पा० गृ० ३।१३) इत्यादीनि बहूनि विहितानि। केवलामुष्मिकफलकानि तु—दानोत्सर्गप्रतिष्ठादीनि। ऐहिकामुष्मिकफलकानि–संस्कार[1]-गयाश्राद्ध-शान्तिव्रतादीनि समवगन्तव्यानि।

**शास्त्राणां काम्यकर्मसु परमतात्पर्याभावः**

सायणाचार्येण काण्वसंहिताभाष्योपक्रमे (११० पृ०) काम्यकर्मणामुपदेशे वेदस्य परमतात्पर्यं नास्ति, किन्तु फलसंवादेन वैदिकमार्गे प्रवृत्तिं कारयित्वा नित्ये कर्मणि श्रद्धामुत्पादयितुं काम्यकर्माणीति कथितम्। तथाहि—"कारीर्या वृष्टिकामो यजेत्" 'चित्रया पशुकामः' इत्यादीनि तु काम्यकर्माणि परमपुरुषार्थसाधनाभावेऽपि स्वाभाविककामग्रस्तानां पुरुषाणां वैदिकमार्गे फलसंवादेन श्रद्धामुत्पादयितुमेवाम्नायन्ते। तस्मात् तानि वेदे प्रासङ्गिकानि। परमतात्पर्यं तु वेदस्य नित्यकर्मस्वेव। तस्मात् कर्मकाण्डगतयोः शुक्लयजुर्वेदीयसंहिताशतपथग्रन्थयोः प्राधान्येन नित्यकर्माण्याम्नातानि। इति ॥

**नित्यकाम्यकर्माणि**

एकं हि कर्म नित्यं सदपि काम्यमपि भवति। यथा—शिवरात्रव्रतादिकम्। अकरणे प्रत्यवायोत्पादकत्वान्नित्यत्वं, फलश्रुतेश्च काम्यत्वम्। श्रौते यावज्जीव-

१. बी० नि० "एते च संस्काराः सर्ववर्णानामैहिकामुष्मिकफलानुकूलत्वेनावश्यकाः" सं० प्र० १३६।

मग्निहोत्रं जुहोति' इति वाक्यादग्निहोत्रं नित्यम्, 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति विधेश्च काम्यत्वम्। द्वयोरप्यनयोर्भिन्नत्वमिति जैमिनीये (२।४।१) साधितम्। स एवं न्यायः नैष्ठिकब्रह्मचर्यविचारप्रसङ्गेऽपि वैद्यनाथीये स्मृतिग्रन्थे उक्तः।

ब्रह्मचर्यस्य नित्यत्वं वेदग्रहणाय प्रसिद्धम्, तदेव नैष्ठिकत्वं काम्यमिति नैष्ठिकब्रह्मचर्यस्य नित्यकाम्योभयात्मकत्वम्। निर्णयसिन्धौ (६५ पृ०) रामनवमी-प्रकरणे एकस्य कर्मणः संयोगपृथक्त्वन्यायेन नित्यकाम्योभयत्वं सधितम्। तथा चायं संयोगपृथक्त्वन्यायः ( जै० न्या० ४।३।३ )।

'दध्ना जुहोति' इति कामनाविरहितं वाक्यं नित्येऽग्निहोत्रे गुणविधायकम् 'दध्नेन्द्रियकामस्य जुहुयात्' इति इन्द्रियकामनासंयोगेन दधिहोमं बोधयतीत्येतस्य काम्यत्वम्। तदिदं वाक्यद्वयं दध्नि नित्यत्वं काम्यत्वं च प्रतिपादयदेकस्मिन् प्रयोगे प्रविशदुभयमपि साधयेदिति।

एवमेकादशीव्रतादयो ब्रह्मचर्यपरिग्रहादयश्च नित्यकाम्यविषयः एकमेव प्रयोगं साधयन्तीति।

**काम्यकर्मणां साङ्गानुष्ठानम्**

काम्यानि कर्माणि सर्वाङ्गोपेतान्येव कार्याणीति जैमिनीये ( ६।३।२ ) विचारितम्। तथा हि माधवाचार्यः—

यथा नित्येष्वग्निहोत्रादिकर्मस्वशक्यमङ्गं परित्यक्तम्, तथा काम्येष्वप्यैन्द्राग्नसौर्यादिष्वशक्याङ्गलोपसंभवाच्छक्याङ्गोपेतमनुष्ठेयम्, इति चेत्, मैवम्। अङ्गलोपे काम्यफलानुत्पत्तेः। सर्वाङ्गोपेतमेव हि प्रधानं फलसाधनत्वेन विहितम्। तत्र प्रधानस्य त्यागे यथा नास्ति फलम् तथाङ्गत्यागेऽपि। फलसाधनत्वं हि शास्त्राधिगम्यम्। ततो यथावदङ्गं वा प्रधानं वा शब्दोपात्तम्, तस्य लोपे साधनत्वं नास्ति। नहि गमनसाधनस्य रथस्य चक्राद्यङ्गेष्वन्यतमस्य विकल्पेन गमनसाधनत्वं दृष्टम्। तस्मात्—यदा सर्वाङ्गोपसंहारः कर्तुं शक्यते, तदैव काम्यमनुष्ठेयम्। न च—नित्येऽप्येवमस्तु इति शङ्कनीयम्। जीवनं निमित्तीकृत्य तत्र विधानात्। सत्यामपि कामनायां कर्मणोऽवश्यंभावाभावात्। नहि कामिनः कर्माननुष्ठाने प्रत्यवायः श्रूयते।

ननु—शास्त्रीयप्रत्यवायाभावेऽपि फलानुत्पत्तिलक्षणो बाधोऽस्त्येव। यथा बुभुक्षोरभोजने राजदण्डाभावेऽपि चित्तक्षोभादिरूपो बाधोऽस्ति तद्वत् इति चेत्, मैवम्। यथा फलं सिध्यति, तथा कामिना प्रयतितव्यम्। फलं च शब्दावगत-सर्वाङ्गोपसंहारमन्तरेण न सिध्यतीत्युक्तम्। काम्येष्वङ्गवैकल्ये शास्त्राभिमतफल-

साधकत्वाभावाद्विकलाङ्गं काम्यं न प्रयोक्तव्यम्। अत एव तत्त्यागेऽपि प्रत्यवाय-प्रायश्चित्ते न स्तः। तस्मात् काम्यं कृत्स्नाङ्गोपेतं कर्तुं यदा शक्नुयात्तदा कुर्यात्।

**निषिद्धकर्म**

सामान्यत: इष्टप्राप्तिप्रतिबन्धकतया अनिष्टोत्पादकतया च यन्न ज्ञायते, यच्च शास्त्रैकमात्रसंवेद्यं निषेधविधिना पर्यवसीयते तन्निषिद्धं कर्म। यथा—'न कलञ्जं भक्षयेत्' 'न मलवद्वाससा संवदेत न सहासीत्' (तै० भा० पृ० ५) इत्यादि।

अत्र कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमुमर्थं शास्त्रव्यतिरेकेण अनुमानसहस्रेणापि तार्किकशिरोमणिरप्यवगन्तुं न शक्नोति। ईदृश एव प्रत्यक्षानुमा-नागम्ये विषये वैदिकनिषेधविधे: सार्थक्यम्। आर्षेषु स्मार्तेषु च निबन्धेषु निषेध्यक्रियाणां बाहुल्यं वर्त्तते।

तत्र केचन आश्रममूलका: निषेधा:—

मधुमांसाञ्जनोच्छिष्टशूक्तस्त्रीप्राणिहिंसनम्।
भास्करालोकनाश्लीलपरीवादाश्च वर्जयेत्॥
(आ० स्मृ० १।३३, पृ० ६४)

कर्माङ्गनिषेधविधयोऽपि भवन्ति। यथा—जाबालि:—

ताम्बूलं दन्तकाष्ठं च स्नेहस्नानमभोजनम्।
रत्यौषधपरान्नानि श्राद्धकर्त्ता विवर्जयेत्॥ इति॥
(नि० सि० ३२८ पृ०)

सर्ववर्णाश्रमसाधारण्येन—सामान्यनिषेधविधयोऽपि बहव:। यथा—

नारुन्तुद: स्यादार्त्तोऽपि न परद्रोहकर्मधी:।
ययास्योद्विजते वाचा नालोक्यां तामुदीरयेत्॥
संमानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा॥
(म० स्मृ० २।१६१-१६२)

इत्येवं नित्य-नैमित्तिक-काम्य-निषिद्धरूपाणां चतुर्णां कर्मविभागानां वर्णनं सुव्यस्थितं यथा भारतीयवैदिककर्मकाण्डे दृश्यते न तथान्यत्र अन्यधर्मावलम्बि-कर्मकाण्डबोधनपरेषु ग्रन्थेष्वित्ति सुमहद् वैलक्षण्यम्।

॥ इति प्रथमोऽध्याय: ॥

# द्वितीयोध्यायः

## अथ कर्मकाण्डविधाध्यायः

कर्मकाण्डस्य मूलभूतशास्त्रीयवचनानां प्रक्रियाणां चानुशीलनेन कर्मकाण्डस्य बह्व्यो विधा भवन्ति। तासु शास्त्रं मूलमाश्रित्य पञ्च विधाः प्रचलन्त्यो दृश्यन्ते। ताश्च क्रमशः—( १ ) श्रौतकर्मकाण्डविधा
( २ ) स्मार्तकर्मकाण्डविधा
( ३ ) पौराणकर्मकाण्डविधा
( ४ ) तान्त्रिककर्मकाण्डविधा
( ५ ) मिश्रकर्मकाण्डविधा इति।

तदेतासां धर्मतत्त्वोद्भावयितॄणां कर्मकाण्डपूर्वं तत्प्रमाणविचार उपस्थाप्यते विधानां विशेषविवरणात्।

**कर्मकाण्डे प्रमाणानि**

वेदेन कर्त्तव्यतया बोधितो योऽर्थः स धर्म इति सुप्रसिद्धम्। तस्यैव धर्मकृत्यस्य कर्मकाण्डमिति व्यवहारः। परमत्र वेदशब्दो स्मृत्यादीनपि अन्तरागर्भिणीन्यायेन[1] सङ्गृह्णाति, यतो हि मनुरुपदिशति—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥ इति ( मनु० २।६ )

वेदो मन्त्रब्राह्मणयोर्वेदनामधेयमित्यापस्तम्बाद्युक्तो ( आप० श्रौ० २४।१।३१। प्रति० १।१। बौ० गृ० २।६२। कौ० सू० १।३ ) मन्त्रब्राह्मणसमुदायः। अखिलः लिङ्गवाक्यप्रकरणस्थानसमाख्यानुमितोऽतिदेशकल्प्यश्च। 'यज्ञं व्याख्यास्यामः सत्रिभिर्वेदैर्विधीयते, इत्यापस्तम्बादि ( श्रौ० २४।१।१-२ ) वचनात् त्रय्या एव धर्ममूलत्वं नाथर्वणस्येति शङ्काव्यावृत्त्यर्थं' वाखिलग्रहणम्। आथर्वणस्य प्राधान्येन वैतानिकाग्निहोत्रादिधर्माप्रतिपादकत्वेऽपि तुलापुरुषाशान्त्यादिसर्ववर्णसाधारणधर्मप्रतिपादकत्वाद् युक्तं धर्ममूलत्वमिति भावः। धर्मग्रहणमधर्मस्याप्युपलक्षणम्। तस्यापि तत्त्वज्ञानप्रतिबन्धकीभूतान्तःकरणाशुद्धिहेतोर्हेयत्वेनावश्यप्रतिपाद्यत्वात्। मूलं = प्रमाणम्।

---

१. अन्तरेणापि निमित्तशब्दं निमित्तार्थो गम्यते इति न्यायः ( म० भा० १।१।५६ )

तद्विदां = वेदविदाम् । एतच्च न स्मृत्यादेः स्वातन्त्र्येण प्रामाण्यं किन्तु वेद-मूलकतयेति ज्ञापयति । स्मृतिर्याज्ञवल्क्यादि धर्मशास्त्रम् । शीलं = ब्रह्मण्यता, २–देवपितृभक्तता, ३–सौम्यता, ४–अपरोपतापिता, ५–अनसूयता, ६–अपारुष्यं, ७–मैत्रता, ८–प्रियवादिता, ९–कृतज्ञता, १०–शरण्यता, ११–कारुण्यं, १२–मृदुता, १३–प्रशान्तिश्चेति त्रयोदशविधं हारीतोक्तम् । अत्र शीले प्रवृत्तिभिन्नाद्रोहाद्या-चारस्य प्रामाण्यमुच्यते । आचारश्चेत्यत्र तु प्रवृत्त्यात्मकस्येत्यपौनरुक्त्यम् ।

आचारः विवाहादौ कङ्कणबन्धनाद्यनुष्ठानम् । साधूनामिति । क्वचिद्ध-र्मत्वसंदेहे सति वैदिकसंस्कारवासितान्तःकरणानां साधूनामेकत्र पक्षे आत्मनः मनसः परितोषस्तुष्टिर्धर्मप्रमाणमिति कल्पतरुः । तथा च तैत्तिरीये धर्मसंदेहमुपन्यस्य "ये तत्र ब्राह्मणाः सम्मर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः यथा ते यत्र वर्तेरन् तथा तत्र वर्तेथाः' इति । अनेन पर्षद्रूपमपि प्रमाणमुक्तं भवति । अथवा आचारश्चैव साधूनामिति वेदः । एवं चावेदविदामपि क्षीणदोषपुरुषाणामाचारः प्रमाणम् । यथा च सच्छूद्राद्याचारस्तत्पुत्रादीन् प्रति भवति प्रमाणम् ।

आत्मनस्तुष्टिरेव चेति वैकल्पिकेऽर्थे । सा चात्मानं प्रत्येव । तथा च याज्ञवल्क्यः ( १।७ )—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥

सम्यक् सङ्कल्पाच्छास्त्राविरुद्धसङ्कल्पाज्जातः कामः मया भोजनव्यतिरेकेणोदकं न पातव्यमित्येवंरूपः । अथवा सम्यक्सङ्कल्पाद्रागादिरहितसङ्कल्पात् ज्ञानादुपजातं यद् ब्राह्मण्यतादि मनुना शीलत्वेनोक्तं तत् सम्यक् संकल्पज इत्यनेनोच्यते इति कल्पतरुः । अत्रापि धर्मग्रहणमधर्मोपलक्षणम् इति । ( वी० मि० ९ प० प्र० ) ।

अत्र मनुश्लोकव्याख्यायां कुल्लूकभट्टीये विशेषः—

'वेदो ऋग्यजुःसामाथर्वलक्षणः । स सर्वो विध्यर्थवादमन्त्रात्मा धर्मे मूलं प्रमाणम् । अर्थवादानामपि विध्येकवाक्यतया स्तावकत्वेन धर्मे प्रामाण्यात् । यदाह-जैमिनिः—

'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' ( १।२।७ ) । मन्त्रार्थवा-दानामपि विधिवाक्यैकवाक्यतयैव धर्मे प्रामाण्यं, प्रयोगकाले चानुष्ठेयस्मारकत्वं, वेदस्य च धर्मे प्रामाण्यं यथानुभवकरणत्वरूपं न्यायसिद्धम् । स्मृत्यादीनामपि तन्मूलत्वेनैव प्रामाण्यप्रतिपादनार्थमनूद्यते । मन्वादीनां च वेदविदां स्मृति धर्मे प्रमाणम् । वेदविदामिति विशेषणोपादानाद् वेदमूलत्वेनैव स्मृत्यादीनां प्रामाण्य-मभिमतम् इति ।

तदेवं वेद-स्मृति-आचारात्मतुष्टयो धर्मे प्रमाणानीति स्थितम्। अत्र स्मृतिशब्दः पुराणमप्यन्तर्भावयतीति वक्ष्यते पौराणकर्मनिरूपणप्रसङ्गे। आचारश्च तन्त्रशास्त्रमनुगृह्णाति, आत्मतुष्टिश्च मिश्रकर्मकाण्डमिति यथावसरं वक्ष्यामः।

**श्रुतिः ( वेदः )**

"श्रुतिस्तु वेदो विज्ञेयः" इति मनु( २।१० )वाक्यात् वेदस्यैव श्रुतिरिति नामधेयम्। मीमांसकमनीषिभिः श्रुतेरपौरुषेयत्वं निर्णीय तस्यानेकप्रभेदभिन्नत्वं चोक्तम्। "मन्त्रब्राह्मणयोर्वेदनामधेयम्" ( आप० परि० १।३३ )" मन्त्रब्राह्मणात्मको हि वेदः। ( ऋ० भा० भू० पृ० १५ ( मी० प० २ )। सच ( वेदः ) विधिमन्त्रार्थवादरूपस्त्रिविधः ( धर्मप्रदीप पु० १ ) न केवलं विध्यात्मक एव वेदो धर्मप्रमाणं किन्तु मन्त्रार्थवादात्मकोऽपीत्युक्तमखिल इति" ( स्मृ० मु० पृ० १ ) इत्यादि। मूलतो मन्त्रब्राह्मणात्मकत्वेन द्विधा सन्नपि स वेदो वाक्यविचार-परम्परायां मीमांसकैः विधि-मन्त्र-नामधेय-निषेधार्थवादभेदात् पञ्चविधः उक्तः ( न्या० प्र० पृ० १६ ) विषयविभाजने तु वेदस्तावत्काण्डद्वयात्मकः। पूर्वोत्तरकाण्ड-भेदात् ( तै० भा० भू० पृ० ५ ) इत्यादि मीमांसकग्रन्थेषु उक्तमस्ति।

धर्मशास्त्रीये वीरमित्रोदये तु वेदस्य विभागः षोढा वर्णितोऽस्ति। तत्रोपनिषदात्मा भेदः षष्ठो निर्दिष्टः, तस्य चात्र कर्मकाण्डे प्रसङ्गो नास्तीति स नात्र विचारयिष्यते। वीरमित्रोदयपरिभाषाप्रकाशे तेषां विभागानां व्याख्यान-मेवमुच्यते—

"अत्र श्रुतिः षड्भागा। विधिनिषेधार्थवादमन्त्रनामधेयोपनिषद्भेदात्। तत्र विधेस्तावत्तत्तद्विषयप्रवर्तनाबोधकत्वेन धर्मे प्रामाण्यम्। यथा 'वायव्यं श्वेतमालभेत भूतिकामः' ( तै०सं० २।१।१ ) इत्यादेर्द्रव्यदेवतासंयोगानुमितवायुदैवत्ययाग-प्रवर्तनाबोधकत्वेन।

निषेधस्य तु निवर्त्तनावबोधजनकत्वेन, यथा न कलञ्जं भक्षयेदित्यादेः। अर्थवादो द्विविधः—प्रशंसार्थवादो निन्दार्थवादश्च। तत्राद्यो—विध्यपेक्षितप्राशस्त्यसमर्पणेन, यथा 'वायुर्वै क्षेपिष्ठा देवता'। इत्यादि ( तै० सं० २।१।१ ) वायव्ययागादि-प्रशंसार्थतया।

द्वितीयस्तु—निषेधापेक्षितनिन्दासमर्पणेन—'यथा यदश्रु अशीर्यत तद्रजतमभव-दित्यादिस्तस्माद्बर्हिषि रजतं न देयम्' ( तै० सं० १।५।१।१२ ) इत्यादिनिषिद्ध-रजतदाननिन्दार्थतया।

कश्चिदर्थवादः—प्रशंसार्थोऽपि संदिग्धार्थनिर्णायकत्वेन प्रमाणं, यथा 'अक्ताः शर्करा उपदधाति,' 'तेजो वै घृतम्'इत्यादिः (तै० ब्रा० ३।१२।५।१२ )।

'देवस्य त्वे' त्यादिमन्त्राणां (शु० मा० सं० १।१७) तु अनुष्ठेयार्थस्मारकत्वेन, ज्योतिष्टोमादिनामधेयानां तु भावनाकरणीभूतधात्वर्थपरिच्छेदकत्वेन अनर्थकस्तोमानां तु गीतिकालपरिच्छेदकत्वेन।

उपनिषदां तु—अनर्थनिवर्हणसिद्धरूपब्रह्मज्ञानार्थत्वेनेत्येवमादि सर्वमाकरे स्फुटम् ( वी० मि० १० प० प्र० ) इति।

मीमांसाग्रन्थेषु प्रत्यक्षश्रुतिवचनानामेव विषयवाक्यत्वात् तत्र वेदशब्दे निरपेक्षश्रुतिवाचकः, धर्मशास्त्रीयग्रन्थेषु मीमांसान्यायसंचारणेन वाक्यार्थो निर्णीयते। तस्मात्तत्र विचारसरणौ वेदशब्दः वेदमूलकस्मृत्याचारादीनपि संगृह्णाति। अत एव तत्र तत्र ग्रन्थेषु उत्पत्तिनियमपरिसंख्यादि विधिशब्दोल्लेखः तादृशविचारश्च संगच्छते।

**विधिः—**

वेदशब्दव्यतिरिक्तैः प्रत्यक्षानुमानोपमानादिप्रमाणैरपरिज्ञातमर्थं यो वेदयति स विधिः। स च विधिः सामान्यतश्चतुर्धा—उत्पत्तिविधिः, विनियोगविधिः, अधिकारविधिः, प्रयोगविधिश्चेति। ( मी० न्या० ६६ पृ० )॥

**उत्पत्ति-विधिः—**

कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। धर्मिज्ञापको विधिरुत्पत्तिविधिः इति देवनाथठक्कुराः। ( दे० कौ० पृ० ६ )। अज्ञातज्ञापनमुत्पत्तिः। कर्मणि द्रव्यदेवतासम्बन्धस्य अज्ञातत्वात्तयोर्ज्ञापनमुत्पत्तिरिति फलति। तदेतदुत्पत्ति-विधिलक्षणं स्मार्त्तवचनेषु न पूर्णतया संगच्छते। तेषु वचनेषु द्रव्यदेवतासम्बन्धस्या-व्यभिचरितरूपेणैकस्मिन्वाक्ये प्रायशोऽनुपलम्भात्।

यद्यपि श्रौतेषु अव्यक्तचोदनावत्सु ( वाक्यानुक्तदेवतावत्सु ) कर्मस्वपि स्वार्थचोदितदेवताराहित्यस्य अव्यक्तत्वस्य 'सद्भावात्सोमेन यजेत'इत्यादौ विधि-त्वमङ्गीक्रियते, परं स्मार्त्तेषु विशेषतयानुपलब्धेः उत्पत्तिविधिलक्षणं पूर्वोक्तं न स्पष्टतया परिलक्षितुं शक्यते।

अतः कृष्णयज्वमीमांसकोक्तं उत्पत्तिविधिलक्षणं स्मार्त्तेषु वचनेषु विशेषतः संगच्छते। तत्र हि—येन वाक्येन इदं कर्म कर्त्तव्यमिति बोध्यते तत्कर्मोत्पत्ति वाक्यम् इत्युक्तम् ( मी० प०३ ) उत्पत्तिविध्युदाहरणानि सर्वाण्यपि कर्मविधायकानि वचनानि सन्ति। यथा—

(१) अग्निहोत्रं जुहुयात्स्वर्गकामः।

(२) गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा।
षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः।
षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम्॥ इति।

अत्र कार्येति विभक्तिविपरिणामेन गर्भाधानादिष्वुपनयनान्तेष्वपि अन्वेति इति वीरमित्रोदयोक्तेः ( पृ० ३५ )। गर्भाधानादीनां संस्कारकर्मणामुत्पत्तिवाक्य-मिदम् । वाक्येषु लिङ्-लेट्-लोट्-तव्यप्रत्ययादिभिः प्रायशोऽविधीयमानोऽर्थो विधीयते। अत्र आदिपदसमुच्चितः प्रेरको यत्प्रत्ययादिरपि संगृह्यते। अत एव धर्मशास्त्रीयवचनमनुसन्धाय रामकृष्णभट्टाचार्यैः कार्यत्वप्रमापकप्रत्ययः = विधिः। स च लिङ्गादिरित्युक्तम् ( पृ० ५५, ल० कौ० )।

**उत्पत्तिविधौ कर्मणः करणत्वेनान्वयः**

उत्पत्तिविधौ च कर्म करणत्वेनान्वेतीति न्यायप्रकाशकृता ( ६७ पृ० ) ससंरम्भं साधितम्, यथा—

"उत्पत्तिविधौ च कर्मणः करणत्वेनैवान्वयः, होमेनेष्टं भावयेदिति। न तु होमं कुर्यादिति साध्यत्वेन। तथा सति साध्यस्य साध्यान्तरान्वयायोगेनाधिकार-वाक्यावगतफलसम्बन्धो न स्यात्। करणत्वेन त्वन्वये होमेनेष्टं भावयेत्। किं तदिष्ट-मित्याकाङ्क्षायां फलविशेषसंबन्धो घटते।

न च उत्पत्तिविधाविष्टवाचकपदाभावेन कर्मणा इष्टं भावयेदिति कथं वाक्यार्थं इति वाच्यम्. विधिश्रुतेरेवेष्टबोधकत्वात्। सा हि पुरुषार्थे पुरुषं प्रवर्त्त-यति, कर्मणः फलसंबन्धमात्रं बोधयति। तस्माद्युक्तमुत्पत्तिविधौ कर्म करणत्वे-नान्वेतीति। अतएव 'उद्भिदा यजेत' ( तां० ब्रा० १९।७।२ ) इत्यादौ तृतीयान्त उद्भिच्छब्द उपपद्यते। उद्भिदा यागेन इष्टं भावयेदित्यन्वयोपपत्तेः। येषामपीष्ट-साधनत्वं लिङर्थस्तेषामपि तृतीयान्तानां कर्मनामधेयानामन्वयोऽनुपपन्न एव। न हि संभवति याग इष्टसाधनमुद्भिदेति। तृतीयोपात्तस्य कारकस्य लिङ्गसंख्या न्वयायोग्यस्य क्रिययैवान्वयात्।

ननु अग्निहोत्रं जुहोतीत्यादिषु कर्मोत्पत्तिविधिषु द्वितीयान्तानां कर्मनाम-धेयानामन्वयोऽनुपपन्नः। न हि संभवति होमेन भावयेदग्निहोत्रमिति, सत्यम्। श्रूय-माणा तावद् द्वितीयाऽर्थाक्षिप्तसाध्यत्वानुवादः। होमस्य हि करणत्वेनान्वयात्। असाधितस्य च करणत्वानुपपत्तेः। तस्याश्चानन्वयोपस्थितौ सा सक्तून् जुहोतीतिवत् तृतीयार्थं लक्षयति। अग्निहोत्रेण होमेनेष्टं भावयेदितीत्युक्तं पार्थसारथिमिश्रैः। अतश्च द्वितीयान्तानां कर्मनामधेयानामन्वयो नानुपपन्नः। तत्सिद्धमुत्पत्तिविधौ कर्म-करणत्वेनान्वेतीति।"

**विनियोगविधिः**

अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिर्द्वितीयः। यथा दध्नो होम-संबन्धं विधत्ते। दध्ना होमं भावयेदिति।

विनियोगः—शेषत्वमङ्गत्वमिति यावत्। इतिकर्त्तव्यता—अङ्गानां प्रयोजनक्रमः इति देवनाथठक्कुरः ( अ० कौ० पृ० ६ )।

स्मार्तोदाहरणम्—"विभ्राडित्यनुवाकपुरुषसूक्तशिवसङ्कल्पमण्डलब्राह्मणैरित्युपस्थाय" ( पा० गृ० स्नान० २ ) अत्र तृतीयया प्रतिपन्नाङ्गभावानां शिवसङ्कल्पादीनामुपस्थानसम्बन्धो विधीयते। एवं पुराणे श्राद्धप्रकरणे—

गन्धैः पुष्पैश्च धूपैश्च वस्त्रैश्चाप्यथ भूषणैः।
अर्चयेद् ब्राह्मणान् भक्त्या श्रद्दधानः समाहितः॥

अत्र तृतीयया अर्चनाङ्गत्वम्।

क्वचिदनुक्तापि तृतीया वाक्यवशादुपतिष्ठते। यथा—"सुमनसः प्रतिगृह्णाति" इत्यत्र मन्त्रेऽनुक्तापि तृतीया प्रतिग्रहणाङ्गत्वं मन्त्रस्य बोधयति (पा० गृ० २।६।२३) एवं वाक्यस्याङ्गत्वं सर्वत्र बोध्यम्।

**अधिकारविधिः**

कर्मफलसम्बन्धबोधको विधिरधिकारविधिः। 'कर्तृविशेषविधिः' इति देवनाथठक्कुरः। आपदेवीये ( पृ० १६३ )। विशेषविवेचनं यथा—

"फलस्वाम्यबोधको विधिरधिकारविधिः।" फलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम्। 'स च यजेत स्वर्गकाम' इत्येवंरूपः। अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्थ यागजन्यफलभोक्तृत्वं प्रतिपाद्यते। यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं पुरोडाशं निर्वपेदित्यादिभिस्तु गृहदाहादौ निमित्ते कर्मविद्भिर्निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते।"

अस्य स्मार्त्तमुदाहरणं सपिण्डीकरणादूर्ध्वं दर्शश्राद्धादि चेष्यते इति। अनेन कृतसपिण्डीकरणपितृकत्वममावास्याश्राद्धेऽधिकारबोधकम् इति।

**प्रयोगविधिः**

प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। स चाङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव। प्रधानविधेरितिकर्त्तव्यताकाङ्क्षायां यावत्क्रियाजातमङ्गत्वेन तत्र सम्बद्धं तावत्क्रियाबोधकैस्तैस्तैरङ्गविधिभिः सह प्रधानविधेरेकवाक्यतया सर्वेषां वाक्यानां मिलित्वा यो महावाक्यार्थस्तादृशमहावाक्यार्थावगतो यो विधिः स प्रयोगविधिरित्यर्थः। स च उपदेशातिदेशसंकलनया सम्पद्यते। अत एव स्मृतिचन्द्रिकायां श्राद्धकाण्डे ( ३७६ पृ० ) "उपदेशातिदेशसंकलनया सम्पन्नः पिण्डदानप्रयोग उच्यते" इत्युक्तिः संगच्छते।

प्रयोगविधिभेदेन कर्मणां क्रमोऽपि भिद्यते। अत एव निर्णयसिन्धौ उपाकर्मोत्तरं रक्षाबन्धनस्य पूर्णातिथौ आर्थिकस्यानुवादः, न तु विधिः, गौरवात्। प्रयोग-

विधिभेदेन क्रमायोगात् "शूद्रादौ तदयोगाच्च" तेन परेद्युरुपाकरणेऽपि पूर्वेद्युरपराह्णे तत्करणं सिद्धमित्युक्तम्। तेन च उपाकरण-रक्षाबन्धनयोः पृथक् पृथक् करणीयत्वं प्रयोगविधिरेव बोधयतीति स्पष्टम्।

एवम्— कन्यागते सवितरि दिनानि दश पञ्च च।
पार्वणेनेह विधिना तत्र श्राद्धं विधीयते॥

इति ब्रह्माण्डमार्कण्डेयपुराणवचनेन अपरपक्षीयमहालयश्राद्धदिनानां प्रयोगविधेरैक्येन अन्तिमे दिने एव दक्षिणा—इति हेमाद्रिमतं निर्णयसिन्धावुक्तम् (पृ० ११३)।

कर्मकाण्डं हि प्रयोगविधिरूपं जनसाधारणेन दृश्यते। तत्र प्रयोगविधिर्नाम प्रयोगप्राशुभावबोधकं शास्त्रीयं वाक्यम्। तच्च प्रत्यक्षमनुमितं चेति द्विविधं भवति। एतस्य प्रयोगविधेः परिचायकानि सहकारिभूतानि षट् प्रमाणानि। तानि च भारतीयकर्मकाण्डस्वरूपपरिज्ञानायात्यन्तमुपयोगीनि।

एतेषां प्रमाणानामपरिज्ञानेन कर्मकाण्डस्य प्रक्रियायामल्पज्ञाः विधर्मिणश्च संशेरते। तस्मादत्र तेषां परिचय उपस्थाप्यते। मीमांसाग्रन्थेषु एषां विनियोग-विधिज्ञापकानां च—श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणां षण्णां प्रमाणानां सुविशदं विचार आस्ते। परमत्र स्मार्तानि पौराणिकानि वा वचनानि उदाहरणरूपेणोपस्थाप्य विषयान्तरभिया विस्तरभिया च परिज्ञापनमात्रं केषाञ्चित् क्रियत इत्यवधेयम्। तानि च नाम्ना श्रुतिः, अर्थः, पाठः, स्थानम्, मुख्यः, प्रवृत्तिश्चेति विद्यन्ते शास्त्रेषु।

**श्रुतिः—**

तत्र श्रुतिर्नाम वृत्त्या क्रमबोधकः क्लृप्तशब्दः। स च अथ-ततः क्त्वाल्यबा-दिरूपः। तत्र अथततःपदयोरानन्तर्यवाचित्वं शाक्त्यैव। क्त्वाप्रत्ययादीनां तु पूर्वकालित्वादिवाचिनामपेक्षावशात् क्रमबोधकत्वं लक्षणया। अर्थादिप्रमाणव्यावृत्त्यर्थं लक्षणे क्लृप्त इति। तेषु कल्पितस्यैव शब्दस्य क्रमबोधकत्वात्। उदाहरणानि यथा—

अथ—"अथावरावपतनम्" (पा० गृ० १।१६।१)।
अथैनां वासः परिधापयति (पा० गृ० १।४।१२)।
ततः—तत एनां मूर्द्धन्यभिषिञ्चति (पा० गृ० १।८।५)।
क्त्वा—प्रत्तामादाय गृहीत्वा निष्क्रामति (पा० गृ० १।४।१५)।
ल्यप्—शेषमद्भिः प्रप्लाव्य ततो ब्राह्मणभोजनम् (पा० गृ० १।१२।५)
अतः परम्—जपेच्च पौरुषं सूक्तं त्र्यम्बकमतः परम् (सं० डा० ५२०)
इत्यादि द्रष्टव्यम्।

**अर्थः**

अर्थः प्रयोजनम्, तदनुरोधेन यः क्रमः स आर्थक्रमः। यथा—"ब्राह्मणान् भोजयेत्तं च पर्युप्तशिरसमलङ्कृतम्" (पा० गृ० २।२।५।) इत्युपनयने । अत्र शिरसश्च वपनं भोजनात् प्रागेवेति सर्वेऽपि भाष्यकृतः।

**पाठक्रमः**

मन्त्रपाठेन प्रयोगविधिनिर्देशकार्षवचनेन वानुष्ठेयपदार्थेषु यः क्रमः कल्प्यते स पाठक्रमः। यथा—चित्तं च, चित्तिश्च, आकूतं च (पा० गृ० १।५।९) इत्यादि-मन्त्रपाठक्रमादेव जयाहोमः । आर्षवचने पाठक्रमो यथा—"पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम्। (सं० ग० ६२७)" इति अक्षरारम्भे हर्यादिपाठक्रमेण देवपूजनम्।

**स्थानक्रमः**

स्थानेन यः क्रमः स स्थानक्रमः। स्थानं नाम अनेकेषु पदार्थेषु प्रकृतौ विभिन्नकालिकेषु अतिदेशतो विकृतिं गतेषु तत्र तेषां वचनबलादेककालानुष्ठाने प्राप्ते यस्य प्रथमोपस्थितिः तस्यैव प्रथममनुष्ठानमिति यः क्रमः स स्थानक्रमः। यथा (नि० सि० ३४७)—

मातृश्राद्धं तु पूर्वेषु कर्माहनि तु पैतृकम्।
मातामहं चोत्तरेषु वृद्धौ श्राद्धत्रयं स्मृतम्।

इति गार्ग्यवचने दिनत्रयसाध्यस्य वृद्धिश्राद्धस्य—

अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः।
पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम्।

इति एककालऽकर्त्तव्यतायां पूर्वाह्णे त्रयाणां श्राद्धानामनुष्ठाने प्राप्ते तत्र मातृश्राद्धस्यैव स्थितत्वेन प्रथममनुष्ठानमित्युदाहरन्ति। अत्र स्थानक्रमात् "तदहरल्पेषु" (नि० सि० ३४७) इति कर्माहनि श्राद्धत्रयस्यानुष्ठाने पैतृकश्राद्धः प्रथमं करणीयः, परं मातृपूर्वकमिति विशेषोक्तेर्मातृपूर्वकत्वमेवेति दिक्।

**मुख्यक्रमः**

प्रधानानुष्ठानक्रमेण यत्राङ्गानामप्यनुष्ठाने क्रम आश्रीयते स मुख्यक्रमः। यथा नवग्रहयज्ञविधौ सूर्यादीनां नवानां ग्रहाणां पौर्वापर्यक्रमेण तदीयचर्वर्थं निर्वापः अधिश्रयणादि च भवति।

**प्रवृत्तिक्रमः**

प्रधानानामनेकेषां सहानुष्ठाने कर्त्तव्ये सन्निपत्योपकारकाणां तदीयद्रव्यादौ क्रियमाणानां प्रतिप्रधानं गुणावृत्तिरिति न्यायेन आवृत्त्याऽनुष्ठाने कर्त्तव्ये द्वितीयादि

पदार्थानां प्रथमानुष्ठितेन पदार्थेन यः क्रमः स प्रवृत्तिक्रमः। यथा—पितृपात्रे अर्घ्यकरणे जल-तिल-गन्धादिप्रक्षेपः क्रमेण भवति। स एव क्रमः पितामहपात्रादिष्वपि प्रवृत्तिक्रमेण भवति। अत्रैव काण्डानुसमयपदार्थानुसमयौ निविशेते।

**पदार्थानुसमयकाण्डानुसमयौ**

यत्र बहूनि प्रधानानि एककाले अनुष्ठेयत्वेन विहितानि, तत्र सर्वेषां प्रधानानां स्वैः स्वैरङ्गैः सह सम्बन्धः करणीयः। स च सम्बन्धो द्विधा भवितुमर्हति, पदार्थानुसमयरूपेण काण्डानुसमयरूपेण वा। तत्र एकं प्रधानमुद्दिश्य तत्तत्सम्बन्धिना यावत्पदार्थकाण्डेन अनुसमयः = अनुष्ठानं काण्डानुसमयः। अनेकप्रधानोद्देश्येन एकैकपदार्थेन आवृत्तेन अनुसमयः = अनुष्ठानं पदार्थानुसमयः। पदार्थानुसमये आश्रीयमाणे कस्मिंश्चिदङ्गिनि किञ्चित्पदार्थं प्रथममनुष्ठाय द्वितीयस्मिन्नङ्गिनि द्वितीयक्षणे स एव पदार्थोऽनुष्ठेयो भवति। एवं च सति अङ्गिनः स्वप्रथमपदार्थानन्तरं द्वितीयपदार्थानुष्ठानं द्वितीयक्षणे यत् प्राप्तं तद् बाधितं भवति, तत्तु न युक्तम्। अतस्तद्बाधाय काण्डानुसमय एवाङ्गीकार्यं इति पूर्वपक्षे जैमिनिना (५।२।१) कात्यायनेन च (का० श्रौ० १।५।१०-११) पदार्थानुसमयः सिद्धान्तितः।

यतो हि एकस्य पदार्थस्यानन्तरं द्वितीयस्य पदार्थस्य काल उपस्थितः। यथा पशुयागे उपाकरणानन्तरं विनियोजनस्य, विनियोजनान्तरं च पर्यग्निकरणस्येत्यादि। यदि सर्वं गुणकाण्डमेकत्रानुष्ठाय पुनः द्वितीयस्मिन् प्रधाने तस्यावृत्तौ क्रियमाणायामुत्तरपदार्थसमाप्त्यनन्तरं पूर्वपदार्थकरणापत्त्या पदार्थानां पौर्वापर्यं भज्येत। यच्चोच्यते प्रधानस्य द्वितीयक्षणे द्वितीयपदार्थेन सह संबन्धाभावः पदार्थानुसमये इति तन्न, तस्य सहत्वविधानेन बाधात्। एवं च तादृशद्वितीयक्षणप्राप्तिः एकप्रधानविषया एव। यत्र प्रधानबाहुल्यं तत्र पदार्थानुसमय एव।

अत एव रुद्रकल्पद्रुमे (३६, ६३ पृ०) स्मार्तोदाहरणं षोडशमातृकाणां पदार्थानुसमयेनैव पूजा। अत्र निर्वापवत् (जै० न्या० ५।२।३) पूजैव पदार्थः। न तु एकैकोपचारसमर्पणं पदार्थः। तस्य मुष्टिवत् पदार्थावयवत्वात्। ततश्च पदार्थानुसमये सम्पूर्णपूजने एकवारमेव मन्त्रप्रयोगो न्याय्य इति (२।२०४ पृ०) संस्कारदीपकोक्तिरपि श्राद्धसूत्रगदाधरभाष्यस्य द्वितीयकण्डिकायामप्ययं विषयो विवेचितः। संस्कारभास्करे (६४ पृ०) सोदाहरणं लक्षणं यथा—

सर्वेषामेकतन्त्रेण रव्यादीनां यथाविधि।
पूजनं तु प्रकर्तव्यं पदार्थोऽनुप्रकीर्तितः॥
एकैकस्यावाहनादिपुष्पाञ्जल्यन्तपूजनम्।
समाप्य च ततोऽन्यस्य इति काण्डोऽनुकीर्तितः॥ इति।

**श्रौतकर्मकाण्डविधासु प्रकृतिविकृतिभावः**

तदेवं मीमांसासरण्या विचारिते कर्मगणे वर्गद्वयं भवति—प्रकृतिः विकृतिश्चेति। प्रकृतिर्नाम यत्रापेक्षिताङ्गजातं पूर्णतया उपदिश्यते तत्कर्म। यत्र च विशेषाङ्गमात्रमुपदिष्टमन्यच्चाङ्गं 'प्रकृतितो ग्राह्यं' भवति तत्कर्म विकृतिरित्यभिधीयते। तत्र श्रौतकर्मकाण्डे प्रकृतिस्त्रिविधा—अग्निहोत्रम्, इष्टिः, सोमश्चेति। सायणाचार्यस्तैत्तिरीयसंहिताभाष्य ( पृ० ६ ) भूमिकायामाचष्टे।

याज्ञिकास्तु—अग्निहोत्रम् इष्टिः पशुः सोम इति चतुर्णां प्रकृतित्वं वदन्ति। तत्र पशोः इष्टिधर्मग्राहकत्वस्य कात्यायन-श्रौतसूत्रे ( ४।३।२, १४ ) निर्णीतत्वात् सायणाचार्येण इष्टावन्तर्भावोऽभिप्रेतः। याज्ञिकास्तु पशुकर्मणि पाशुकानां बहूनामङ्गानां वैशेष्यात्तत्राध्ययनाध्यापनप्रयोगज्ञानाय पृथक्त्वमभिप्रयन्ति।

---

**इष्टिः**

औषधमात्रद्रव्यकः श्रौतौ यागः इष्टिः। अस्य च साधारणतया पूर्णिमा अमावास्या इति प्रतिपक्षं कालः[१]। विकृतीष्टयः प्रायः एकस्मिन्नेवाह्नि सम्पद्यन्ते। काश्चन कारीर्यादयो द्व्यहसाध्या अपि। नित्यतया विहिते दर्शेष्टिः पूर्णमासेष्टिश्चेति द्वे अपि द्व्यहकालसाध्ये। परं पूर्णमासेष्टिः एकाहत्वेनापि विकल्पिता। नित्यत्वाच्चैनयोरिष्ट्योः परप्रतिपदः पूर्वमर्थाद् अन्येष्टिकालागमात्पूर्वं यावान् गौणः कालः। इष्टीनां द्व्यहसाध्यत्वेऽपि उपक्रमः ( पूर्णिमायाममावस्यायां वा भवति ), कापि इष्टिः एतादृशी न दृश्यते यस्यां औषधम् ( अन्नम् ) विहाय प्रधानं हविरन्यदुक्तं स्यात्। तत्र हविर्यदि पुरोडाशस्तदा स विधिवाक्यप्रोक्तसंख्याककपालेषु अश्वशफमानादनधिकः अङ्गारशकटिका ( लिट्टी ) रूपः श्रौताग्नौ श्रप्यते। तथा च इष्टिषु चत्वार एवर्त्विजः।

वाचनिकश्रौतीष्ट्यादिमन्तरा प्राकृती शाला ( नित्योपयोगिनी यज्ञशाला ) एव स्थानम्। पञ्चैव प्रयाजाः। प्रधानदेवताश्च दशसंख्यातो अन्यूना एव। मित्रविन्दाख्यामिष्टिं त्यक्त्वा सर्वत्र प्रधानदेवतानां याज्याः पुरोनुवाक्याश्च पृथक् पृथक् भवन्ति। मित्रविन्दायां तु—'एकं प्रदानम्' ( का० श्रौ० ५।१३।३ ) इत्युक्तेः। देवतानां हविषां च पार्थक्येऽपि सर्वेषां हविषामवदानमेकीकृत्य एकमेव पुरोनुवाक्यया देवता आहूय एकमेव याज्यया यजति।

---

१. न विपक्षे क्रियाः स्युः, समभिव्याहारात् (का० श्रौ० ४ ३।२५) इत्यनेन पर्वान्यकालस्य निषेधात्।

यद्यपि सर्वासामिष्टीनां दर्शपौर्णमासेष्टिः प्रकृतिः। तत्र दर्शेष्टौ केचन विशेषाः पौर्णमासेष्टौ च केचन विशेषाः। अतः कतिपयकर्माणि दर्शतन्त्रग्राहीणि यथा पश्वादीनि। कतिपयकर्माणि च दर्विहोमादीनि ( का० श्रौ० ६।१०।१७ ) पौर्णमासधर्मग्राहकाणि यत्र देशं वृत्रहन् पदघटितमन्त्रवती आज्यभागाहुती भवतः। पौर्णमासे तु वृत्रहनशब्दघटितमन्त्रवती आज्याभागसंज्ञिके द्वे आहुती भवतः। यत्र इष्टौ दक्षिणाविशेषो नोच्यते। तत्र अन्वाहार्य ओदनविशेषः दक्षिणा भवति। अन्वाहार्यो नाम—अन्वाहरति—परिहरति यज्ञसंबन्धिदोषजातमनेनेति ऋत्विग्भोजनीय ओदनः ( श० ब्रा० १।३।३।५ ) अन्वाहार्यदक्षिणाया एव दर्शपूर्णमासेष्टौ आम्नानात्। इष्टौ च तिष्ठतैव यागः क्रियते नोपविश्य। यागे च आश्रावय प्रत्याश्रवण-प्रैषपुरोनुवाक्या-याज्याः समधीयन्ते। सामिधेनीभिरग्नेः प्रज्वालनम् आधारः, आज्यभागौ स्विष्टकृद्यागः, इडा, पत्नीसंयाजाः, शंयुवाकः सूक्तवाकः इत्येते पदार्था अवश्यं भवन्ति। इष्टिषु सामगानं न भवति। विकृतीष्टिषु प्रायः सप्तदशसामिधेन्यो भवन्ति। आज्यभागस्य याज्यापुरोनुवाक्ये संयाज्ये ( स्विष्टकृतो याज्या पुरोनुवाक्ये च ) भिद्येते। इष्टिषु यागहोमो उभावपि वर्तेते यथादेशम्।

**यागहोमस्वरूपाध्ययनम्—**

यागहोमयोः को भेद इति विचारे उच्यते—यत्र यजेतेति यजधातुना क्रियाभिधानं जुहोतीति हुधातुना च होमविधानम्। तत्र उभयत्रापि अंशत्रयमस्ति। उद्देशांशः, त्यागांशः प्रक्षेपांशश्च। यत्र देवतामुद्दिश्य 'इदं न मम' इति द्रव्यं त्यज्यते तत्र देवतागण उद्देशांशः, द्रव्यगतस्त्यागांशः, देवतामुद्दिश्य त्यक्तस्य द्रव्यस्य कुत्र प्रक्षेप इत्याकाङ्क्षायां 'यदाहवनीये जुहोति' ( तै० ब्रा० १०।१०।१० ) इत्यादिना आहवनीयादिष्वग्निषु यः प्रक्षेपः क्रियते स प्रक्षेपांशः। एतत् त्रितयमपि यागे होमे च विद्यत एव। तथापि प्रक्षेपांशस्य अङ्गत्वम्, उद्देशांशत्यागांशयोः प्राधान्यं च यत्रास्ति स यागपदार्थः। उद्देशांशत्यागांशप्रक्षेपांशानां यत्र समं प्राधान्यं स होमपदार्थः।

अयं च विभागो याज्ञिकैः, 'जैमिन्यादिभिः सूत्रकारैश्चाङ्गीकृतः। अत एव जैमिनिः' यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्, तदुक्तं—श्रवणाज्जुहोतिरासेचनाधिकः स्यात्' ( ४।२।२७-२८ ) इति सूत्रयामास।

व्याख्यातारश्च—'देवतोद्देशद्रव्यत्यागप्रक्षेपेषु समप्रधानेषु जुहोतिपदप्रयोगः। इति भाट्टदीपिकायां ( ३।४।१८ ) स्पष्टमूचुः। अतश्च यजिधातुना विहितो यागः, स च एतादृशस्वरूपः। हुधातुनाभिहितश्च होमः स च एवंरूप इति फलितम्। एवं च यत्र शान्तिकपौष्टिकादिषु कर्मसु यजिधातुना विधानाभावः, तत्र यागत्वं नास्ति इति शतरुद्रियादौ जुहोतिचोदनाचोदितत्वाद् होमत्वमेव तेषाम्, इति तत्र सङ्कल्पादौ

होमपदस्यैवोल्लेखः कार्यो, न तु यागपदस्य। अत एव अग्निहोत्रे प्रातरग्निहोत्रं होष्यामीत्येवोल्लेखो, न तु यक्ष्ये इति।

एवं च नवग्रहहोमादिषु होमस्यैव विशेषतोऽभिधानात्तेषां होमत्वमेव, न तु यागता। अत एव शान्तिकपौष्टिकादिहोमेषु नवग्रहधर्मातिदेशोक्तिस्तत्र तत्र ग्रन्थकृतां संगच्छते। यदि नवग्रहहोमस्य यागत्वं स्यात्, तर्हि यागीयानां धर्माणां होमे अतिदेशाभावकथनं विरुद्ध्येत। निर्णीतं हि पूर्वमीमांसायाम् ( ४।२ ) होमयागयोः वैसादृश्यं परस्परं धर्माननतिदेश इति।

एवं च नवग्रहहोमादिषु मखयज्ञादिशब्दप्रयोगो गौणः। यथा स एव यज्ञः पञ्चविधिः अग्निहोत्रम्। दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः, सोमः ( ऐ० ब्रा० ) इति अग्निहोत्रेऽपि यज्ञशब्दप्रयोगो गौणः, तद्वत् इति। (का० श्रौ० अ० ७ पृ० २४२)।

**इष्टिभेदाः**

नित्य-नैमित्तिक-काम्यभेदेन त्रिविधाः सत्योऽपि इष्टयः प्रयोगविधया पूर्णेष्टिः। खण्डेष्टिः इति द्विधा भिद्यते। तत्र पूर्णेष्टौ सर्वोऽपि प्रोक्तो विधिरनुष्ठीयते। खण्डेष्टिस्थले तु वाचनिकत्वात् केचनांशास्त्यज्यन्ते। त्यागश्च यावदुक्तत्वात् अन्तापच्छिन्नत्वाद्वा भवति। सर्वासु इष्टिषु कारीरी इष्टिरेव एतादृशी वर्तते यस्याः पूर्णेष्टिकरणीयत्वेऽपि मध्ये एव वृष्टिप्राप्तौ तत्रैव विरामः क्रियते। (प्र० कर्कभाष्यम्)।

**यावदुक्तकर्म**

श्रौते कर्मणि[1] यावदुक्तविधाऽपि प्रायोगिकी विद्यते इत्युक्तम्। तत्र तत्प्रकरण-पठितानां यावदुक्तानामेवाङ्गानामनुष्ठानं भवति। यथा गृहमेधीये। एतज्जैमिनिना पुरस्तादुपदेशवत्त्वादितराङ्गबाधमादाय दशमाध्याये ( ७।१० ) विचारितम्।

**अन्तापच्छिन्नं कर्म**

यत्र कर्मणि शंय्वन्तं भवति इडान्तं भवतीत्यादि ( का० ३।७।१० ) कर्मप्रक्रियायामङ्गसीमा निर्धार्यते, तत्र तदुत्तराणि कर्माणि निवर्तन्त इति अन्तक्रियाभिरङ्गरूपाभिरपाच्छिन्नत्वात्तत्कर्म अन्तापच्छिन्नमित्युच्यते। एतस्यापि विचारो जैमिनीये दशमाध्याय एव सप्तमपादे ( १२ य० ) सङ्गृहीतः।

**पशुयागः**

पशुयागः दर्शेष्टिधर्मान् गृह्णातीति ( का० ४।३।२, १४ ) कल्पसूत्रकाराः। अतः इष्टिक्रियाणां सर्वासां पशुयागे करणीयता भवत्येव। यो हि अत्र विशेषः स उच्यते।

---

१. यावदुक्तनिषेधस्तु नि० सि० ३६८ पृ० द्रष्टव्यः।

पशुयागे प्रधानदेवतायाः हविः विधिबोधितः छागादिः पशुः। तस्य च न साक्षात्कृत्स्नस्य यागार्थत्वम्, किन्तु—

'हृदयं जिह्वां कोडं सव्यसक्थिपूर्वकं पार्श्वे यकृद्वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जोहवानि। दक्षिणसक्थिपूर्वकं गुदतृतीयाणिष्ठं सव्या श्रोणिरित्योपमृतानि। वर्षिष्ठमुपड्भ्यः। वनिष्ठु जाघनी चावद्यति। क्लोमप्लीहाध्यूध्नीपुरीततं चच्छैन्। ( का० श्रौ० ६।७।६-११ )

इत्यादिब्राह्मणग्रन्थमूलकश्रौतसूत्रनिर्दिष्टावयवप्रदानद्वारा यागार्थत्वम्। यस्य च प्रधानदेवतायै पशुयागः क्रियते। तस्यै 'पशुदेवतायै पुरोडाश एकादशकपालः' ( का० ६।७।१६ नै० १०।१।६ ) अवश्यं क्रियते। औषधद्रव्यमन्तरा केवलेन पशुना न यागः पूर्णतामेति। पशुयागे च पशोः शस्त्राघातं विनैव प्राणवियोगः कौशलेन क्रियते। अस्य च निःशब्दस्य अनश्रोः, पशोः सकौशलं मारणं संज्ञपनम् आलभनमिति संज्ञां प्रथते। संज्ञपनकर्त्ता च शमिता इत्युच्यते। स च ऋत्विग्भ्योऽन्यः भवितुमर्हति। ( का० )

संज्ञपनस्थानं च यज्ञशालातो दक्षिणे बहिः सर्वत आच्छादिता शामित्रशाला यथोपयोगं निर्मीयते। संज्ञपनीयस्य पशोर्बन्धनार्थं यूपनामको यज्ञीयकाष्ठस्तम्भः नियतपरिमाणः[1] निश्चिताकारश्च यज्ञशालायाः पूर्वस्यां दिशि उपकण्ठमर्धमन्तर्वेदि अर्धं च बहिर्वेदि पूर्णं वा बहिर्वेदि निरवन्यते। यूपनिर्माणस्य यत्काष्ठमुपादीयते तस्य ग्रहणप्रक्रिया संस्काराश्च भवन्ति। अत्रेष्टिप्रोक्ताः सर्वाः क्रियास्तु भवन्त्येव। पाशुकक्रियाः काश्चिद् विशिष्यन्ते। ऐष्टिकाक्रियास्वपि कश्चिद् विशेषः। यथा अनुयाजार्थं दधिमिश्रितमाज्यं पृषदाज्याख्यं हविः ( का० क्ष० २।६ ) बर्हिःस्तरणसमये प्लक्षशाखा अपि स्तृणाति। सर्वत्रापि पशुयागे षड्भ्य अन्यूना एव ऋत्विजो भवन्ति। तेषां च षण्णां नाम अध्वर्युः ब्रह्मा होता अग्नीत् प्रतिप्रस्थाता मैत्रावरुण इति। पाशुके कर्मणि एकादशप्रयाजाः एकादशैव चानुयाजाः। यज इति प्रैषस्थाने प्रेष्य इति उच्चारणम् ( का० ६।४।८ ) दशमप्रयाजयागानन्तरं पशोः संज्ञपनोपक्रमः। पशोरवयवानां समन्त्रं पत्न्या शोधनं क्रियते। पशुयागे चात्वालसंज्ञकं स्थानं निर्मीयते। यत्र मार्जनादिकं शुचिताकार्यं सम्पाद्यते। तत्रैव केषाञ्चन ९ पदार्थानां प्रक्षेपात्मिका प्रतिपत्तिरपि भवति। वसावपाहोमादिकं

1. पालाशं बहुलपर्णमशुष्काग्रमूर्ध्वसकलशाखं मध्याग्रोपततमव्रणम्। अभावे खदिर-बिल्व-रोहितकान् खादिराभावे सोम इतरान्। (का० ६।१।८-१०) 'त्र्यरत्निश्चतुररत्निर्वा'। एकारात्रिप्रभृतिनैके। अष्टाश्रि करोत्युपरवर्जम्। अग्राच्चषालं प्रथमात्रमष्टाश्रि मध्यसंगृहीतम्। पंचारत्निः पंचदशपर्यन्तः सोमे दशसप्तचतुर्दशवर्जमपरिमितो वा। सप्तदशवाजपेये। एकविंशतिरश्वमेधे। यथाकायं स्थ मा ( का ६।१।२४-३२ )।

यथा निर्देशं भवति। जाघन्याख्येन पशोःपुच्छावयवेन पत्नीसंयाजाः क्रियन्ते। पशुयागानामग्नीषोमीयः प्रकृतिरिति मीमांसकाः। सर्वास्वपि याजुषशाखासु अग्नीषोमीये पशावेव सकलधर्मप्रतिपादनात्। परं सर्वेऽपि कल्पसूत्रकृतः निरूढपशुबन्धाख्ये नियतकर्त्तव्य एव पशौ पशुयागविधिः संगृह्णते। अतः कल्पतः प्रयोगपरिज्ञानं निरूढपशुबन्धयागे एव भवति। ( कर्क० ६।१।१ ) पशुयागे सामगानस्यावसरो नास्ति। ऋग्यजुर्भ्यामेवेष निष्पद्यते।

**पशुयागभेदाः**

पशुयागा अपि केचन नित्याः केचन नैमित्तिकाः केचन काम्याश्च। तत्र निरूढपशुसंज्ञया प्रसिद्धो यागो नित्यः। तस्य 'तं वै संवत्सरो नानीजानमतीयात्।' इति श्रुतेः। नैमित्तिकाः काम्याश्च पशवः तैत्तिरीयादिकृष्णयजुर्वेदशाखासु सुबहूक्तमास्ते तत एवावगन्तव्याः। अत्र तु सामान्यतः पशुयागस्य परिचयो दत्तः। विशेषपशवस्तु यथावसरमत्रैव चतुर्थाध्याये वक्ष्यन्ते।

**वैधहिंसाविचारः**

श्रौतयागे पशुहिंसाया वाक्यानि लभ्यन्ते। साम्प्रतिकाश्च तत्र प्रत्यवतिष्ठन्ते—यदियं पशुहिंसा नोचितेति। तस्मादत्र वैधहिंसाविचार उच्यते।

'मा हिंस्यात् सर्वा भूतानि' इत्यत्र सर्वशब्दस्य व्यापकार्थपरतया एतद्विधिमनुल्लङ्घ्य "वायव्यं श्वेतमालभेत" इत्यादि विधेर्विषयाप्राप्तेरगत्या वैधातिरिक्तविषयत्वम्। सर्वा सर्वाणि छन्दसि वेत्यनेन तत्[1] पदं सिद्धम्।

यद्यपि नानादर्शनटीकाकृद्भिर्वाचस्पतिमिश्रैः तत्त्वकौमुद्यामभिहितं—"न च 'मा हिंस्यात् सर्वा भूतानि' इति सामान्यशास्त्रं विशेषशास्त्रेण 'अग्नीषोमीयं पशुमालभेत' इत्यनेन बाध्येत इति वाच्यम्, विरोधाभावात्। विरोधे हि बलीयसा दुर्बलो बाध्यते। न च अस्ति विरोधः भिन्नविषयत्वात्।

तथा हि 'मा हिंस्यादिति' निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न पुनरक्रत्वर्थत्वमपि। न च अनर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिदस्ति विरोधः। हिंसा हि पुरुषस्य दोषमावक्ष्यति, क्रतोश्चोपकरिष्यती" त्यन्तेन। तदपि सांख्यनये, मीमांसकमते तु विरोध एव। तथा हि—गुरुनये 'न खलु सर्वभूतहिंसाभावविषयकं कार्य्यम्' इति निषेधविध्यर्थस्य बाधं विना अग्नीषोमीयपश्वालम्भनविषयं कार्य्यमिति भावविध्यर्थं उपपद्यते। भट्टनये तु अङ्गे यथा तथास्तु।

न च मुख्यपशुयागे पुरुषार्थपशुहिंसनस्यार्थसाधनत्वमनर्थसाधनत्वञ्चोपपद्यते, विरोधात्। वस्तुतस्तु अङ्गेऽपि विरोधोऽस्त्येव। कुतः विधेरेष स्वभावो यः

१. मा हिंस्यादिति विधिवाक्ये यत् सर्वा पदम्।

स्वविषयस्य साक्षात् परम्परया वा पुरुषार्थसाधनत्वमवगमयति। अन्यथाङ्गानां प्रधानोपकारकत्वमपि नाङ्गीक्रियेत। अर्थसाधनत्वं बलवदनिष्टाननुबन्धीष्टसाधनत्वम्, अनर्थसाधनत्वं बलवदनिष्टसाधनत्वम्। न चानयोरेकत्र समावेश इति। अत एवोक्तं "तस्माद् यज्ञे वधोऽवधः" इति।

ननु एवं "श्येनेनाभिचरन् यजेत्" इत्यत्र श्येनस्य शत्रुवधरूपेष्टसाधनत्वमवगतम्। तत्र "अभिचारो मूलकर्म च" इति मनुना उपघातकगणमध्ये पाठादनिष्टसाधनत्वमवगतम्। तदेतत् कथमुपपद्यतामिति चेन्मैवं "आततायिनमायान्तं हन्यादेवाविचारयन्" इत्येकवाक्यतया आततायिस्थले तु इष्टसाधनत्वम्: अनाततायिस्थले उपघातकत्वेन बलवदनिष्टसाधनत्वमित्यविरोध इति गुरुचरणा अप्येवम् इति तिथितत्त्वे ( ८४ पृ० )।

अत्रैव पशुहिंसाविषये भगवता मनुना युक्तम्, मन्वर्थमुक्तावल्यां च यद् व्याख्यातं तदपि द्रष्टव्यम्, यथा—

एष्वर्थेषु पशून्हिंसन्वेदतत्त्वार्थविद् द्विजः।
आत्मानं च पशुं चैव गमयत्युत्तमां गतिम्॥

एषु यज्ञीयेषु पदार्थेषु पशून् हिंसन्नात्मनं पशुं चोत्तमां गतिं स्वर्गाद्युपभोगयोग्यविलक्षणदेहदशादिसंबन्धं प्रापयति। वेदतत्त्वार्थविदिति विद्वदधिकारबोधनार्थम्।

नन्वन्याधिकारित्वे कर्मणि कथमनधिकृतस्य पश्वादेरुत्तमगतिप्राप्तिः फलम्, उच्यते, शास्त्रप्रमाणकत्वात्। अस्यार्थस्य पित्रधिकारिकायां जातेष्टावनधिकारिणोऽपि पुत्रस्य फलप्राप्तिवदिहापि पश्वादिगतफलसंभवाद्यजमान एव कारुणिकतया पशुगतफलविशिष्टमेव फलं कामयिष्यति। अतएवात्मानं पशुं चैवेत्यभिधानात् यजमानव्यापारादेव पशुगतफलसिद्धिरुक्ता। ( म० स्मृ० ५।४२ पृ० १९० )

**सोमयागः**

सोमो नाम काचन लता। यस्याः स्वरूपविषये अत्रैव षष्ठे कर्मकाण्डोपयोगिपदार्थस्वरूपाध्ययनाध्याये प्रकाशयिष्यते। अधुनेयं सोमलता न मिलति पूर्वमपि दुर्लभैवासीत्। अत एव तत्प्रतिनिधित्वेन असदृशस्य प्रतीकाख्यद्रव्यस्य ग्रहणं श्रुत्यैव कण्ठरवेणोच्यते—'सोमाभावे प्रतीकाख्यमभिषुणुयादिति।'

सोमाऽभिधायाः प्रतीकाऽभिधायाः वा लतायाः कुट्टनेन यो रसो द्रवति तस्य प्रधानहविष्ट्वं यस्मिन् यागे स सोमयागः। सोमयागो ह्ययं सोमसंबन्धिनं कार्यजातमनितरसाधारण्येन विवृण्वन्नपि स्वस्याङ्गत्वेन पशुयागं इष्टियागं च यथोपदेशमुररीकरोत्येव। न हि इष्टिकृत्यं पशुं वा विना कथमपि सोमयागः कर्तुं शक्यते। तत्र

सोमयागे इष्टिकार्याणि पशुकर्माणि सौमिककार्याणि चेति त्रयाणां धर्माणां कर्तव्यता समायाति। अत एव चास्य स्वरूपतः फलतश्च महत्त्वं शास्त्रेषु दृश्यते।

सामान्यतया सोमयागक्रियाः त्रिधाऽभिव्यज्यते दीक्षा, उपसन् सुत्या चेति।

**दीक्षा**

तत्र यमनियमपरिग्रहानुकूलयोग्यतारूपा दीक्षा। तत्कर्तृसंस्कारार्था दीक्षणीया। तत्रोक्तानां कृष्णाजिनमेखलादण्डादीनां तु अक्रियारूपत्वाद्दीक्षाभिव्यञ्जकत्वमात्रं, न तु दीक्षणीयेष्टिवद्दीक्षार्थत्वम्। अत इष्ट्यन्तरमेव "दीक्षितो न ददाति न जुहोति" (मै० ३।६।५) इत्यादयो दीक्षितधर्माः। (का० श्रौ० अ० ७ पृ० २४५) प्रवर्तन्ते।

दीक्षायां दिनविकल्पः अस्ति। यदि सुत्या (प्रधानयागदिनम्) एकमेव भवति तदा एका दीक्षा तिस्रो वा दीक्षाः प्रभवन्ति। यावत्यो दीक्षास्तावत् संख्याक-दिनपर्यन्तं दीक्षणीयेष्ट्यादि कर्मणामावृत्तिः कर्तव्या भवति। शाखान्तरे चतस्रोऽपि दीक्षाः (य० त० प्र०) उत्तमाः। दीक्षाया विशेषधर्माः अत्र चतुर्थाध्याये यथायज्ञं वक्ष्यन्ते।



**उपसत्**

उपसदिति सोमयागेषु द्वितीयं मुख्यं कर्म। एतदपि यावन्ति दिनानि कर्तव्यतयोपदिश्यते तावती संख्या उपसत्सु दीयते। तिस्र उपसदः द्वादशोपसद इत्यादि। तत्र यदि एकेनाह्नासुत्या भवति, शास्त्रीयनियमनात्। तदा तत्र तिस्र एव दीक्षा भवितुमर्हन्ति, न न्यूनाधिकाः। तिस्र एव साह्नस्योपसद इति श्रुतेः। यदि तु एकाधिकदिवसेषु सुत्यायागस्तदा विहितसंख्यया एवोपसदः। उपसत्सु उपसन्निमिका इष्टिः सायंः प्रातः प्रत्यहं विधीयते। तत्र च अयःशया रजःशया हरिशया इति होममन्त्रवर्णान् तन्नाम्ना उपसदो याज्ञिकेषु प्रसिद्ध्यन्ति। अत्राऽयं मुख्यं हविः।

**सुत्या**

यत्र सोमः सूयते कुट्टनं कृत्वा रसनिष्कासनार्थं द्रवीक्रियते सा क्रिया सुत्या। सैषा क्रिया यावन्ति दिनानि प्रचलति तावतीः संख्याकाः सुत्या भवन्ति। सुत्यानुरोधेनैव सोमयागस्य एकाहद्व्यहत्र्यह इत्यादि व्यवहारः। तत्र प्रकृतिभूते एका-एव सुत्या तस्यैकाहत्वम्।

**सोमयागे यजमाननियमाः**

सोमयागस्य प्रारम्भे या दीक्षा प्रथमदिने भवति तत आरभ्य यागसमाप्ति यावत् यजमानः दीक्षितशब्देनाख्यायते। तस्य ये धर्मास्ते दीक्षितधर्मा इत्युच्यन्ते। ते चैमे भवन्ति—

भोजनार्थं वर्णविशेषेण भक्ष्यं नियतम्। तदेव व्रतमित्युच्यते। तच्च सायं-प्रातर्ग्राह्यम्। तत्र पयो ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य। पयश्च

गोः। तदपि या एका गौर्निश्चीयते तस्या एव नान्यस्याः। अत एव, तस्या जोनभि व्रतदुघा इति। यवाम् तण्डुलानां तण्डुलपिष्टानां वा शिथिलः पाकः। तप्तस्य पयसः दध्याद्याम्लप्रक्षेपेण तत्स्फोटनं भवति तत्र द्रवो भागः वाजिनम्, घनीभूतश्च भागः आमिक्षा यद् भाषायां छेना इत्युच्यते। दीक्षितः स्वयं न ददाति न जुहोति। न हि सन्ध्यावन्दनाग्निहोत्रादिकं नित्यं कर्म करोति। न च कमपि स्थविरं गुरुं पितरौ वा उपतिष्ठते, नाभिवादयति, न स्नाति, न वर्षासु गच्छति। मृदु संस्कृतं सारं सत्यं च वाक्यं ब्रूयात्। सन्ध्याकालयोः शालायामासीत न स्वप्यात्। सुत्यादिनेषु वेद्यामेवासीत। एते सामान्यनियमाः। अन्ये तु यागीयस्वरूपबोधका ये विशेषास्ते चतुर्थाध्याये वक्ष्यन्ते।

---

# स्मार्तकर्मकाण्डविधाध्यायः

**स्मृतिग्रन्थानामावश्यकत्वम्**

'पुराण-न्यायमीमांसा-धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
याज्ञवल्क्यस्मृतौ १।३ ।

इति चतुर्दशसु विद्यास्थानेषु धर्मशास्त्रस्य परिगणनं दृश्यते। अत्र एकतः एतैरेव चतुर्दशभिर्विद्यास्थानैः धर्मः प्रमातव्य इति समभिप्रयन्ति मीमांसकाः[1]। अत एव अहिंसनस्य धर्मत्वेऽपि चतुर्दशविद्यास्थानातिरिक्तोपायेन जैनबौद्धाद्यागमेन ज्ञातमहिंसनं तस्माच्च कृतं स्वानुष्ठानं न धर्म इति स्पष्टं वैदिकाः[2] कथयन्ति। अन्यतश्च स्वशास्त्रे साक्षात्परम्परया वा निर्दिष्टानामनुपलम्भमानविवेचनानां पदार्थानां कृते म्लेच्छप्रसिद्धिरपि उपादातुं शक्यते[3], इति पिकाधिकरणपर्यालोचनया (जै० १।३।६) समवगम्यते।

तदेतदौदार्थं गर्भमनौदार्यमस्मद्विवेचकानां स्पष्टतः प्रतीयते। तमिममन्तर्हितमनौदार्यं परिहर्तुमस्ति उपयोगित्वं धर्मशास्त्रनिबन्धानाम्।

अन्यच्च धर्मोऽहि क्रियात्मकः। क्रियां च मनुष्यः स्वभावतः प्रतिक्षणमनुसृजति। अत एव च भगवता श्रीमद्भगवत्गीतासूच्यते—

'नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्'। इति।

एवं च निसर्गतो विधातव्यायाः सर्वस्याः व्यवस्थामुख्येन इष्टसाधनत्वमेव यथा स्यादित्यर्थं दृश्यते धर्मशास्त्रस्य स्मृत्यपरपर्यायस्य महत्त्वम्।

---

१. तस्माद्यावत्परिगणितवेदादिशास्त्रव्यतिरिक्तनिबन्धनं तद्धर्मप्रमाणत्वेनपेक्षितव्यम्' (तन्त्रवा० २०३ पृ०) 'पुराणन्याय' इत्येवमदिभिरेव धर्मप्रमितेर्नियमनादन्यतः प्रमितस्य फलसाधनत्वाभावे धर्मत्वाभावात्तेषामप्रामाण्यमिति। (शा० दी० १।३।४)

तस्माद्यान्येव शास्त्राणि वेदमूलानतिक्रमात्।
अवस्थितानि तैरेव ज्ञातो धर्मः फलप्रदः ॥ (तन्त्रवा० २०३ पृ०।)

२. शाक्योक्ताहिंसनो धर्मो न वा धर्मः श्रुतत्वतः।
न, धर्मो न हि पूतं स्याद् गोक्षीरं श्वदृतौ धृतम् ॥ (जै० न्या० १।३।४ ३० पृ०)

३. ग्राह्या म्लेच्छप्रसिद्धिस्तु विरोधदर्शने सति।
पिकनेमादिशब्दानां कोकिलाद्यर्थता ततः ॥ (जै० न्या० १।३।६ पृ० ३३)

वेदप्रतिपाद्या हि यागादिक्रिया प्रकृतिमात्रमुपकुर्वत्यपि अधिकारिणो विद्याग्निशक्तिसम्पन्नान् मानवानपेक्षमाणा न मानवमात्रं प्रवर्तयितुमभिलषति। ततश्च वैदिके कर्मण्यनधिकृता असमर्थाश्च प्राणिनः स्वस्य परस्य च कल्याणसम्पादनाय कमुपायमनुतिष्ठेयुरिति विचारणायां स्मृत्याचारयोर्वेदमूलकत्वेन समस्ति प्रामाण्यमित्येतावदुक्त्वा मूकीभूय शेरते मीमांसकाः यज्ञानधिकारिणः प्रति। तदा हि ताविमौ स्मृत्याचारावधिकारानुसारं क्रियां निर्दिशन्तोऽपि यथायथं सर्वानपि मानवान् सर्वांश्च परिस्थितीर्वेदानुग्रहत्वप्रयोजनानुसन्धातृत्वकल्याणकारित्वादिभ्यो धर्मशब्दाभिधेयाभिः क्रियाभिरावृण्वन्त इत्यस्ति स्मृतिशास्त्रस्य विशिष्टं महत्त्वम्।

धर्मशास्त्रं च स्मृतिरेव सामान्यतोऽभिधीयते[१]। परं तत्राचारस्यापि विचारोऽविगीतशिष्टानुमतः। अत एव समयाचारिकान् धर्मानपि सङ्गृह्णातिस्वीये धर्मसूत्रे आपस्तम्बो महर्षिः।[२]

## स्मृतिलक्षणम्

तत्र स्मृतिर्नाम मन्त्रब्राह्मणात्मकवेदराशेर्लिङ्गैः मुख्यप्रमाणकानां कर्मणां साध्यसाधनेतिकर्तव्यतांशत्रयपूरक आर्षः शब्दराशिः।

आचारश्च वैदिकेष्वर्थवादेषु पठितानां निर्दिष्टानां वा क्रियाणां तत्तद्देशकालानुगृहीतः सद्भिर्व्यवस्थापितो व्यापारः।

स्मृत्याचारयोश्च 'देशकालपात्रविवेचनानुस्यूतो वैदिकत्वव्यापकः स्वरूपविश्लेषणपर आर्षः तदनुगामि तत्प्रमाणव्यवस्थापकः सदाचार्यव्यक्तिसङ्कलितश्च शब्दराशिधर्मशास्त्रम्'इति धर्मशास्त्रीयवाङ्मयपरिशीलनमेव फलितं भवति। एवं च धर्मशास्त्रस्य अर्थात् स्मृतिशास्त्रस्य महत्त्वं क्षेत्रं च सुमहद् विस्तृतमस्तीति ज्ञायते।

## स्मृतिप्रामाण्यम्

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः" इति ( या० स्मृ० १।७ ) याज्ञवल्कीयवचने श्रुत्यनन्तरं स्मृतेः धर्मज्ञापकत्वमुक्तम्। तत्र "धर्मशास्त्रं तु वै स्मृतिः" ( मनु० २।१० ) इति मनुवचनाद् धर्मशास्त्रं स्मृतिरित्यनर्थान्तरम्।

---

१. श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।।' ( मनुः २।१० ) यद्यपि श्रुतिशब्दो अकृत्रिमशब्दराशौ वेदे रूढः। अथापि यौगिकार्थेन श्रुतिगोचरे पदे पदांशे वाक्ये चाऽपि श्रुतिशब्दः प्रवर्तते। यथा हि—'मत्वर्थलक्षणायां तृतीयाश्रुतिर्मत्वर्थस्येवाङ्गत्वे मानम्।' ( न्या० प्र० ४४ पृ० )।

२. 'अर्थात् समयाचारिकान् धर्मान् व्याख्यास्यामः। ( भामह० १।१।१ )। अत्र हरदत्तः पौरुषेयेति व्यवस्थासमयः। ··· ··· समयमूला आचाराः समयाचाराः। तेषु भवाः समयाचारिकाः, एवंभूतान् धर्मानिति।'

स्मृतिशब्दो हि सामान्यतया "अनुभूतविषया संप्रमोषे" ( यो० द० १।११ ) प्रवर्त्तते। परमत्र प्रामाण्यविचारे वेदश्रद्धावतां साक्षात्कृतधर्माणां मन्वादिमहर्षिवर्याणां निःश्रेयसाभ्युदयकारिधर्मतत्त्वबोधकवचनानि स्मृतिरिति। यद्यपि पौरुषेयाण्यपीमानि स्मृतिवाक्यानि, परं तत्त्वदर्शिनां लोकहितैकपरायणानां सत्यवचसां निर्दूषणानां वचांसि सन्तीति प्रमाणत्वेनाभ्युपेयन्ते। अत एवोक्तं तन्त्रवार्त्तिके भट्टपादैः ( १।३।६ )

"यान्यप्रत्यायितपुरुषवचनानि प्रमाणान्तरसंगतार्थानि भवन्ति, तान्यपि सत्यत्वेनावधार्यन्ते, किमङ्ग पुनः सत्यवाचां वचनानि।

सत्यवाचां च वाक्यानि वैदिकैः संगतानि च।
ज्ञानसत्यानि तान्येवं कोऽन्यथा कल्पयिष्यति ॥ इति।

धर्मस्य अतीन्द्रियत्वात्, तस्य च वेदैकमात्रवेद्यत्वात्, स्मृतीनां च पौरुषेयत्वे तत्र भ्रमप्रमादविप्रलिप्साकरणापाटवादिकृताप्रामाण्यकल्पनासंभवात्, स्मृतीनां न प्रामाण्यमिति चेदुच्यते। स्मृतयो हि न निरपेक्षतया प्रमाणम्। तर्हि वेदमूलकत्वेनैव प्रामाण्यमास्कन्दन्ति।[1] अत एव भगवता जैमिनिना स्मृतिप्रामाण्याधिकरणे वेदमूलकत्वेनैव स्मृतीनां प्रामाण्यमङ्गीकृतम्।

यदि च मूलप्रमाणवत्वाय वेदार्थ एव स्मृतिभिरुच्यते, तर्हि वेदेनैव तदर्थस्यावगमत्वात् स्मृतीनां प्रणयनमेव निरर्थकमिति चेदुच्यते—'स्मृतयो हि प्रायेणेतस्ततो विप्रकीर्णपरप्रकरणपठितवाक्यशेषगतसिद्धवन्निर्देशानुपपत्तिकल्पितः-तिरोहितप्रायविधि[2]मूलाः' इति शास्त्रदीपिकायां ( नै० १।३।७ ) स्मृतिप्रयोजनस्य प्रतिपादितत्वाद् अस्मदादीनां प्रत्यक्षेषु परोक्षेषु च नानावेदेषु विप्रकीर्णस्यानुष्ठेयार्थस्य एकत्र संक्षिप्यमाणत्वेनोपलम्भाच्च स्मृत्यादीनां निष्प्रयोजनत्वमपास्यते।

स्मृतिप्रामाण्यप्रयोजने अयमपरो हेतुः। श्रुतयो हि उपनीतं, विवाहितं, त्रैवर्णिकं पुरुषमुद्दिश्य कर्म विदधति। तत्र पुरुषस्य अनुपनीतत्वे, अविवाहितत्वे, अनग्निमत्वे अङ्गहीनाश्रोत्रियषण्ढादिश्रौतकर्मानधिकारिणः ( का० श्रौ० १।१।५ ) श्रेयःसाधनार्थं किमपि धर्मतत्त्वमनुसरणीयमस्ति। तच्च धर्मतत्त्वं श्रुतिवाक्यैः प्रत्यक्षतो नोपदिष्टम्। मन्त्रार्थवादादिषु तेषां सङ्केतः कश्चिदिवोपलभ्यते।

स च सङ्केतः पूर्णतया सुव्यवस्थिततया च तैरेव संकलयितुं व्याख्यातुं च शक्यते। ये हि अप्रामाण्याधायकदूषणविरहिताः वेदतत्त्वाभिज्ञाः यथाधिकारं

---

१. अ० कौ० ४६ पृ० स्मृतेर्वेदमूलकत्वानुमानादेव निष्कम्पप्रवृत्तिजनकत्वम्। तथाहि 'इयं स्मृतिः स्वसमानार्थकवेदमूला, असम्भवन्मूलान्तरत्वे सति समूलत्वात्, प्रत्यक्ष-वेदमूलकस्मृतिवत्' इत्यनुमानेन वेदमूलकत्वं साधितम्।

२. लिङ्गोपष्टब्धा स्मृतिः ( सं० ग० ५४६ पृ०। )

सर्वजनहितैषितया च प्रत्यभिज्ञाताश्च स्युः। ते च मन्वादयः स्मृतिकर्तार एव भवितुमर्हन्ति। अत एव च प्रश्नतदुत्तररूपस्मृत्युत्थापनांशेषु तस्य तस्य महर्षेः तत्त्वज्ञत्वमाविष्क्रियते। यथा मनुस्मृतौ–( १।३ )

त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयम्भुवः।
अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित् प्रभो ॥

एवमेव याज्ञवल्क्यस्य योगीश्वरविशेषणं ( या० स्मृ० १।१ ) तत्त्वज्ञत्वं साधयति।

अत एव—यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥ (मनु० २।७)

इत्युक्तम्।

तदेवं स्मृतीनां प्रामाण्ये प्रयोजने च निरूपिते स्मृतिग्रन्थविषये उच्यते।

**स्मृतिग्रन्थाः**

वीरमित्रोदयस्य परिभाषाप्रकाशे अन्यत्रापि च धर्मशास्त्रीयग्रन्थेषु स्मृत्यु-देष्टॄणां बहूनां ऋषीणां नामानि निर्दिष्टानि सन्ति। तानि तु तत एवावगन्तव्यानि। याज्ञवल्क्यस्मृतौ यानि विशिष्टानां धर्मशास्त्रकाराणां नामानि सन्ति, तानीमानि—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसंवर्त्ताः कात्यायनबृहस्पती।
पराशरव्यासशंखलिखिता दक्षगोतमौ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥ (या० स्मृ० १।४-५)

नेयं परिसंख्या किन्तु निदर्शनमेतत्। अतो बौधायनादेरपि धर्मशास्त्रत्वमविरुद्धम्। एतेषां प्रत्येकं प्रामाण्येऽपि 'साकाङ्क्षाणामाकाङ्क्षापूरणमन्यतः क्रियते' विरोधे विकल्प इति'। स्मृतिबहुत्वप्रयोजके पाञ्चरात्ररक्षायास्तृतीयाधिकारीया वेदान्तदेशिकोक्तिरप्यनुसन्धेया।

तथा हि—याथार्थ्येन अतिविततगहनगम्भीरविविधविकल्पबहुतरशास्त्रसंक्षोभजनितदिङ्मोहशान्तये सर्वैः संकलनमात्रं त्विह कृतमिति।

**स्मृतिवाङ्मयः**

स्मृतिशब्देन हि निबन्धेषु प्रतिपादितानां स्मृतिग्रन्थानां पद्यात्मकानि गद्यात्मकानि वचांसि गृह्यसूत्र[1]धर्मसूत्रादिसूत्रग्रन्थाः पुराणेतिहासग्रन्थाः वेदाङ्गानि चान्तर्भवन्ति। यानि तु योगियाज्ञवल्क्यादिनाम्ना वचांस्युपलभ्यन्ते तेषां विषये वीरमित्रोदये परिभाषाप्रकाशे ( पृ० १६ ) एवमुक्तम्—

१. द्र० धर्मप्रदीप पृ० २। द्र० त० वा० १।३।१५ सूत्रं।

योगियाज्ञवल्य-वृद्धमनु-वृद्धशातातप-वृद्धवसिष्ठ-लघुहारीतस्मरणानि षट्त्रिंशत्स्मृतिकारकर्तृकान्येव अवस्थाभेदेन तैरेव करणात् । अत एव याज्ञवल्क्येनोक्तं—

'योगशास्त्रं च मत्प्रोक्तमि'ति योगियाज्ञवल्क्यग्रन्थे,
'स्नानमब्दैवतैर्मन्त्रैर्यत्त्वयोक्तं पुरानघ ।'

इति योगियाज्ञवल्क्यं प्रति ऋषिप्रश्ने याज्ञवल्क्यग्रन्थोक्तस्यानुवादाच्च । एवं वृद्धमन्वादीनामपि मन्वाद्यभेदः शिष्टप्रसिद्ध्यादिभिरवगन्तव्यः । यानि तु गृह्यतत्परिशिष्टादीनि तानि भिन्नकोटीन्येव पुराणवत्प्रमाणानि । तथा विष्णुधर्मोत्तरमहाभारतरामायणादीन्यपि ।

अन्यदपि तत्रैव ( वी० मि० १७ प० प्र० )—

यद्यपि स्मर्तृनामानिर्दिश्य 'अत्र स्मृतिः, अत्र श्लोकः' इत्यादि प्रामाणिकलिखनं, तदप्यविगीतमहाजनपरिगृहीतत्वेन प्रमाणम् । स्मृत्यन्तरेषु च इत्येतदप्येतेनैव संगृहीतं वेदितव्यम् इति ।

## धर्मशास्त्रीयकर्मणां पूर्वोपस्थितिः

यद्यपि स्मृत्यात्मकं धर्मशास्त्रं वेदादवरप्रामाण्यकोटावस्ति । परं मनुष्यस्य गर्भाधानक्षणमारभ्य जीवस्य लोकान्तरगमनं यावद्धर्मं ( कर्तव्यं ) मुपदिशत् प्रयोगविधौ प्रथमाभ्यर्हितं भवति । एवं स्वाध्यायोऽध्येतव्यः (श० ब्रा० ११।५।७।२) इत्यध्ययनविधावपि पूर्वं शिक्षणीयैः[१] उपनयन-तद्धर्म-शुचित्वादिबोधनैः आन्तरङ्गं[२] बलमाधत्ते इति न विशेषव्याख्यानमर्हति ।

### स्मार्तसूत्राणां श्रौतानन्तरप्रणयनहेतुः

अनुष्ठेयतया स्मार्तस्य प्रथमोपस्थितावपि स्मार्तसूत्राणां श्रौतसूत्रप्रणयनोत्तरकालिकत्वं सर्वासु शाखासु दृश्यते । तदत्र किं निदानमित्यत्र पारस्करगृह्यसूत्रभाष्यकर्तुः कर्काचार्यस्यैवाक्तीरूपस्याप्यन्ते—

ननु च पूर्वं स्मार्तानां गर्भाधानादीनामनुष्ठानं, पश्चाच्छ्रौतानामित्यतोऽनुष्ठानक्रमेण स्मार्तान्येव पूर्वमभिधेयानीति । अत्रोच्यते—नैतदेवम्, प्रत्यक्षश्रुतित्वात् । प्रत्यक्षा हि श्रुतयः, श्रौतेषु, स्मार्तेषु च पुनः कर्तृसामान्यादनुमेयाः श्रुतयः, स्मार्तानामपि हि वेदमूलत्वमुक्तम् । तस्मात्प्रत्यक्षश्रवणात्तान्येव पूर्वमभिधीयन्ते, न गर्भाधानादीनि ।

---

१. मनुः — उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥ ( २।६९ ) ।

२. मनुः—२।१६५ विद्यायां धर्मशास्त्रम् जै० २।४।१४ ।

अपरे त्वन्यथा वर्णयन्ति, स्मरणादेव स्मृतीनाम्प्रामाण्यम् । अव्यवच्छिन्नं हि स्मरणाष्टकादीनां 'अष्टकाः कर्तव्या' इति । अनादिरयं संसारः । स्मरणमप्येषामाद्येवेति ।

ननु चोक्तमापस्तम्बेन 'तेषामुत्सन्ना पाठाः प्रयोगादनुमीयन्त ( आप, १।१२। १० ) इति' यतो वेदमूलकत्वम्, नैतदेवम् । शाखानां सतीनामुत्सादो भवति, नासतीनाम् । तत्रायं दोषः स्यात्, य एव कश्चित्काञ्चिच्छाखां न पठति तस्यैव तद्विहितं स्मार्तं स्यात्, यस्तु पुनः पठेत्तस्य श्रौतमिति । तत्र पुरुषापेक्षया तदेव श्रौतं स्मार्त्तंचेत्युक्तरूपता स्यात् । स्मरणत्स्मृतिरिति चान्वर्थिकी संज्ञा, युक्तकर्मानुष्ठानं स्मरणं स्यात् । मनुगोतमवसिष्ठापस्तम्बादिभिर्ग्रन्थेनोपनिबद्धम् । तस्मात्कर्तृसामान्यादनुष्ठेयोऽयमर्थ इत्यनुमीयते । तथा च लिङ्गम् । नैमित्तिकं व्याहृतिहोमं 'प्रकृत्यामनसित' यदि ऋगुक्तो भूरिति चतुर्गृहीतिमाज्यं गृहीत्वा गार्हपत्ये जुहवथ । यदि यजुष्टो भुव इत्याग्नीध्रीये अन्वाहार्यपचने वा हविर्यज्ञे । यदि सामतः स्वरित्याहवनीय' इति प्रकृत्याह यद्यविज्ञातं तत्सर्वाण्यनुजुत्याहवनीये जुहवथेति । अविज्ञातं च यन्न विज्ञायते किमार्ग्वेदिकं याजुर्वेदिकं सामवेदिकं चेति, विनष्टं कर्म तत्स्मार्तमविज्ञातमित्युच्यते । वेदमूलत्वं ह्यवश्यमेवान्विष्यमाणं ज्ञायते तत्किमूलमिति, तस्मात्स्मृतिप्रवाहादेवायमर्थोऽनुष्ठेय इति गम्यते । ( पा० गृ० १।१।१ ) ।

**स्मार्तकल्पानामपि वेदाङ्गत्वम्**

'हस्तौ कल्पोऽथ पठ्यते' इति शिक्षायामुक्तिः । कल्पः श्रौतः स्मार्तश्चेति द्विविधः । तत्र स्मार्तकल्पस्यापि वेदाङ्गत्वमिति संस्कारगणपतौ सिद्धान्तितम् । तथा हि—

ननु 'हस्तौ कल्पान्प्रचक्षते' इत्यनेन श्रौतस्यैव वेदाङ्गत्वमायाति, न तु स्मार्तानाम् तस्य श्रुतिमूलकत्वात् । प्रत्यक्षा हि श्रुतयः । श्रौतेषु वेदत्रयीसाध्यं ज्योतिष्टोमादिकर्मानुष्ठानं होत्रमृग्वेदिकम्, याजुर्वेदिकम्, सामवेदिकमुद्गातृत्वमिति । न हि ज्ञायतेऽमुकवेदोक्तं स्मार्त्तमिति । अविज्ञातं स्मार्त्तम्, यन्न ज्ञायते किमृग्वेदिकम्, किं याजुर्वेदिकम्, किं वा सामवेदिकमिति, तस्माच्छ्रौतस्यैव वेदाङ्गत्वमिति चेन्न । स्मार्त्तानामपि वेदमूलकत्वमुक्तं भाट्टैः । स्मार्त्तेषु पुनः कर्तृसामान्यादनुमेयाः श्रुतयः । तथाचापस्तम्बः । ( १।१२।१० ) 'तासामुच्छिन्ना पाठाः प्रयोगादनुमीयन्ते । अतः स्मार्त्तस्याऽपि वेदमूलकत्वम्, वेदमूलकत्वाद्वेदाङ्गत्वमिति । विशेषणेनावश्याध्ययनता प्रतीयते, यतः 'साङ्गो वेदोऽध्येतव्यो ज्ञेयश्चेति ।' ( सं० ग० पृ० ३ ) ।

एवं च स्मार्तकल्पानां वेदाङ्गत्वं पारस्करसूत्रपरिशीलनेनापि स्पष्टं ज्ञायते षडङ्गमेके च कल्पमात्रे ।' ( पा० गृ० २।६ ) इति सूत्रप्रणयनात् । ततश्च स्मार्त्तकर्मकाण्डानामपि परिज्ञानं षडङ्गाध्ययनान्तर्गतमिति न सन्देहः ।

**स्मार्तकर्मणां वर्गीकरणम्**

क्रियारूपस्य धर्मस्य बहुरूपत्वेन कर्मणामानन्त्ये स्मार्तकर्मणां वर्गीकरणविषये विचार्यमाणे याज्ञवल्क्यस्मृतेः काण्डत्रये विभक्तत्वात् आचारकर्माणि व्यवहारकर्माणि प्रायश्चित्तकर्माणि चेति त्रेधा विभाग इति वक्तुं शक्यते ।

**तत्र आचारकर्मसु—**

१—संस्काराः
२—आचाराः ( प्रत्यह्निकानुष्ठेयविषयः )
३—दानम्
४—श्राद्धम्
५—शान्तिः
६—व्रतम्
७—प्रतिष्ठा
८—उत्सर्गः
इति सन्निविशन्ते ।

**व्यवहारकर्मसु**

१—राजधर्माः
२—समाजव्यवस्था
३—दायभागः
४—आखेटप्रभृतयः

**प्रायश्चित्तकर्मसु**

१—तपः
२—प्रायश्चितम्
३—शुद्धिः

इत्यादीनि गणयितुं शक्यन्ते । एतेषां प्रत्येकं विवेचनाय स्मृतिशास्त्रविद्भिर्निबन्धकारैर्बहुभिः प्रयक् पृथग् निबन्धा आरचिताः । अत एषां कर्मणां प्रत्येकं भेदोपभेदा नात्र विवरीतुं शक्यन्ते । मीमांसाग्रन्थेषु च यथावसरं विशेषतया स्पृष्टानि कानिचनेव स्मार्तकर्माणि । अतस्तेष्वेव स्मार्तकर्मसु प्रसिद्धानां संस्कारदानानीनां कर्मणामिह स्वरूपमुपस्थाप्यते ।

**संस्काराणामावश्यकता**

सृष्टावस्यां प्रजापतेरिच्छया सर्वोऽपि मानव एवानयैव मैथुनरीत्या प्रभवति मात्रा पित्रासामाजिकैश्चानुगृहीतः पालितः पोषितो युवा सन् सांसारिकाणि कार्याणि निर्वहन्नन्ते ऐहिकीं शारीरलीलामवसाययति । साधाव्यामपिस्थितौ भारतीया मनीषिणः 'संस्कारा' भिधां काञ्चन विशिष्टां क्रियामेवंविधामुपदिशन्ति, यया स ऐहिकफलेन सहामुष्मिकं फलमपि लभते ।

यथा हि शाणोल्लीढो मणिः सविशेषं चकास्ति, यथा वा अनेकैरङ्गैरुन्मीलितं चित्रं हृद्यमावर्जकं च सम्पद्यते, एवं संस्कारैर्मानवः सविशेषमान्तरिकमोजोद्यतनश्चित्रमिवान्याश्चित्रयितुं प्रभवति।

यावत्कालं संस्काराणां क्रिया यथावदनुष्ठिता आसन्, तावत्कालं यावदयं देशः समस्तस्य भूप्रदेशस्य किमुदेवलोकादेरपि शासकत्वेन[1] सम्मानितो बभूव। यथा यथा संस्काराणां विलोपः आलस्यादिवशात्प्रवृद्धस्तदारभ्यैव—

"अनभ्यासेन वेदानामाचारस्य च वर्जनात्।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान्जिघांसति॥" (५।४)

इति मनुसंवादितः अधोऽधःपतन्नयं देशः संप्रति वैदेशिकमुखापेक्षी अनादिद्रव्येष्वपि समवर्ततेति महतो दुःखस्य विषयः।

यत्र हि भारते देशे जन्मग्रहणाय देवा अपि—

"अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः।
यैर्जन्मलब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः॥ २१॥
कल्पायुषां स्थानजयात् पुनर्भवात् क्षणायुषां भारतभूमयो वरम्।
क्षणेन मर्त्येन कृतं मनस्विनः संन्यस्य संयात्यभयं पदं हरेः॥ २३॥
यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य कृतस्य शोभनम्।
तेनाजनाभेः स्मृतिजन्मनः स्याद् वर्षे हरिर्यं भजतां शं तनोति॥ २८॥
(भा० ५।१९)

इति कथयन्ति स्म। तत्राद्य भारते समुत्पन्नो मानव एवात्मानं गर्हयतीति किमतः परमाश्चर्यं स्यात्। तदेतद् वेद-वैदिकविद्वेषस्यैव फलमिति वयं प्रतीमः। संप्रति वैदेशिकविज्ञानचमत्कारचमत्कृता विपश्चितोऽपि वेदं, वैदिकमार्षं वचनं तत् प्रक्रियाश्च, तर्कवादेन भृशं दूषयन्तः बौद्ध-जैन-पारसीक-इस्लाम-क्रिश्चियन-प्रभृत्यपरमतान्यनुसरन्तोऽपि न जीवनस्य वास्तविकं सुखमीहोपरमं वा प्राप्नुवन्ति। यावतांशेनास्मदार्षवचनोक्तानामहिंसासत्यास्तेयादीनां यमादीनां तत्तन्मतेषु स्थितिरस्ति तावानेवांशो मानवं मानवतां च सत्यापयति, न तु सर्वांशतयेति वास्तविकी स्थितिः।

अस्माकं भारतीयैर्महर्षिभिः शारीरिकीं मानसिकीमाध्यात्मिकीं च शुद्धिमभिलक्ष्य संस्काराणामन्येषां च कर्मणां निर्धारणं कृतं विद्यते। अत एवास्माकं स्मार्तो वाङ्मयः सुमहाननितरसाधारणश्च लभ्यत इति महते गौरवायास्ति।

---

१. श० ब्रा० ११२।५।२-२६ नाहुषोपाख्यानम् (महा०)

**संस्कारलक्षणम्**

आत्मशरीरान्यतरनिष्ठो विहितक्रियाजन्योऽतिशयविशेषः संस्कारः । सच द्विविधः १ एकस्तावत्कर्मान्तराधिकारेऽनुकूलः । यथोपनयनजन्यो वेदाध्ययनाद्यधिकारापादकः । २ अपरस्तु समुत्पन्नदुरितनाशकः । यथा बीजगर्भसमुद्भवैनोनिर्बर्हणो जातकर्मादिजन्यः । ( वी० मि० १३२ सं० प्र० ) इति फलविधया द्विविधोऽप्ययं संस्कारोऽन्ययापि विधया विभिद्यते ।

**संस्काराः**

स्मार्तेषु कर्मसु मानवाभ्युदयाय क्रियमाणेषु संस्काराख्यं कर्मकाण्डं प्रधानम् । संस्कारपदार्थश्चानेकविधया विभाजितः । तत्र संस्कारगणपतौ । ते च द्विविधा— ब्राह्मा दैवाश्च । तथा च हारीतः—"द्विविधो हि संस्कारो भवति ब्राह्मो दैवश्चेति" । तत्र ब्राह्माः गर्भाधानायः, तथा च हारीतः—गर्भाधानादिः स्मार्तो ब्राह्मः स्नानान्त इति । ते च पञ्चविंशतिः । तदुक्तम् वीरमित्रोदये—

गर्भाधानं पुंसवनं सीमन्तो बलिरेव च ।
जातकृत्यं नामकर्म निष्क्रमोन्नाशनं परम् ॥ १ ॥

चौलकर्मोपनयनं तद्व्रतानाञ्चतुष्टयम् ।
स्नानोद्वाहौ चाग्रयणमष्टका च यथा तथा ॥ २ ॥

श्रावण्यामावश्वयुज्याञ्च मार्गशीर्ष्याञ्च पार्वणम् ।
उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः ॥ ३ ॥

संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः । इति ।

बलिर्विष्णुवलिः तैत्तिरीयाणाम् । तद्व्रतानां चतुष्टयम् । महानाम्नी महाव्रतम् । उपनिषद् गोदानानि । स्नानं समावर्तनम् । आग्रयणं नवान्नेष्टिः । अष्टका हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीषु विहितानि श्राद्धानि । श्रावण्याङ्क्रियमाणं श्रवणाकर्म । एवमाश्वयुज्यामाश्वयुजीकर्म । मार्गशीर्ष्यां स्रस्तरारोहणकर्म । पार्वणं वैअमावस्यायां क्रियमाणश्राद्धम् । उत्सर्गो वेदानामुत्सर्जनमिति । पाकयज्ञाद्या दैवाः । तथा च हारीतः—पाकयज्ञा हविर्यज्ञाः सौम्याश्च दैवाः इति । सौम्याः सोमयागाः अग्निष्टोमादयः । व्यासेन तु षोडशैव संस्कारा उक्ताः—

गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।
नामक्रिया निष्क्रमोन्नप्राशनं वपनक्रिया ॥ १ ॥
कर्णविधो व्रतादेशो वेदारम्भक्रियाविधिः ।
केशान्तःस्नानमुद्वाहो विवाहोऽग्निपरिग्रहः ॥ २ ॥

त्रेताग्निसंग्रहश्चैव संस्कारा: षोडशस्मृता: ।
नवैता: कर्णवेधान्ता मन्त्रवर्ज्यं क्रियाविधौ ॥ ३ ॥
विवाहो मन्त्रवत्तस्य शूद्रस्यामन्त्रतो दश । इति ।

१– गर्भाधानम् ( प्रजोत्पादनहेतुतया स्त्रीपुंयोगः )
२– पुंसवनम् ( पितृऋणापाकरणस्य पुरुषसन्तानप्राप्त्यर्थं गर्भावस्थायां क्रियमाणो विधि: )
३– सीमन्त: ( स्वदेशप्रेमोत्पादक: संस्कार: )
४– जातकर्म ( गार्भिकबैजिकैनोनिवर्हणकारको जननसंस्कार: )
५– नामकर्म ( व्यावहारिककार्यनिर्वहणोपयोगिसंज्ञाविधानम् )
६– निष्क्रमणम् ( सूर्यचन्द्र-जागतिकपदार्थानां दर्शनारम्भनिमित्तक: संस्कार: )
७– अन्नप्राशनम् ( अन्नाशनस्य प्राथमिक: प्रयोग: )
८– चूडाकरणम् ( हिन्दुत्वपरिचायकशिखासंरक्षणविधानात्मको विधि: )
९– उपनयनम् ( भारतीयविद्याग्रहणदीक्षात्मको विधि: )
१०–१३ वेदारम्भ: तदन्तर्गतानि चत्वारि वेदव्रतानि ( भारतीयविद्यास्रोतोऽवगाहनफलको विधि: )
१४– केशान्त: ( पुंस्त्वद्योतकप्राथमिककेशश्मश्रुसंस्कारात्मको विधि: )
१५– समावर्तनम् ( भारतीयविद्यादीक्षासमाप्तिफलको विधि: )
१६– विवाह: ( मानवजात्यनुच्छेदकतामूलक: संस्कार: )

अत्र कैश्चिदाचार्यै: निष्क्रमणस्य षोडशसु संख्या न क्रियते। सर्वान्ते च प्राणोत्क्रमणानन्तरं शरीरस्य तदाधेयस्य जीवस्य च सद्गतिप्राप्तयेऽनुष्ठीयमानस्य अन्त्येष्टिकर्मण: परिगणनं विधाय षोडश संख्या[१] समाधीयते। अथात्रातिप्रसिद्धस्य विवाहस्य विषये प्रासङ्गिकतया जनसाधारणभ्रमनिराकरणाय किमप्युच्यते।

**विवाहस्य सादित्वखण्डनम्**

विवाहस्य बहूनामङ्गानां निर्देश: ऋग्वेदे अष्टमाष्टकादौ विद्यते। तेन च विवाहस्यानादित्वे धर्ममूलत्वे नित्यत्वे ( अवश्यकर्तव्यत्वे ) वेदादेव सिद्धे, ये नाम केचित् महाभारतस्य श्वेतकेतूपाख्यानादिना विवाहस्य सादित्वं स्त्रीणां यथेष्टाचारत्वं सर्वोपभोग्यत्वं च प्राक्कालिकं साधयन्ति तै: कुशकाशावलम्बना एव। तथा हि एवं ते प्रष्टव्या—

महाभारतादीनां वेदमुपजीव्यैव प्रामाण्यमुत स्वातन्त्र्येण ? यदि स्वातन्त्र्येण इति कथयन्ति तर्हि ते वन्ध्या एव। सर्वेषां स्मृतिपुराणेतिहासादीनां वेदमूलत्वेनैव

१. वी० मि० १३५ म० प्र० ।

प्रामाण्यमभ्युपगच्छतामस्माकं न ततो र्बाहभूतैरन्यैः सह संव्यवहारो युज्यते। तेषां प्रामाण्यस्य पूर्वाध्याये साधित्वात्।

यदि वेदमूलत्वेन तर्हि वेदेनैव अनादितया सिद्धं विवाहं वेदोपजीवकं भारतं कथं वा प्रतिषेधेद्वा कथं प्रामाण्यमाप्नुयात्।

अतश्च उपाख्यानस्यास्य अन्यपरतैव वर्णनीया। सा चैवम्। तत्र हि महर्षिशापेन निवारितसंभोगः पाण्डुः स्वपत्न्यां पुत्रोत्पत्तिमभिलषन् तां तदर्थमन्यत्र नियोजयामास। तदनिच्छन्ती सा—

एवमुक्त्वा महाराज कुन्ती पाण्डुमभाषत।
कुरूणामृषभं वीरं तदा भूमिगते पतिम्॥ १॥
न मामर्हसि धर्मज्ञ वक्तुमेवं कथञ्चन।
धर्मपत्नीमभिरतां त्वयि राजीवलोचने॥ २॥
त्वमेव मुनिशार्दूल मय्यपत्यानि भारत।
वीर वीर्योपपन्नानि धर्मतो जनयिष्यसि॥ ३॥
स्वर्गं मनुजशार्दूल गच्छेयं सहिता त्वया।
अपत्याय च मां गच्छ त्वमेव कुरुनन्दन॥ ४॥
न ह्यहं मनसाप्यन्यं गच्छेयं त्वदृते नरम्।
त्वत्तः प्रतिविशिष्टश्च कोन्योऽस्ति भुवि मानवः॥ ५॥

इत्यादिना निराचकार। (म० भा० १।१२०)

एवं व्यभिचारदोषात् अतीव विभ्यन्तीं तां पुत्रगृघ्नुः पाण्डुः तद्भयापाकरणार्थं तत्र प्रवृत्तिसिद्धयर्थं च श्वेतकेतूपाख्यानादिकं किञ्चित्कथयति स्म। अतः पाण्डुवचनस्य न उपाख्याने तात्पर्यं किन्तु तस्याः प्रवर्तने।

उक्तं हि कुमारिलभट्टेन तन्त्रवार्तिके—"एवं भारतादिवाक्यानि व्याख्येयानि" तेषामपि हि "श्रावयेच्चतुरो वर्णान्" इत्येवमादिविध्यनुसारेण पुरुषार्थत्वान्वेषणादक्षरादिव्यतिक्रम्य धर्मार्थकाममोक्षाधर्मानर्थदुःखसंसारसाध्यसाधनप्रतिपत्तिरूपादानपरित्यागांगभूताः फलम्। तत्रापि तु दानराजमोक्षधर्मादिषु केचित् पुनः परकृतिपुराकल्परूपेणाङ्गभूताः फलम्। तत्रापि तु दानराजमोक्षधर्मादिषु केचित् पुनः परकृतिपुराकल्परूपेणार्थवादाः। सर्वोपाख्यानेषु च तात्पर्ये सति श्रावयेदिति विधेरानर्थवत्कथञ्चिद्गम्यमानस्तुतिनिन्दापरिग्रहः। तत्परत्वाच्च नातीवोपाख्यानेषु तत्त्वाभिनिवेशः कार्यः" इति।

अनेन अन्येऽपि ये केचन एतादृशान् अन्यार्थस्तावकत्वेन प्रवृत्तान् उपाख्यानरूपानर्थवादानवलम्ब्य यं कञ्चन स्वार्थं साधयितुमीहते तेऽपि प्रत्युक्ताः। अनेन

नैवं मन्तव्यम्, अस्माकं भारतादिगतानामुपाख्यानानां सर्वेषामसत्यतैवाभिप्रेतेति। असति प्रबलप्रमाणाविरोधे तेषामपि प्रामाण्यं स्वीकुर्म एव। परन्तु अनन्यपरैर्बलवत्तरैर्वेदभागैः सिद्धयन्तमर्थमेतादृशानि वेदापेक्षया दुर्बलप्रमाणकान्युपाख्यानानि न कम्पयितुमीशत इति। अतः सिद्धं प्रथेयं वैवाहिकी भारतीयानामस्माकमनादिसिद्धेति गुरुचरणाः।

सम्प्रति चैतस्याः कल्याणकारिण्या वैदिक्या वैवाहिकीप्रथायाः समाजिकैर्वस्तुतया तत्त्वमज्ञात्वा यथाकथञ्चिद्दाम्पत्यसम्बन्धाय व्यवहारः क्रियते। तेन च भारते निन्दितप्रजया देशस्यावनतिरेव भवेदिति स्मार्तधर्मानुयायिनां विचारः। यतो हि मनुः ( ३।६३, ४२ )

"कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥
अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजाः।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत्॥

संस्काराणामनुष्ठाने च फलमेवम् स्मर्यते—

गार्भैर्होमैर्जातकर्म चौलमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥
( मनु० २।२७ पृ० ३६ )

चित्रकर्मयथानेकैरंगैरुन्मील्यते शनैः।
मानुष्य[1]मपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः॥
( अंगिरा० बी० मी० १३६ सं० प्र० )

**आचाराः**

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्॥

इति याज्ञवल्क्यस्मृतौ ( १।१५ ) वचनात् उपनयनानन्तरं वर्णधर्मान् वर्जयित्वा ( मि० १।१५ ) शौचानामाचाराणां च शिक्षणमुक्तम्।' स्त्रीणामप्येतत् समानं विवाहादर्वाक् उपनयनस्थानीयत्वाद् विवाहस्य' इति ( १।१५ ) मिताक्षरायामुक्तेः स्त्रीणामप्याचारप्रशिक्षणं स्पष्टमेव। 'स्त्रीशूद्राश्च सधर्माणः' इति समानन्यायात् शूद्राणामपि आचारपरिज्ञानं युक्तमेव।

अतएव महाभारते—
'आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः।' ( वि० स० )
इति सर्ववर्णसाधारण्यतयैव धर्मस्य आचारप्रभवत्वमुक्तम्।

---

१. ब्राह्मण्यमपीति प्रचीनः पाठः।

'आचारहीनं न पुनन्ति वेदाः',

'छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव सूर्यकाले' इत्यादिशास्त्रीयैर्वचनैराचारस्य महिमा अपि सुविदित एव।

**आचारभेदाः**

स चायमाचाराख्यो धर्मः षड्विधः। तथाहि—मिताक्षरायां (या० स्मृ० १।१) विज्ञानेश्वरः—

'अत्र च धर्मशब्दः षड्विधस्मार्त(आचार)धर्मविषयः। तद्यथा—वर्णधर्मः। आश्रमधर्मः। वर्णाश्रमधर्मः। गुणधर्मः। निमित्तधर्मः। साधारणधर्मश्चेति।

तत्र वर्णधर्मो—ब्राह्मणो नित्यं मद्यं वर्जयेदित्यादिः। आश्रमधर्मोऽग्नीन्धनभैक्षचर्यादिः। वर्णाश्रमधर्मः पालाशो दण्डो ब्राह्मणस्येवमादिः। गुणधर्मः शास्त्रीयमभिषेकादिगुणयुक्तस्य राज्ञः प्रजापतिपालनादिः। निमित्तधर्मो विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चितम्। साधारणधर्मोऽहिंसादिः। 'न हिंस्यात् सर्वा भूतानि' इत्याचाण्डालं साधारणो धर्मः।' इति।

एतेषामाचाराणां प्रतिपादनं स्वतन्त्रेषु आचारभूषणम्, आचारमयूखः, आचारार्कः, आचारधेनुः, आचारचन्द्रिकाप्रभृतिषु प्रामाणिकविद्वद्भीरचितेषु महत्सु ग्रन्थेषु कृतमस्ति इति विशेषज्ञानं तत एव जिज्ञासुभिः करणीयम्।

**दानम्**

दानग्रन्थेषु दानपदार्थोविशिष्य विचारितः। तत्र मीमांसकवरेण्यस्य नीलकण्ठभट्टस्य दानमयूखादिह दानपदार्थस्वरूपमुद्ध्रियते।

परस्वत्वोत्पत्त्यन्तो द्रव्यत्यागो दानम्। व्यत्ययविनिमयादयस्त्वेतद्व्याप्या एव, दानपदप्रयोगादिति केचित्। परे प्रयोगस्य भाक्तत्वात्तद्भिन्नत्वेनापि विशेषणीयमित्याहुः। दामोदरठक्कुरस्तु—क्रयादिवारयितुमद्रष्टार्थत्वेन विशेषणीयम्। प्रीत्यादिदाने दानपदं गौणमित्यूचे। तन्न। सोमक्रयातिव्याप्त्यवारणात्। गौण्यां मानाभावाच्च।

दूरस्थविप्राद्युद्देशेन त्यक्तस्यापहर्ता तु प्रत्यवैत्येव। तादृशापहारे शिष्टविगानेन निषेधकल्पनात्। परस्वं नाददीतेत्येवमाकारकः प्रत्यक्षस्तु निषेधो न प्रवर्त्तते। अपहारदशायां कस्याऽपि स्वत्वाभावात्। दातुः पुनरुत्पत्तौ तु मानाभावः।

रक्षणे तु परकीयस्यापि प्रत्यादानादिनोपपद्यते एव, अग्न्युद्देशात्त्यक्तपुरोडाशादाविव। अन्यथा तत्राऽपि पुनरुत्पत्तिप्रयोजकस्विष्टकृदादिविध्यभावेऽपि पुरोडाशा-
दाविव। अन्यथा तत्रापि पुनरुत्पत्तिप्रयोजकस्विष्टकृदादिविध्यभावेऽपि पुनरुत्पत्ति-

प्रसङ्गः। स्विष्टकृदादिविधिसत्त्व एव पुनरुत्पत्तिर्नान्यथा। त्यक्तोपादाने विगानादिति निर्णायितं तन्त्ररत्नादौ।

न त्यागकाले स्वत्वापगमः, किं तु विप्रकर्त्तृकस्वीकारकाल इति तु कस्यचिद्-व्याहतः प्रलाप उपेक्षणीय एव। यदि केनचित् कश्चिद् ब्राह्मणमुद्दिश्य किञ्चिद् द्रव्यं सुवर्णरजतादि—

मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपत्।
दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाग्॥

इत्यादिवचनप्रतिपादितेन विधिनोत्सृज्य देशान्तरस्थाय तस्मै तद्द्रव्यं प्रहितम्। तच्च यदि मध्येमार्गं नष्टम्, चौरैरापहृतम्, तदा तु दातुर्न कोऽपि प्रत्यवायः। प्रमाणाभावात्। दानफलं तेनैव जायते। ब्राह्मणस्वत्वापत्त्यवसान-कस्योत्सर्गस्याजातत्वात्।

न चानेन वचसा दानानुकल्पेन पात्रोद्देश्यकः संकल्प एव विधीयते न तु पात्रस्वत्वोत्पत्तिपर्यन्ततापि, उद्देशमात्रश्रवणाद् इति वाच्यम्। प्रजापतिव्रतान्तर्गतो-द्यदादित्यानीक्षणसंकल्पवद् अत्रापि फलपर्यन्तताया आवश्यकत्वात्। अन्यथा तत्रापि संकल्पमात्रादेव फलं स्यात्। अस्त्विति चेन्मैवम्। तस्य व्रतमिति भावरूपव्रतोपक्रमेणा-भावरूपादित्यानीक्षणाद्युक्तिर्विरुद्धोपक्रमानुरोधात् प्रतिपालनीयस्वार्थाव्यभिचारिणीं भावरूपां संकल्पक्रियां लक्षयति। तत्र च परिपालितेऽनीक्षणादौ व्यभिचाराद् संकल्पलक्षणमेव दुर्घटं स्यात्। अतो न संकल्पमात्रात् तत्र फलम्।

किञ्चात्र वैधदेशकालावच्छेदेन पात्रहस्तप्रक्षेपासम्भवे तत्फलाय मानसपात्रो-द्देश्यको जलाधिकरणको जलप्रक्षेपो विधीयते। न तु पात्रस्वत्वापत्तिपर्यन्ततापि बाध्यते। यद् दातृप्रतिगृहीतृपदैस्त्यागप्रतिग्रहयोः प्रतीयते। अतो न प्रतिग्रहीतृव्यापारं विनोद्देशविशिष्टजलप्रक्षेपमात्रात् फलमिति दिक्। (दा० भ० १-२)

दानानि बहुविधानि शास्त्रे प्रतिपादितानि। तेषां कृते निबन्धकृद्भिराचार्यैः स्वातन्त्र्येण दानग्रन्था विरचिता इति सर्वेषां नामसंकलनमपि दुःशकम्। अतः किञ्चिदुच्यते।

**दानमहिमा**

दानस्य प्रशंसा सामवेदोपनिषदि। दानेन सर्वान् कामानवाप्नोति चिरंजीवित्वमिति।

देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह। इति तैत्तिरीयशाखामात्रे (जै० न्या० म० २।१।६)

व्यासः ।

यद्ददासि विशिष्टेभ्यो यदश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि ॥
ग्रासार्द्धमपि वा ग्रासमर्थिभ्यः किं न दीयते ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥ इत्यादिः ।

**दानस्य त्रिविधत्वम्**

तच्च दानं त्रिधोक्तं भगवद्गीतासु ( १७।२०-२२ )

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असंस्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥

विष्णुधर्मोत्तरे–एतेषां फलप्राप्तिविषये विशेषः–

तामसानां फलं भुङ्क्ते तिर्यक्त्वे मानवः सदा ।
वर्णसंकरभावेन वार्द्धान्वै यदि वा पुनः ॥
बाल्ये वा दासभावे वा नात्र कार्या विचारणा ।
अतोऽन्यथा तु मानुष्ये राजसानां फलं भवेत् ॥
सात्त्विकानां फलं भुङ्क्ते देवत्वे नात्र संशयः ।

मात्स्ये—

येषां पूर्वकृतं कर्म सात्त्विकं मनुजोत्तम ।
पौरुषेण विना तेषां केषांचिद् दृश्यते फलम् ॥
कर्मणा प्राप्यते लोकान् राजसस्य तथाफलम् ।
कृच्छ्रेण कर्मणा विद्धि तामसस्य तथाफलम् ॥

हारीतः—

मुमुर्षुस्तामसं यच्चाप्रकृतो ददातीति ।

अप्रकृतो सावधानः यदि ददाति तस्य फलं जन्मान्तरे तज्जन्मनि वा मुमूर्षुदशायामचेतनस्थितौ प्राप्नोतीत्यर्थः ।

अन्ये तु भेदाः गारुडे-

'अहते यत् सुवर्णादिदानं तत् कायिकं मतम् ।
आर्तानामभयं दद्यादेतद्धि वाचिकं स्मृतम् ॥
विद्यामादाय यज्जप्यैस्तद्दानं मानसं द्विजाः' ॥ इति ॥

एवमन्येऽपि विभेदास्तद्विशेषाश्च दानग्रन्थेषु सुबहु वर्णिताः इति तत-एवावगन्तव्याः ।

अथ दानप्रसङ्गेनातिप्रसिद्धः कन्यादानपदार्थो जनसाधारणस्य प्राप्तभ्रमनिवारणाय विचार्यते ।

**कन्यादाने विशेषः**

कन्यादानस्य दानस्वरूपं संप्रदायविद एवं विवेचयन्ति। दाने हि स्वत्वं हस्तान्तरीक्रियते। तत्र स्वत्वं नाम यथेष्टविनियोगार्हत्वम्। तादृशं च यथेष्टविनियोगार्हत्वं पुत्र्यां नास्ति लोकवेदसम्मतम्। अतस्तद्दाने अस्ति किमपि वैचित्र्यमिति तदत्र विचार्यते। यथा हि यावज्जीवं पितुः पितृत्वं नापैति तथा पुत्रीत्वमपि नापेतुं शक्नोति। अतः न पूर्णतया पुत्र्याः स्वस्वत्वनिवृत्तिपूर्वकं दानम्। किन्तु कन्यात्वस्य दानम्। कन्यात्वं हि नाम पुरुषसम्पर्काभावः? ततश्च पुरुषसम्पर्काभावरूपो गुणो पालनेन समाहिततया च रक्षितः। यदेव शीलरूपं स्वत्वं कन्यायां तिष्ठति, तदेव दानेन प्रतिगृहीत्रे वराय दीयते।

ननु कन्यात्वं नाम पुरुषसम्पर्कशून्यत्वमिति कुतः। 'कन्यात्वभञ्जनदोषस्य पृथङ्निर्देशात्'। विवाहोत्तरं कन्याशब्दप्रसिध्यभावाच्च। अतएव धर्मसिन्धौ कन्यादान संकल्पे 'प्रजोत्पादनार्थं' इति स्पष्टोल्लेखः धर्मप्रजासिद्ध्यर्थं प्रतिगृह्णामिति' वरस्य स्वीकृतिश्च उपपद्यते। वरश्च तं परपुरुषसंम्पर्काभाव स्वरूपं कन्यात्वमात्मीयमापादयन् यथेच्छं स्वामित्वात् भंक्तुं शक्नोति।

ननु तर्हि दानेनावाप्तं स्वीयं कन्यात्वं स्वयमभङ्क्त्वा अन्यस्मै दातुं प्रभविष्यति गवादिवत्, भंकचाऽपि वा दातुं प्रभवेदेव। यथा दानप्राप्ता गौः झटिति कंचित्कालं दुग्धादिना उपभुज्य वा पुनरन्यस्मै दीयते, तथैवेयमपि दातुं शक्यत एवेति चेन्न।

विवाहसंस्कारे 'गृभ्णामि' इति पाणिग्राहणिके मन्त्रे 'शरदः शतमिति' पत्या प्रतिज्ञानात् 'अर्यमणमिति' मन्त्रे प्रेतो मुञ्चतु मा पतेः स्वाहा, इति कन्याया पतिसहत्वे देवतानुग्रहकामनोपलम्भात् पितुर्दानात्पूर्वमपि वस्त्रपरिधापने वरेण 'तास्त्वादेवीर्जरसे' इति जरापर्यन्तं उभयोरैक्यप्रतिज्ञानात्। अतएव वेदमन्त्रप्रतिज्ञानुगृहीतं 'सकृत्प्रदीयते कन्या' इति स्मृतिवाक्यम्।

तदिदं कन्यात्वाविशेषात् पितृपत्योरुभयोरपि द्वितीयव्यक्तिसंप्रदानिकतां निषेधतीत्यलं दानविषयविस्तारेण।

**श्राद्धम्**

एतत्स्वरूपमाह पृथ्वीचन्द्रोदये मरीचिः—

प्रेतं पितॄंश्च निर्दिश्य भोज्यं यत्प्रियमात्मनः।
श्रद्धया दीयते यत्र तच्छ्राद्धं परिकीर्तितम्॥

एवं च ब्राह्मणांश्चतुर्थ्यन्तपदोपनीतमृतोद्देश्यकस्त्यागः श्राद्धमित्यर्थः।

तर्पणेतिप्रसक्तिवारणाय ब्राह्मणेति तत्र विप्रस्वीकाराभावात्, न तु त्यागाभावात्। द्रव्यदेवतासंयोगेन स्वधाशब्दप्रयोगाच्च त्यागस्य तत्रापि कल्पनीयत्वात्। 'न मम' इति पदोच्चारणं तु नास्ति, आचाराभावात्। यत्रैव यागाग्निहोत्रादौ तदाचारस्तत्रैव तन्मूलतया श्रुतिः कल्प्यते, न सर्वत्र। अङ्गपदं च विप्रस्वीकारस्य श्राद्धस्वरूपघटकतावारणार्थम्। 'पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे' इत्यादिना आपस्तम्बादिभिराहवनीयाधिकरणकहोमवत् त्यक्तद्रव्यप्रतिपत्तिव्यञ्जनात् मृतोद्देश्यकत्वं विवक्षितम्। जीवच्छ्राध्ये विष्णुश्राद्धादिदैवतश्राद्धे च श्राद्धपदं गौणंकुण्डपाय्यग्निहोत्रपदवद् इति।

श्राद्धभेदाः

धर्मशास्त्रीयनिबन्धेषु श्राद्धानां द्वादशविभाग उक्तः। तथा च विश्वामित्रवचनम्—

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम्।
पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम्॥
कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम्।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम्॥ इति।

एषां लक्षणानि भविष्ये—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम्।
वैश्वदेवविहीनं तदशक्तावुदकेन तु॥
एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते।
तदप्यदैवं कर्तव्यमयुग्मान्भोजयेद् द्विजान्॥
कामाय विहितं काम्यमभिप्रेतार्थसिद्धये।
वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते॥
गन्धोदकतिलैर्मिश्रं कुर्यात्पात्रचतुष्टम्।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्॥
ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम्।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि॥
अमावश्यां यत्क्रियते तत्पार्वणमिति स्मृतम्।
क्रियते वा पर्वणि यत्तत्पार्वणमिति स्थितिः॥

अत्र पर्व—

चतुर्दश्यष्टमी चैव अमावस्या च पूर्णिमा।
पर्वाण्येतानि राजेन्द्र रविसंक्रमणं तथा॥

इति विष्णुपुराणोक्तं संक्रान्त्यादि ।

गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां सम्पत्सुखार्थं पितृतृप्तये ॥
क्रियते शुद्धये यत्तु ब्राह्मणानां तु भोजनम् ।
शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय मनीषिभिः ॥
निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च ॥
देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते ।
गच्छन्देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा ॥
मात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः ।
शरीरोपचये श्राद्धमर्थोऽपचय एव च ।
पुष्ट्यर्थमेतद्विज्ञेयमौपचारिकमुच्यते ॥ इति ।

गोष्ठ्यां श्राद्धकर्तृसमुदाये संभूय सामग्रीसंपादनेन श्राद्धमित्यर्थः । युगपत्तीर्थादिप्राप्तौ विदुषां श्राद्धसम्पदा सुखार्थं भिन्नपाकाशक्तौ बहुपितृकश्राद्धमेकः कुर्यादिति कल्पतरुः शंखधरश्च । शुद्धिश्राद्धं प्रायश्चिताङ्गमिति मैथिलाः । अत्र पार्वणैकोद्दिष्टवृद्धिसपिण्डीकरणात्मकं चतुर्विधमेव मुख्यम् । तस्यैवायं प्रपंच इति निर्णयसिन्धौ ।

**श्राद्धस्य यागदानस्वरूपविचारः**

श्राद्धस्य 'पितॄन् यजेत्' 'पितृभ्यो दद्यात्' इत्युभयप्रयोगदर्शनाद्यागदानोभयात्मकम् । 'पितरो देवता' इति पित्र्युद्देश्यकत्यागत्वं, विप्रापेक्षया च दानत्वमित्यविरुद्धम् । एतेन नायं यागः । देवतोद्देशेन त्यागो यागः । यागोद्देश्या च देवतेत्यन्योन्याश्रयादिति गौडमतमपास्तम् । वैधशब्दविशेषोद्देश्यत्वस्य तस्य इदमिति स्वत्वारोपप्रतियोगित्वस्य वा देवतात्वात् । ( नि० सि० २६५ ) इति कमलाकरः ।

अथात्र श्राद्धप्रसङ्गान्मुक्तपुरुषस्य श्राद्धविषये चिन्त्यते ।

**मुक्तपुरुषश्राद्धविचारः**

यो हि मानवः गयाश्राद्धेन, काश्यां मरणेन, बदरीक्षेत्रे पिण्डदानेन वा मुक्त इति शास्त्रतो ज्ञायते तदुद्देशेनाधिकारिभिः श्राद्धं करणीयं न वेति विचारे, मुक्तस्य भोगायतनविग्रहस्यासद्भावात्, तदुद्देश्येन प्रेतस्य पिण्डादेर्भोक्तृत्वविरहात् श्राद्धस्यानावश्यकत्वमिति । तदेतन्न मनोरमम् । शास्त्रप्रामाण्यवादिनां हि यच्छब्द आह तदेव प्रमाणम् । शब्दार्थनिर्णयश्च मीमांसान्यायानुमत एव प्रमाणमिति स्थितौ, न हि काचन जात्यास्ति देवता नाम वैदिके व्यवहारे । अपि तु शास्त्रविधिबोधितः प्रदत्तभागभाक्त्वेनाभ्यर्हितः समस्ति कश्चन पदार्थो देवता नाम । स च न विग्रहमपेक्षते न वा प्रेतस्य भोक्तृत्वम् अपेक्षते तु विधिपालनमधिकारानपहारणमुखेनासंतोषं च ।

यथा हि सम्प्रतिलोकानुमतपुरुषाणां जयन्तीस्मृतिदिवसाद्युत्सवः न प्रमीतानां क्षेमाय तोषाय वा केनापि प्रत्यक्षेणानुमानेन वा प्रमाणेन साधयितुं शक्यते, इति स बहुजनानुमतक्रियापालनाधिकारानपहारणात्मप्रवृत्तये प्रवर्तकमनस्तोषाय वा प्रभवन् कर्तव्यकोटिमाटीकते। एवं प्रमीतानां पितृणां भोक्तृत्वभोगायतनशरीरधारित्वानुपपत्तेरपि न श्राद्धक्रिया व्याहन्तुं शक्यते, विधिपालनस्वाधिकारापरित्यागस्वकल्पाधिकारित्वरूपापेक्षितफलद्रव्यसम्बन्धस्य विद्यमानत्वात्। अत एव प्रेतविमुक्तफलकप्रेतशिलाश्राद्धकरणेऽपि पुनर्गयाश्राद्धप्रसक्तौ प्रेतशिलाश्राद्धावर्तनमाचार्या युक्तं प्रतियन्ति। एवं 'दण्डग्रहणमात्रेण नरो नारायणो भवेत्।' इत्यादिभिः संन्यासिनो मुक्तत्वबोधनेऽपि पुत्रं प्रति श्राद्धाधिकारस्यामपनोदनं प्रक्रियाविशेषेणोर्ध्वदैहिकं श्राद्धं च शास्त्रमेव व्यवस्थापयति। अपि च एकवारं गयाश्राद्धकरणेन मुक्तिबोधनेऽपि श्राद्धाधिकारिणः फलभूयापार्थितया द्विस्त्रिराद्यभ्यासेन गयाकरणवचांसि मुक्तश्राद्धं समर्थयन्ति। तथैव एकेन पुत्रेण कृतेन गयाश्राद्धेन मुक्तिलाभेऽपि—

'एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
गयायां तु विशेषेण ज्यायानपि समाचरेत्॥'

इत्यादि वचनेषु अपि शब्दाः सर्वानप्यधिकारिणः प्रवर्तयन्ति।

पूर्वपक्षे—तदुद्देश्यकश्राद्धक्रियात्यागेऽपि स्वाधिकारिकेऽन्याधिकारिके वा पार्वणे आभ्युदयिके तर्पणादौ मुक्तस्य देवतात्वेन प्रवेशस्यावश्यंभावात् पिण्डजलभागितया संकीर्तनस्यावश्यकत्वान्न सर्वथा तस्य देवतात्वं परिहीयते।

याज्ञिकसरण्या च—

अतः मीमांसापद्धत्या याज्ञिकसरण्या च विचारे क्रियमाणे शास्त्रीयवचनेभ्यः आप्तवचनेभ्यः स्वप्नादिविशेषश्राद्धकृत्प्रक्रियाभ्यो वा मुक्तत्वे ज्ञातेऽपि न श्राद्धकरणमपह्नोतुं शक्यते। एवं च आर्थवादिकतया मुक्तत्वबोधकवचनानि, न प्रधानं श्राद्धविधिं बाधितुं शक्नुवन्तीति, गया-बदरीक्षेत्रप्रदत्तपिण्डानां काश्यादिमुक्तिक्षेत्रमृतानां, योगसंन्यासादिविधया तनुत्यजां च मुक्तत्वेन मतानां सर्वदा यथाधिकारं श्राद्धं विधेयमेवेति।

**शान्तिकम्**

अस्पष्टपापनिदानकैहिकमात्रानिष्टनिवर्त्तकमपापप्रयोजकं वैधं कर्म शान्तिकम्। क्षयादिहरदानादावतिप्रसङ्गं वारयितुं निदानकान्तम्। आमुष्मिकानिष्टनिवर्त्तकं तं वारयितुमैहिकेति। प्रायश्चित्तं वारयितुं मात्रपदम्। प्रायश्चित्तं त्वामुष्मिकानिष्टनिवर्त्तकमपि। अभिचारप्रत्यभिचारादौ वारयितुं पापाप्रयोजकमिति। तयोः फलतो हिंसात्वेन तदनुष्ठाने प्रायश्चित्तोक्तेश्च पापप्रयोजकत्वात्। अनिष्टनिवर्त्तकत्वं च

शान्तिकस्य तन्निदानपापनाशरूपसामग्रीविघटकत्वेन । पुष्टिफलकं वैधं कर्म पौष्टिकम् । इति ( शा० म० ३ पृ० )

**शान्तिभेदाः**

शान्तयश्च विभिन्नाः शान्तिकमलाकरशान्तिमयूखशान्तिसागरप्रभृतिमहानिबन्धेषु प्रतिपादिताः । एतासां वर्गीकरणमेवं भवितुं युज्यते ।

१. जननशान्तयः—आसामनुष्ठानं जननिमित्तमादाय प्रवर्तते ।
२. वयः शान्तयः—षष्ट्यब्दादौ शारीरावस्थाविशेषेण प्रवर्तमाना उगरथशान्त्यादयः ।
३. अद्भुतशान्तयः—औत्पातिकं निमित्तं उत्कापातादिकमुद्दिश्य विहिताः शान्तयः ।
४. परिस्थितिशान्तयः—आशौचादिप्राप्तौ विवाहादिकर्तव्यतायां, मण्डपे कन्याया रजःस्रावे चेत्येवमादिविशेषपरिस्थितिषु विहिताः श्रीशान्त्यादयः।
५. उपसर्गशान्तयः—प्रेत-गन्धर्वगृहीतत्वाद्युपसर्गप्रयुक्ततया क्रियमाणा विनायकशान्त्यादयः ।

त इमे भेदा दिङ्मात्रेण प्रदर्शिताः ।

**व्रतम्**

यमनियमादिपालनं व्रतमिति सामान्यतयाभिधीयते । परं विशेषफलार्थतया विशेषनिमित्तेषु विशिष्टयोगे वा विहिताचारव्यवहाराशनादिभिरवस्थानं व्रतमिति पारिभाषिकोऽर्थः । अस्माकं भारतीयेषु प्रत्यहं केचन व्रतविधयः प्रवर्तन्त एव शास्त्रेषु । अथापि देशभेदेन कुलभेदेन च तेषु कतिपयानामेवानुष्ठानमाचरन्ति शिष्टाः । एतेषां च बहुलत्वात्सर्वेषां निर्देशस्य प्रकृतानुपयोगित्वाच्च नात्र विवरणं क्रियते । केचन सन्दिग्धा विषया एव विव्रियन्ते ।

**दुग्धव्रतम्**

अत्रेदं चिन्त्यते-दुग्धव्रते पायसादिवर्ज्यं न वेति । नेति केचित् । न हि प्रकृतिवर्जने विकारवर्जनं युक्तम् । दधिघृतादीनामपि वर्जनापत्तेः । न च यत्र प्रकृतिरसोपलम्भस्तद्वर्जनमिति वाच्यम् । मांसविकारस्योष्ट्रदध्यादेश्चावर्जनापत्तेः । तस्माद्दध्यादिवत्पायसादि भक्ष्यमिति ।

अत्र ब्रूमः । यत्र विकारे प्रकृतिरसोपलम्भस्तत्प्रत्यभिज्ञा वा तत्र विकारस्यापि निषेधः । अस्ति च मांसविकारे मांसप्रत्यभिज्ञामांसत्वानपायात् ।

यत्तु—औष्ट्रदध्यादेरनिषेधापत्तिरिति, तन्न । औष्ट्रमिति विकारतद्धितेन निषेधात् । तथा च विज्ञानेश्वरः—औष्ट्रमेकशफं स्त्रैणमारण्यकमयाविकम् । 'इत्यत्र' औष्ट्रमिति विकारतद्धिताच्छकृन्मूत्रादीनामपि निषेधः' इत्याह ।

नन्वेवं 'सन्धिन्यनिर्दशावत्सागोपयः परिवर्जयेत्' इति संधिन्यादिक्षीरनिषेधेऽपि दध्यादिग्रहणं स्यात् । सत्यं प्राप्तम् वचनेन, परं निषेधः । तदाहापरार्के शङ्खः—

क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ।
सप्तरात्रं व्रतं कुर्यात्प्रयत्नेन समाहितः ॥ इति ।

व्रतं—गोमूत्रयावकम् । तस्मात्पायसे दुग्धरसोपलम्भाद्वर्जनम् । अत एवामिक्षायां दधिसत्त्वेऽपि माधुर्योपलम्भात्पयोरूपत्वमुक्तम् मीमांसकैः (जै०न्या० ८।२।४) । तदुक्तम्—"पय एव घनीभूतमामिक्षेत्यभिधीयते" इति । दध्यादिषु तु तदभावादवर्जनम्" इति । एवं दध्यादिव्रते न तक्रादीनां निषेधः उक्तोभयहेत्वभावादिति केचित् । पूर्वोक्तशङ्खवचनात्सर्वविकारनिषेध इति युक्तं प्रतीमः ॥ ( नि०सि० १०७ )

**द्विदल-पदार्थः**

"कार्तिके द्विदलं त्यजेत्" इति । पाद्मेऽपि कार्तिकमाहात्म्ये—

राजिकामाढकं चैव नैवाद्यात्कार्तिकव्रती ।
द्विदलं तिलतैलं च तथान्यन्मतिदूषितम् ॥

**स्कान्देऽपि—**

कार्तिके वर्जयेत्तद्वद्द्विदलं बहुबीजकम् ।
माषमुद्गमसूराश्च चणकाश्च कुलित्थकाः ॥
निष्पावा राजमाषाश्च आटक्यो द्विदलं स्मृतम् ।
नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत् ॥

अत्र केचिदुत्पत्तिसमये दलद्वयं यस्य भवति तद्भूतपूर्वगत्या द्विदलमित्युच्यत इत्याहुः । उदाहरन्ति च—

"बीजमेव समुद्भूतं द्विदलं चाङ्कुरं विना ।
दृश्यते यत्र सस्येषु द्विदलं तन्निगद्यते ॥" इति ।

अन्ये तु लक्षणायां मानाभावाद्वचनस्य निर्मूलत्वाद् द्विदलात्मकं यस्य स्वरूपं तदेव वर्जयेदित्याहुः ( नि० सि० १४५ ) इति ।

**प्रतिष्ठा**

शास्त्रोक्तविधिना शास्त्रप्रोक्ताधिकरणे देवशक्तेः स्थिरीकरणप्रक्रिया एव प्रतिष्ठाशब्दाभिधेया । प्रतिष्ठायां शास्त्रीयविधयो बहुधा वर्णिताः सन्ति । तासां विभाजनम्—त्रेधा कर्तुं युज्यते ।

१. सौत्रविधिः ( कल्पविधिर्वा ) २. पौराणविधिः ३. आगमविधिरिति ।

प्रतिष्ठा च चला अचला चेति मुख्यतो द्विविधा। एतयोर्द्वयोरपि विशेषविधयः पूर्वोक्तासु त्रिषु शास्त्रीयविधासूपलभ्यन्ते।

सूत्रे कल्पापरपर्याये उपदिष्टविधयः एकस्मिन् द्वयोः त्रिषु वा दिनेषु कर्तुं शक्यन्ते। कमपि पक्षमादाय पौराणिकविधिस्तु प्रतिष्ठायाः दिनत्रयादर्वाङ् न कर्तुं पार्यते। विस्तृतश्च एकविंशतिदिनपर्यन्तमप्युपलभते। आगमिकः प्रतिष्ठाविधिस्तु पञ्चभ्यो होतृभ्यः तदूर्ध्वं वा एकपञ्चाशद्दिनपर्यन्तं पूरयितुं यथाशक्ति यथाश्रद्धं च कर्तुं शक्यते।

उत्तरभारते सौत्रः पौराणिकं एव च विधिः प्रचरति। दक्षिणभारते आगमिकविधिरपि विशेषतः रामानुजीयादिमतेषु प्रचलति। आगमिकविधिवचांसि प्रयोगाश्च तैत्तिरीयशाखीया एव प्रामाणिकतयोपलभ्यन्ते।

आगमविधावपि—वैष्णवागमः शैवागमश्चेति द्विधानुसरणम्। तेषां च विशेषः, तत्र तत्र ग्रन्थेषु स्पृष्टोऽपि प्रयोगाभावादस्पृष्ट एव।

**प्रतिष्ठाभेदाः**

प्रतिष्ठायाः पंचभेदाः, पुराणेषु सोमशंभुपद्धत्यादिग्रन्थेषु बहुशः विवेचिताः। तेषां च नामानि—

प्रतिष्ठा स्थापनम्, स्थितस्थापनम्, आस्थापनम् उत्थापनं चेति विद्यन्ते। प्रतिष्ठास्वासु अधिवासनविधेर्माहात्म्यं तेषामाधिक्यं च प्रभवति। संप्रति प्रतिष्ठायां जलाधिवासः, अन्नाधिवासः शय्याधिवासश्चेति त्रयो व्यवह्रियन्ते। एतेभ्योऽतिरिक्ताः गन्धाधिवासः-पुष्पाधिवासः फलाधिवासप्रभृतयः विशिष्टग्रन्थेषूपलभ्यन्ते इति प्रतिष्ठा-परिचयः।

**उत्सर्गः**

भारतीयकर्मकाण्डे उत्सर्गसंज्ञयाऽपि प्रवर्तते कर्म। "सर्वप्राण्युद्देश्येन सदा-स्वत्वनिवृत्तितया व्यवस्थापनमुत्सर्गः।" स च उत्सर्गकर्मकाण्डविधिः समाजहित-कारिषु स्थानेषु प्रवर्तते। अत एव उत्सर्गविधिः एवं परिचीयते—

१. तडागोत्सर्गः (जलाशयोत्सर्गः)
२. घट्टोत्सर्गः
३. कक्षोत्सर्गः
४. शालोत्सर्ग (धर्मशालाया उत्सर्गः)
५. प्रासादोत्सर्गः (पाठशालाचिकित्सालयादीनाम्)
६. नगरोत्सर्गः
७. वृषोत्सर्गः
८. चन्दनधेनूत्सर्गः इत्यादि

परमधुना उत्सर्गविधिपरिज्ञातारः एतस्य महात्म्यविदश्च विरला एवोपलभ्यन्ते। उत्सर्गविषयश्च उत्सर्गमयूखादिषु स्वतन्त्रेषु ग्रन्थेषु पुराणेषु चोक्तस्ततएवानुसन्धेयो विशेषपरिज्ञानाय।

**व्यवहारप्रायश्चित्तकर्माणि**

अन्यानि च यानि व्यवहारकर्माणि स्मृतिषु पुराणेषु च विवेचितानि तेषां प्रकृतकर्मकाण्डविषयसमनुपयोगित्वादत्र विवेचनं न क्रियते।

प्रायश्चित्तप्रकरण स्थानि च—तपःशुद्धिः प्रायश्चित्तम् इत्यादीनि तेषामाचारशान्तिकानि कर्मसु यथायथं प्रवेशः शास्त्रकृद्भिरुक्त इति नेह विन्नियन्ते।

इति स्मार्तकर्मकाण्डस्वरूपरिचयविषयः।

---

# पौराणिकर्मकाण्डस्वरूपाध्ययनम्

येषां कर्मणां पुराणग्रन्थेषु विधेरुल्लेखः तानि कर्माणि पौराणिकानि कथ्यन्ते। संस्कारादीनां विशेषतः श्राद्धक्रियादेः पुराणेषु स्मृतिषु चोभयत्राप्युल्लेखोऽस्तीति तेषां किंधर्मकतेति विचारे उभयधर्मकत्वमिति ब्रूमः। यतो हि संस्काराः श्रद्धाक्रिया च प्रत्येकं मानवस्याभ्यर्हिता। यद्यपि जन्मना सर्वोऽपि मानवः असंस्कृतत्वादनुपनीतत्वाच्च शूद्रधर्मैव भवितुमर्हति परं बालकस्य शास्त्रेणाधिकृतः संस्कर्त्ता जनको यदि त्रैवर्णिकः उपनीतश्च वर्तते तर्हि तस्य वेदे वैदिके कर्मणि चाधिकारित्वात् तत्पुत्रत्वेन वेदाधिकारस्याक्षुण्यतया प्राप्त्यर्हत्वाद् वैदिकमन्त्रसंहितया क्रिययैव संस्काराद्यनुष्ठानम्। यदि तु पिता असंस्कृतः (अनुपनीतः) देशान्तरप्रवासादिना च पुत्रस्य कर्म कर्तुं न समर्थः संस्कारकालश्च अतिक्रामति तदा तत्प्रतिनिधितया—

'पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥

इति याज्ञवल्क्यीयादिवचनात् पितामहादीनामधिकारः प्राप्नोति। तत्र तेषां प्रातिनिध्येन संस्कारकरणे प्रधानस्य पितुः संस्कारकर्तुर्वेदानर्हत्वाद् वैदिके कर्मण्यनुपनीततयानधिकृतत्वाच्च अमन्त्रकमेव संस्कारादि कार्यम्। प्रतिनिधेर्मूलपुरुषकार्यकर्तृत्वस्यैवातिदेशस्य युक्तत्वात्। अत एव च शूद्रस्य स्त्रिया वा स्वयं होमकर्तृत्वाभावेऽपि प्रतिनिधेर्ब्राह्मणस्य पौराणिकमन्त्रैरेव तत्क्रियाकरणत्वव्यवस्था संगच्छते।

**संस्कारश्राद्धादिविधीनां द्वैविध्यम्**

संस्काराः श्राद्धविधयश्च स्मार्ताः पौराणिकाश्चेति द्विविधाः। तत्र स्मार्त्तेषु वैदिकमन्त्रसहितविधिषु उपनीतास्त्रैवर्णिका अधिक्रियन्ते। पौराणिकेषु च विधिषु अनुपनीतास्त्रैवर्णिकाः स्त्रियः शूद्राश्च अधिक्रियन्ते।

ये च देवप्रतिष्ठा–तुलादानव्रतादिविधयः पुराणेषूपलभ्यन्ते। तत्र च वेदमन्त्रविनियोग उपलभ्यते। तेषु कर्मसु उपनीतानुपनीतोभयसाधारण्येनाधिकारित्वेऽपि अधिकारानुरूपं वेदमन्त्रयुक्ते तद्विरहिते च कर्मकाण्डे अधिकारः। विनियुक्तवेदमन्त्रस्थाने च—'नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्' इति याज्ञवल्क्यसंहिताया समानन्यायकनमोन्तो नाममन्त्रः पुराणान्तरप्रोक्तः। तत्पुराणे स्थलान्तरप्रोक्तो वा तद्दैवताकः पौराणो मन्त्रः प्रयोक्तव्यः।

## विनियुक्तवैदिकमन्त्रस्वरूपाध्ययनम्

स्मृतिषु पुराणेषु च कर्मणि विनियुक्तानां वेदमन्त्राणां प्रतीकमात्रमुक्तम्। तत्र तेषां पाठः कीदृशः कर्तव्य इति निर्णयो रुद्रकल्पद्रुमे—'नमो हिरण्यवाहवे' इत्यादीनामङ्गन्यासविधिषु प्रतीकमात्रेण विनियुक्तयजुर्मन्त्राणां परिसमाप्तिः कण्डिका-परिसमाप्त्या ज्ञेया। अतो भगवता गृह्यसूत्रकृता पारस्कराचार्येण तत्रोपवेशयेद्राजानं स्त्रियं वा 'प्रतिक्षत्र' इति, यज्ञानेति, विकृत्येनमभिमंत्रयते सुपर्णोसीति प्राग्विष्णु-क्रमेभ्य इति, सोष्यंतीमद्भिरभ्युक्षत्येजतुदशमास्य इति प्राग् यस्यैते, इत्यादौ मंत्राणां प्रकरणपाठाभावात्परादिना पूर्वांतत्वाभावेन वाक्यपरिसमाप्त्या च संदिग्धाया मंत्रपरिसमाप्तेः कण्डिकोपरि समाप्त्येव ज्ञापितत्वात्।

यत्तु काशीदीक्षितैर्विश्वनाथभट्टैश्च प्रयोगरत्ने रुद्रपद्धतौ च 'गणानां त्वे'ति मंत्रस्य 'वसो मम' इत्यन्तत्वमुक्तं तत्काण्वविषयम्। तेषां संहितायामेतावत्या एव कंडिकायाः समाम्नातत्वात्।

यत्तु कश्चिदाह—प्रयोगरत्ने रुद्रपद्धतौ च काशीदीक्षितादिभिः गणानां त्वेति मंत्रस्य वसोममेत्यन्तत्वोक्तेर्माध्यंदिनानामपि वसोममेत्यन्त एवायं मंत्र इति। तदयुक्तम्। तादृशमंत्रविनियोगकल्पनायां मानाभावात्। नहि श्रौतेऽपि तादृशमंत्र-विनियोगो दृष्टः। तत्र हि– अश्वं त्रिस्त्रिः परियंति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति प्रक्षालितेषु महिष्यश्वमुपसंविशत्याहमजानीति। कात्यायनाचार्यै-स्तस्य एव त्रिधा विनियोग उक्तः।

ननु च श्रौते त्रयाणां प्रत्येकं वाक्यत्वेन विनियोगादस्तु इदं तु गणानांत्वेति मन्त्रस्य पूजायां मंत्रकत्वश्रवणेन प्रत्येकं मन्त्रत्वायोगाद् वसो ममेति मन्त्रशेषस्य योग्यत्वात्प्रत्येकं संबन्धे सत्यपि मन्त्रशेषः सर्वान्ते श्रूयते इति तावत् एकवाक्यत्वाद् वसोममेत्यंतस्य मंत्रस्योक्तमिति चेन्न। एकस्यैव वाक्यस्य मंत्रत्वे आकांक्षितत्वेन मंत्रशेषस्य प्रत्येकं संबंधात्प्रत्येकं वाक्यांतरत्वेन प्रियाणामित्यस्य मंत्रांतरत्वमेवापद्येत न पुनः पूर्वमन्यशेषत्वम्। तस्मात्कंडिकापरिसमाप्त्यैव मंत्रपरिसमाप्तिरिति युक्तम्। शिष्टाचारोऽप्येवम् ( स० क० २२५ )।

## पौराणिककर्मवैशिष्ट्यम्

पौराणिके कर्मणि देवतानां प्रतिमासु आवाहनपूर्वकं पूजनादि भवति। अत्र उपचाराः केचन कृतास्तेभ्यः पूजां विधायैव कर्मणः स्वरूपं सिद्ध्यति। श्रौते स्मार्ते च प्रायः हवनाङ्गत्वेनान्यासां क्रियाणामुपस्थितिः। अत्र तु प्रायशः पूजा प्रधानम् हवनं च तदङ्गतया भवति। विष्णुयाग-रुद्रयागादौ होमप्रधानेऽपि कर्मणि पूजामन्तरा न हवनप्रवृत्तिरिति पूजा प्रधानपदार्थः। पुरश्चरणादौ तु होमस्याङ्गत्वं

स्पष्टमेव। पौराणिके कर्मणि भूयसी संज्ञया प्रसिद्धा कर्मान्ते दक्षिणा वितीर्यते। तत्र च न ब्राह्मण एव अधिकारी अपि तु दीनान्धबधिराश्रिताः सर्वेऽपि वर्णविचारमन्तरा अधिक्रियन्ते।

**पौराणिककर्मकाण्डविधाः**

पौराणिकानि कर्माणि बहुविधानि यद्यपि तेषां सङ्कलनं कुत्रचिन्नोपलभ्यते परमधस्तनदिशा पौराणकर्मणां वर्गीकरणं युक्तं भवति—

(१) संस्काराः, (२) औद्ध्वदेहिकम्, (३) व्रतविधिः सोद्यापनम्, (४) दानम्, (५) शान्तिः, (६) उत्सर्गः, (७) पूजा, (८) यागाः, (९) पुरश्चरणम्, (१०) जपः, (११) आचारः, (१२) शुद्धिः, (१३) परिचर्या।

एतेषु संस्कारादीनां कतिपयानां विवेचनं स्मार्तकर्मकाण्डप्रकरणे विहितम्। केषांचन स्वरूपप्रकाशनाध्याये स्पष्टं भविष्यति।

**कालापकर्षः**

पुराणवचनानां प्रभावेण कर्मसु कालापकर्षो भवति। तथाहि—एकस्य कर्मणः कश्चित्कालो विहितः। तच्च कर्म पूर्वभावि। तदुत्तरं यत्कर्म तत्केनापि हेतुना पूर्वभाविकर्मणः कालात्प्रागेव यद्यनुष्ठानं क्रियते तदा उत्तरकर्मणः अनुष्ठानवशाद् पूर्वभाविकर्मणः अवश्यक्रियत्वाच्च तस्य ( पूर्वभाविकर्मणः ) कालमनादृत्य कालात्पूर्वं क्रियाकरणं कालापकर्षः। यथा विवाहात्पूर्वं केशान्तसंस्कारः करणीयः। केशान्तस्य च षोडशो वर्षः कालः। स च नियते काले कर्त्तव्यः। स च कालः विवाहोत्तरं वा स्यात् विवाहपूर्वं वा। एवं स्नान-व्रतविसर्गापरपर्यायः समावर्त्तनसंस्कारोऽपि विवाहपूर्वभावी। तत्र विवाहत्पूर्वं व्रतविसर्गः, व्रतविसर्गात्पूर्वं केशान्त इति यः क्रमः स कालापकर्षविधयाऽपि पालनीयो भवति। विवाहनिमित्ततया केशान्तस्य पूर्वानुष्ठानप्रयोगः। तथा च संस्कारगणपतौ मनुः—

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥
गोदानं स्नानकं चैव समावर्त्तनकं तथा।
चौलोपनयने चैव न कुर्याद्दक्षिणायने॥

आवश्यके अपवादमाह मरीचिः—

गोदानासंस्कृतस्येह विवाहश्चेदुपस्थितः।
याम्यायनेऽपि कुर्वीत गोदानं स्नानकं च वै॥

चकारात्समावर्त्तनम्। षोडशवर्षो नियतकाल एव। अतो विवाहिताविवाहितयोर्भवतीति जयरामः। व्रतविसर्गात्पूर्वं कालापकर्षं कृत्वेति प्रयोगरत्नाकरः ( सं० ग० पृ० ७३१ )॥

एवमौर्ध्वदेहिकमासिकश्राद्धेषु द्वादशाहादिसपिण्डनपक्षे कालापकर्षं कृत्वा एकादशे द्वादशे वा दिने षोडशापि मासिकानि श्राद्धानि क्रियन्ते ।

---

**पुराणानामावश्यकत्वप्रतिपादनम्**

'चोदनालक्षणोऽर्थो धर्मः' ( जै० १।१।२ )
'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः'

इत्यादिवचनपर्यालोचनया वेदानुशिष्टा हितसाधनी क्रिया धर्म इति पर्यवस्यति । वेदश्च नित्यः स्वयम्भूशब्दराशिः । स च निर्मलान्तःकरणव्यक्तिवेद्य एव । परमोत्कृष्टज्ञानसाधनत्वात् सम्प्रत्यपि हि सर्वजनसुलभेभ्यः पुस्तकेभ्योऽपि कुशाग्रधिषणाः निर्मलनिरुपद्रवान्तःकरणवन्तो यथा ज्ञानमासादयन्ति न तथा स्थूलबुद्धयः । अत एव कविशिरोमणिनामाद्येनापि उक्तम्—

'बहुस्पृशापि स्थूलेन स्थीयते बहिरश्मवत् ।' इति

प्रकृतिनियम एवानूदितः । अन्तःकरणस्य नैर्मल्यं च मलाभिधसूक्ष्मदोषापनयनमूलकम् । ते च सूक्ष्मदोषाः विप्रलम्भ-लोभ-करणापाटवादिफलका बहुविधाः । दोषाणां च प्रभावेण निर्मलेऽपि वस्तुनि सदोषत्वमाभासते, पाण्डुरोगाक्रान्तस्य शंखरजतादिषु पीतरूपमिव । मनुष्यश्च स्वभावत एव कर्मफलभोगार्थं शरीरधारित्वात्सदोषः ।

तेषु च दोषेषु–जागरूकेषु सत्सु, न वेदानां वास्तविकमभिप्रायं ज्ञातुमीष्टे साधारणो मानव इति कारुणिकैर्महर्षिभिर्विद्यानां स्थानानि सङ्कलितानि । तानि च सर्वाणि विद्यास्थानानि धर्ममेवाभिप्रयन्तीति धर्मस्यापीमान्येव ज्ञापकहेतुमूलानि स्थानानि । तेषु च चतुर्दशसु विद्यास्थानेषु वेदवाक्यानां वास्तविकं तात्पर्यमवगमयितुं पुराणानामस्ति विशिष्टं महत्त्वम् । अत एवाभियुक्ताः स्मरन्ति–

बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति ।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥ इति च ।

**पुराणेतिहासयोः स्मृतिवाङ्मयत्वम्**

श्राद्धशूलपाणौ भविष्यपुराणे—

चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे ।
धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम ॥
अष्टादशपुराणानि चरितं राघवस्य च ।
रामस्य कुरुशार्दूल धर्मकामार्थसिद्धये ॥

तथोक्तं भारतं वीर पाराशर्येण धीमता।
वेदार्थं सकलं योज्यं धर्मशास्त्राणि च प्रभो ॥ इति।
( वीं० मि० १७ प० प्र० )

धर्मशास्त्रं नाम स्मृतिः। 'धर्मशास्त्रं तु वै स्मृतिः' इति ( मनु २।१० ) वचनात्।

**पौराणिकानां विभिन्नमतानां व्यवस्थापनम्**

धर्मशास्त्रमिति हि स्मृतिवचनानि। स्मृतयश्च बहुभिर्ऋषिभिः प्रणीताः। वक्तॄणामनेकत्वाच्च एकस्मिन्नेव विषये विभिन्नार्थानि वचनान्युपलभ्यन्ते। क्वचिदेकप्रोक्तेष्वपि स्मृतिग्रन्थेषु विभिन्नार्थानि वचनानि दृश्यन्ते। तदेतदनुसर्तॄणां कृते विचिकित्सास्पदं भवति। अपरे च स्मृतिग्रन्थेष्वेतादृशेषु श्रद्धां न दधति। तमेतं दोषजातं मीमांसासरण्यापरिहर्तुं निबन्धकाराणामेतदेव वैशिष्ट्यम्, यत्ते स्पष्टतो ज्ञातान् सूक्ष्मेक्षिकया वा परिदृश्यमानान् दोषान्युक्तिप्रमाणोपस्थापनपूर्वकमुद्धरन्ति, समुपस्थापयन्ति चाऽनुष्ठेयं विषयजातं निर्दुष्टम्।

वाक्येषु बहवः ईदृशा दोषा भवन्ति येषामुद्धारमन्तरा न वास्तविकं तथ्यं ज्ञातं भवति, आनन्त्याच्च तादृशाणां दोषाणामत्र परिगणनं कर्त्तुं न शक्यते। तथापि मीमांसकैर्विशेषतो ये दोषाः सम्भवन्ति तेषामुद्धारः कृतः। अन्ये च साम्प्रदायिकविदुषां सत्सङ्गेन परिहरणीयाः।

**पुराणेतिहासयोः प्रामाण्यम्**

तत्र च पुराणेतिहासयोर्विध्यंशः उपाख्यानांश इति द्वयमुपलभ्यते। तत्र विध्यंशानां स्मृतावेवान्तर्भावः। उपख्यानांशास्तु अर्थवादताविधया तदुपकारकाः, प्रत्यक्षस्मृतिविरोधे न ते प्रमाणतामर्हन्ति, यथा वैदिका अर्थवादा विशदवैदिकविधिविरोधे। अत एव हेतुमन्निगदाधिकरणेऽर्थवादवशाद् दर्वीपिठरादीनामपि होमसाधनत्वं नास्तीति बोध्यते। ( १ पृ० ) इति धर्मप्रदीपे।

मानवादिधर्मशास्त्रस्य पुराणेतिहासाद्युपाख्यानांशस्य च विरोधे धर्मशास्त्रस्यैव बलवत्वमादरणीयत्वं च। उपाख्यानांशेन हि व्यक्तिविशेषाणामाचारो वर्तमानतयावगम्यते, न तु धर्मतया। शास्त्रेण तु सर्वसाधारणी व्यवस्थावगम्यते इति सर्वेषां कृते शास्त्रमेव मुख्यतया समादरणीयं न त्वितिहासः। एतेन शास्त्रविरुद्धेतिहासवचनानि धर्मबुध्या न ग्राह्याणि भवन्ति, किन्तु अर्थशास्त्रव्यवहारेण तेषां प्रयोजनं कल्पनीयम्। अर्थशास्त्रानुसारित्वे च तेषां "अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः" ( या० स्मृ० २।२१ ) इति याज्ञवल्क्यवचनेन धर्मशास्त्रविधिमन्यथयितुं न शक्तिरिति।

**पौराणिकार्थवादचिन्तनम्**

तदर्थं मीमांसामतमुपस्थाप्यते–विधिगतं विशिष्टमर्थं वदन्ति स्तौतीति अर्थवादः। अस्य च अर्थवादरूपस्य वाक्यस्य स्वार्थप्रतिपादनपरत्वं नास्तीति सामान्यतया सर्वेऽपि प्रभवन्ति। अत एव च जैमिनिना–"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति ( जै० १।२।१ ) सूत्रेण आनर्थक्यमाशङ्क्य "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" ( जै० १।२।७ ) इत्यादिना विधेयार्थप्रशंसापरत्वेन विध्येकवाक्यतया प्रामाण्यं साधितम्।

सायणाचार्येण तु भाष्यभूमिकायां ( तै० सू० ५ ) अर्थवादानामवान्तरतात्पर्ये स्वार्थविषयता साधिता। तथा हि–महातात्पर्यस्य विधेयविषयत्वेऽप्यवान्तरतात्पर्यस्य स्वार्थविषयतानिवारणात्। "ग्रावाणः प्लवन्ते" इत्यर्थवादस्यापि स्वार्थे प्रामाण्यं प्रसज्येतेति चेत्, न। प्रमाणान्तरबाधकत्वात्। 'द्विः संवत्सरस्य शस्यं पच्यते" इत्याद्यर्थवादस्य तु बाधाभावेऽप्यनुवादत्वात्, न स्वार्थे प्रामाण्यम्। वेदनफलवचनानि तु नानुवादकानि नापि बाध्यानि। तस्मादर्थवादत्वेऽप्यस्त्येषां स्वार्थे प्रामाण्यम्। अन्यथा मन्त्रार्थवादादिभ्यो देवादीनां विग्रहादिमत्वं न सिद्ध्येदिति। स्मृतिषु त अर्थवादस्य स्वार्थतात्पर्यमादायैव बहुत्र विधिः।

अत एव शास्त्रदीपिकाकारोऽपि—

"स्मृतयो हि प्रायेणेतस्ततो विप्रकीर्णपरप्रकरणपठितवाक्यशेषगतसिद्धवन्निर्देशानुपपत्तिकल्पिततिरोहितप्रायविधिमूलाः" ( १।३।७ ) इति व्याचष्टे।

**अर्थवादभेदाः**

सोऽयमर्थवादो द्विविधः। विधिशेषः निषेधशेषश्च। तत्र "वायव्यं श्वेतमालभेत" इत्यादिना विधिशेषाणां "वायुर्वै क्षेपिष्ठा देवता" ( तै० सं० २।१।१ ) इत्यादीनामर्थवादानां विधेयार्थस्तावकतयार्थवत्वम्।

"बर्हिषि रजतं न देयम्" ( तै० सं० १।५।१।२ ) इत्यादिनिषेधशेषाणां "सोऽरोदीत्" इत्याद्यर्थवादानां तु निषेध्यनिन्दकतयार्थवत्वम्। अतश्च लक्षणया प्राशस्त्यमप्राशस्त्यं च स्वसन्निधिपठितविधिनिषेधापेक्षितत्वादर्थवादेन वाक्येन बोध्यते। तच्च प्राशस्त्यज्ञानं शब्दभावनायामितिकर्तव्यतात्वेन सम्बध्यते।

एवं विधिनिषेधशेषोऽप्ययमर्थवादः स्वरूपतस्त्रिविधः-गुणवादः अनुवादः, भूतार्थवादश्चेति।

**१—गुणवादः**

प्रमाणान्तरविरुद्धार्थबोधकं यत्र स गुणवादः। यथा 'आदित्यो यूपः"। यूपो हि पशुबन्धनार्थं काष्ठम्। तस्य आदित्यत्वं प्रत्यक्षप्रमाणविरुद्धम्। अतोऽयं

गुणवादः। घृतलेपनेन तेजस्वितया आदित्यत्वं गौण्य वृत्या उच्यते। ( जै० न्या० १।४।१३–१८ )। गौणीवृत्तिश्चेयं तत्सिद्धिः, जातिः, सारूप्यम्, प्रशंसा, भूमा, लिङ्गसमवाय इत्येतैः षड्भिर्निमित्तैर्भवति।

**२—अनुवादः**

प्रमाणान्तराधिगतार्थविषयकं वचनमनुवादः। यथा "वायुर्वै क्षेपिष्ठा देवता" ( तै० सं० २।१।१ ) अतिशीघ्रगामित्वं लोकसिद्धमेवात्रानूद्यते। तस्मादयमनुवादः।

**३—भूतार्थवादः**

यत्र प्रमाणान्तरविरोधोऽपि नास्ति लोकसिद्धार्थाऽनुवादोऽपि नास्ति तत्र भूतार्थवादः। यथा "इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्यादि। परकृतिपुराकल्पावपि भूतार्थवादे निविशेते। एकव्यक्तिकृतस्य कर्मणः कथनं परकृतिः। "अग्निर्वा अकामयत" इत्यादि। परप्रववक्तृकार्यादिप्रतिपादकः पुराकल्पः। यथा–'पुरा ब्राह्मणा अभैषुः' ( तै० सं० १।५।७।५ ) इति।

**विधान्तरम्**

विधेयां क्रियां स्तुवन्तोऽर्थवादाः फलविधिसदृशाः विधिवन्निगदा, ( जै० न्या० १।२।२ ) इत्युच्यन्ते। हेतुविधिसदृशाश्च हेतुवन्निगदा, ( जै० न्या० १।२।३ ) इत्युच्यते।

**अर्थवादानां फलवत्वम्**

यत्र विधौ फलं न श्रूयते तत्र आर्थवादिकं फलं कल्प्यते। यथा रात्रिसत्रन्याये ( जै० न्या० ४।३।८ ) साधितम्।

एवं सन्दिग्धार्थनिर्णयेऽपि अर्थवादानामुपयोगः। 'अक्ताः शर्कराः उपदधाति' इत्यत्र तेजो वै घृतमित्यर्थवादात् घृतमित्यञ्जनसाधनं निश्चीयते। ( जै० न्या० १।४।१९ )

**पुराणधर्मशास्त्रीयोदाहरणानि**

१—धर्मशास्त्रग्रन्थेषु विधिशेषोऽर्थवादः—

सन्ध्यामुपासते ये तु सततं संशितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्॥ इति
( दे० कौ० ८ ) इत्यादयः।

२—निषेधशेषार्थवादा अपि—

तैलस्त्रीमांससंभोगी पर्वस्वेतेषु वै पुमान्।
विण्मूत्रभोजनं नाम प्रयाति नरकं नृप।
( दे० कौ० ९ ) इत्याद्याः।

३—निर्णयसिन्धौ "पाण्यास्यौ हि द्विज: स्मृत:" इत्यस्य हेत्वर्थवादं हेमाद्रि-सम्मतमाह कमलाकर: ( नि० सि० ३१४ )।

४—माघमासं प्रकृत्य "अस्मिन्योगे त्वशक्तोऽपि स्नायादपिदिनत्रयम्" इति विधौ यत्किञ्चिद्दिनत्रयमिति भाट्टमतं "महामाघीं पुरस्कृत्य सस्नौ तत्र दिनत्रयम्" इति पद्योक्त्या 'सन्दिग्धेषु वाक्यशेषादिति' ( जै० न्या० १।४।१६ ) न्यायात् निरस्य त्रयोदश्याद्येवेति निश्चिक्ये कमलाकर: ( नि० सि० १६० )। एवमन्यत्रापि वाक्यशेषेण बहुत्र निर्णय:। ( या० स्मृ० १।५।६ )

५—स्मृतिचन्द्रिकायाम्—'तत्रात्मा जायते स्वयमि'त्यस्य हेतुत्वं निरस्यार्थ-वादत्वं स्थापितम्।

एवमयमर्थवादांशोऽपि पौराणिकीमीमांसासरण्या निकषभूतया परिघृष्ट: स्वस्यासन्दिग्धं प्रकटीकृत्य धार्मिकानां मनोबलं द्रढयिष्यतीति विद्वद्भि: प्रयतनीयम्।

### पौराणिकविधौ अवान्तरकर्मफलम्

यदि काम्यं कर्म तत्र फलस्यैव कर्मणि प्रयोजकत्वं सर्वविदितम्। कतिचन कर्माणि ईदृशान्यपि सन्ति येषामन्यकर्मान्त:पातित्वमस्ति। परं तदन्तर्गतस्य कस्य चनांशस्य तत्र पृथगपि फलं श्रूयते चेत्तदा तस्य व्यापककर्मण: सकाशात् पृथगपि प्रयोग:। यथा—नवरात्रव्रतं प्रतिपदादिनवम्यन्तमेकं कर्म। एतस्य व्रतस्यान्त: अष्टमी-नवमी इत्यनयोरपि गणनं वर्तते। परमनयोर्व्रतोपवासयो: फलमपि तत्रैव श्रूयते। ततश्च अष्टमीव्रतं नवमीव्रतं चेति द्वयमवेष्टिन्यायेन पृथगप्यनुष्ठीयते। तथा च निर्णयसिन्धौ तत्त्वं तु राजसूयेऽन्ययागै: समप्रधानाया: सहिताया अप्यवेष्टे: 'एतयान्नाद्यकामं याजयेत्' इत्येकत्वान्मध्ये विधानाच्च यथा फलार्थो बहि: प्रयोगस्तथा नवरात्रमध्यस्थाया अष्टम्या नवम्या वा फलार्थ: पृथक्प्रयोग:। ( १२३ पृ० ) इति। मीमांसायामवेष्टिन्यायेन महाप्रयोगात्सफलानामवान्तरकर्मणां पृथक् प्रयोगो निर्णीयते। स चावेष्टिन्यायोऽधस्तादुच्यते।

### अवेष्टिन्याय:

राजसूयप्रकरणे काचिदिष्टिरवेष्टिनामिका श्रूयते—'आग्नेयमष्टाकपालं निर्वपेत्, हिरण्यं दक्षिणा। ऐन्द्रमेकादशकपालम्, ऋषभो दक्षिणा, वैश्वदेवं चरुम्, पिशङ्गी मष्ठोही दक्षिणा। मैत्रावरुणीमामिक्षाम्, वशा दक्षिणा। बार्हस्पत्यं चरुम्, शितिपृष्ठो दक्षिणा' इति। तस्यामेवेष्टौ हविषां क्रमव्यत्यय: श्रूयते—'यदि ब्राह्मणो यजेत्, बार्हस्पत्यं मध्ये निधायाऽऽहुतिं हुत्वा तमभिधारयेत्। यदि राजन्य ऐन्द्रम्। यदि वैश्यो वैश्वदेवम्' इति। तत्र यथा पूर्वाधिकरणे ऐन्द्रवायवाग्रत्वं व्यवस्थापयितुं यदि शब्दयुक्तेन वाक्येन रथंतरं निमित्तत्वेनानूदितम् एवमत्रापि पञ्चमस्थाने

श्रूयमाणं बार्हस्पत्यं चरुं मध्ये तृतीयस्थाने स्थापयितुं 'यदि ब्राह्मणः' इत्यादि निमित्तत्वेनानूद्यते द्वितीयस्थाने श्रुतस्यैन्द्रस्य तृतीयस्थानेऽस्थापयितुं 'यदि राजन्यः' इत्यनुवादः। वैश्वदेवस्य तु स्वत एव तृतीयस्थाने श्रवणात्तत्र मध्ये निधान-विधिर्नित्यानुवादः।

ननु राजकर्तृके राजसूये ब्राह्मणवैश्ययोः प्राप्त्यभावान्नानुवादो युक्तः-इति चेत् न। तयोरपि राज्ययोगहेतुराजशब्दार्थत्वात्, इति प्राप्ते-सिद्धान्तः-राजशब्दः क्षत्रियजातौ रूढः, न तु राज्ययोगस्तस्य प्रवृत्तिनिमित्तम्। प्रत्युत-राजशब्दस्य राजयोगः प्रवृत्तिनिमित्तम्। 'राज्ञः कर्म, इति विगृह्य राजप्रातिपदिकस्योपरि प्रत्ययविशेषविधानात्। ब्राह्मणवैश्ययोः प्रजापालनेन राज्यशब्द उपचरितः। तस्माद्-अवेष्टौ ब्राह्मणवैश्यो पूर्वमप्राप्तावनेन वचनेन प्राप्येते।

ननु राजसूयस्य राजकर्तृकत्वात्तदन्तर्गताया अवेष्टेरपि तथात्वात्तस्यां ब्राह्मणवैश्ययोः प्रापणमयुक्तम्—इति चेत् मैवम्। अन्तरवेष्टौ तदसम्भवेऽपि राजसूया-द्वहिः प्रयुज्यमानायामवेष्टौ सत्सम्भवात्। तस्मात्-अत्र ब्राह्मणादिकर्तृकं यथोक्तगुण-विशिष्टं कर्मान्तरं विधीयते इति।

ततश्च पुराणेषु कस्यचन विशेषकर्मणः मध्ये तदङ्गत्वेन विधीयमानस्या-वान्तरकर्मणः फलं यदि श्रूयते तर्हि तस्य पृथगपि क्रियते, कर्तुं शक्यते च।

एवमिह कर्मकाण्डविद्याप्रदर्शनाध्याये पौराणिककर्मकाण्डविधाचिन्तनं समाप्यते।

**तन्त्रशब्दनिरुक्तिः**

सर्वेऽर्था येन तन्यन्ते त्रायन्ते च भयाज्जनाः।
इति तन्त्रस्य तन्त्रत्वं तन्त्रज्ञाः संप्रचक्षते॥ इति।
(विष्णुसंहितायाम् ७ प०)

एवं निरुक्तः साम्प्रदायिकेषु तन्त्रतया प्रसिद्धो यो ग्रन्थराशिर्वर्तते तस्मिन् प्रोक्तानि यानि कर्माणि तानि तान्त्रिककर्माणि। तेषामपि कर्मकाण्डानां भारतीयेषु अनुष्ठानं प्रचलद्रूपं वर्तते। परमत्र केचन तेषां प्रामाण्ये सन्देहं कुर्वते। तस्मादत्र प्रामाण्यचिन्तनमपि न प्रसङ्गमतिक्रामतीति तद्विषये संक्षिप्योच्यते।

**तन्त्रप्रामाण्यचिन्तनम्**

'इति नवमीपारणासाधकतया भट्टोजीदिक्षितलिखितडामररुद्रयामलवचनानां स्वातन्त्र्येण प्रामाण्याभावेऽपि उदाहृतपुराणवचनोपबृंहिततया प्रामाण्यं संगच्छते।'
(पु० चि० ८०)

'ननु धर्मप्रमाणेष्वनन्तर्भूतत्वात्कथं रुद्रयामलाद्युपन्यास इति चेत् न। शिष्टाचारानुवादकत्वेनैव तदुपन्यासात् स्मृत्यादिविरुद्धार्थकरुद्रयामलडामरादि-वचनानि तूपन्यासानर्हाण्येवेति बोध्यम् ।'

( पु० चि० ६६ )

इति धर्मशास्त्रनिबन्धकृता पुरुषार्थचिन्तामणिकारादीनां निर्णयात् तन्त्राणां तत्कर्मणां च सदाचारसमनुगृहीततया प्रामाण्यं वर्तते। तदर्थमाचारप्रामाण्यमत्र चिन्त्यते।

**आचारप्रामाण्यम्**

धर्मप्रमाणभूतेषु पदार्थेषु आचारस्यास्ति तृतीयं स्थानम् । तत्र स्मृतिमुक्ताफले ( १ व० ) आचारलक्षणमेवमुक्तम्—'धर्माधिकारनिमित्तशौचाचमनादिक्रियाविशेष आचार:' इति । तदिदं लक्षणं धर्मप्रमाणभूतस्याचारस्य नास्ति किन्तु—

'उपनीय गुरु: शिष्यं शिक्षयेच्छौचमादित: ।
आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥'

इति मनुप्रोक्तस्य ( २।६९ ), 'शौचाचारांश्च शिक्षयेत्' इति याज्ञवल्कीयस्य ( १।१५ )

'अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥'

इति मृत्युदायिन: ( मनु० ५।४ )

'आचारप्रभवो धर्मो' इति महाभारते धर्मज्ञानायापेक्षिप्रथमभूमिकात्वन वर्णितस्याचारस्येदं लक्षणम् । प्रामाण्यपदवीमारूढस्य तु आचारस्य धर्मत्वेनाविगीततया शिष्टप्रमितो स्मर्यमाणप्रवर्तक: धार्मिकजनानां व्यापारप्रयोजक: साम्प्रदायिको नियम इति लक्षणमस्माभिर्वक्तुं शक्यते । अयमेव आचार:—

कुलक्षये प्रणश्यन्ति कुलधर्मा: सनातना: ।
उत्साद्यन्ते जातिधर्मा: कुलधर्माश्च शाश्वता: ॥

( गीता १।४०-४३ )

इति शब्दै: महाभारतयुद्धारम्भे अर्जुनेन रक्षायै चिन्तित: । एतादृशो हि आचार: स्वप्रमाण्यबोधनाय स्मृतिं कल्पयति स्मृतिश्च तादृशीं श्रुतिं कल्पयित्वा तस्य प्रामाण्यं व्यवस्थापयति । अत एवैतस्य माधवाचार्य:—

'आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् ।
तेन द्व्यन्तरितं तेषां प्रामाण्यं विप्रकृष्यते ॥'

( जै० न्या० १।३।५ ) इति द्व्यन्तरितं प्रामाण्यमुवाच । एतादृश एवाचारः शिष्टाचारः, सदाचारः साधूनामाचार इत्यादिपदेन व्यवह्रियते ।

**शिष्टाचारः**

शिष्टानामाचारः शिष्टाचारः । शिष्टलक्षणं तूक्तं बौधायनेन—'शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्याः अलोलुपाः दम्भ दर्प-लोभ मोह-क्रोध-वर्जिताः ।

'धर्मेणाधिगतो येषां वेदः सपरिबृंहणः ।
शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः ।' इति ( बौ० ध० १।१।७ ) ।

तैतिरीयश्रुतौ तु स्पष्टमेवाचारस्य प्रामाण्यमुच्यते । यथा—

अथ यदि ते कर्मविचिकित्सा वा वृत्तिविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः युक्ता आयुक्ताः अलूक्षा धर्मकामाः स्युः यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः ।'

( तै० उ० ११।३-४; )

एवं 'सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत् ।' ( आप० ध० १।२०।८ )

इत्यापस्तम्बेनाचारप्रामाण्यमुद्घोषितम् । धर्मज्ञापकाचारसमानार्थक एव सदाचारशब्दोऽपि प्रवर्तते । तस्य च शब्दार्थः एवमुच्यते ।

**सदाचारशब्दार्थः**

'साधवः क्षीणदोषाः स्युः सच्छब्दो साधुवाचकः ।
तेषामाचरणं यत्तु सदाचारः स उच्यते ॥'

इति विष्णुपुराणे दर्शितः । आचरणमलौकिकम्, तेन लौकिकभोजनादिव्युदासः' इति मित्रमिश्र ( वी० मि० २।७ पृ० १९ ) व्याख्यानेन आचारे अलौकिकश्रेय.साधनत्वमप्यपेक्षितम् । तच्च वेदप्रमितिमन्तरा न भवतीति वेदवैदिकस्मृत्यविरुद्ध एव सदाचारः प्रमाणम् ।

**मङ्गलम्**

अयमेव सदाचारः गृह्यसूत्रग्रन्थेषु कर्त्तव्यतया मङ्गलशब्देन ग्रामशब्देन च निर्दिश्यते, यथा—

यथामङ्गलं केशशेषकरणम् ( पा० गृ० २।१।२१ )
यथामङ्गलं वा सर्वेषाम् ( पा० गृ० २।१।४ )
ग्रामवचनं च कुर्युः ।

विवाहश्मशानयोर्ग्रामं प्रविशतादिति वचनात्। तस्मात्तयोर्ग्रामः प्रमाणमिति श्रुतेः। ( पा० गृ० १।८।११-१३ ) इति।

**लोकगर्हा**

सदाचारस्योल्लङ्घनमेव लोकविद्वेषः लोकगर्हा वा। तथा हि विवाहप्रकरणे—

गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद् द्विजः।
गुरोश्च कन्यां शिष्यो वा तत्सन्तत्यापि नेष्यते॥
पुरुषत्रयपर्यन्तं भ्रात्रादेर्नैतदिष्यते।
वाक्सम्बन्धकृतानां तु स्नेहसम्बन्धभागिनाम्॥
विवाहोऽत्र न कर्त्तव्यो लोकगर्हा प्रसज्यते॥

इति ( २०८ पृ० ) निर्णयसिन्धूद्धृतवचने लोकगर्हाभयमुखेन शिष्टाचारपरिपालनं प्रत्याप्यते। अत्र भ्रात्रादेरिति आत्म-पितृ-मातृबान्धवरूपस्य वाक्सम्बन्धकृतानामिति गङ्गादेवादिसाक्षित्वेन वाचा धर्मभ्रातृभगिनीत्वेन मातापितृत्वेन वा प्रतिपन्नानामित्यर्थः। सापिण्ड्यादिना गुरुकन्यास्वीकारदोषाभावेऽपि लोकगर्हा दोषः सदाचारान्तर्गत एव। अत एव बार्हस्पत्येन केचन देवयान्याः पाणिग्रहणे निषेधः[१] कृतः। अत एव च —

'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमर्थाचरेन्न तु।' ( या० स्मृ० १।१०६ )

इत्यनेन सदाचारस्य प्रामाण्यं लोकविद्वेषभयं प्रदर्शयित्वा समर्थितः।

**दैशिकाचारः**

राजस्थान-गुर्जर-महाराष्ट्र-गौडादिषु प्राच्य-प्रतीच्योदीच्यादिषु वा देशेषु एकस्मिन् विषय एव परस्परं विभिन्नाः सदाचारा दृश्यन्ते। यथा—

होलकादयः प्राच्यैरेव क्रियन्ते। वसन्तोत्सवो होलका। आह्नीनैबुकादयो दाक्षिणात्यैः। स्वस्वकुलागतं करञ्जार्कादिस्थावरदेवतापूजादिकमाह्नीनैबुकशब्देनोच्यते। उद्वृषभयज्ञादय उदीच्यैः। ज्येष्ठमासस्य पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्ति सोऽयमुद्वृषभयज्ञः।' ( जै० न्या० वि० १।३।८ ) इति।

एवं पीयूषधारायां चौलप्रकरणे आचारस्य स्मृतिद्वैधे विकल्पस्वीकारे आचारस्य प्रामाण्यं ध्वन्यते ( मु० चि० संप्र० २६ श्लो० ) वटसावित्रीव्रततिथिद्वैधस्य सत्त्वेऽपि निबन्धेषु देशाचाराद् व्यवस्थाङ्गीक्रियते ( नि० सि० ७८ पृ० )।

ज्यौतिषशास्त्रे केचन योगा देशविशेष एव व्यवस्थाप्यन्ते। तदेतेषामाचारमूलकमेव तेषां प्रामाण्यमभ्युपगन्तव्यम्।

१. शिष्टविगानान्नादर्तव्यानि ( त्रि० सि० ३६८, ३७० पृ० )
विस्तृतमुपाख्यानं महाभारते। भागवते संकेतः। ९।१८।२२।

**दैशिकाचारे स्मृतिकल्पनम्**

आचारात्स्मृतिरनुमीयते । सा चानुमिता स्मृतिः श्रुतिश्च तत्तद्देशपदयुक्ता नानुमीयते, किन्तु सर्वसाधारणतयैव । एवं च प्राच्यानां होलाकाचारदर्शनात्तदर्थं 'होलाकाचरणीया' इति सामान्यविधिः कल्प्यते । न च प्रतीच्यानामनाचरणात्प्राच्यैरिति विशेषणपदं देयम् । सामान्यविधिनैव प्राच्याचारोपपत्तेः । प्रतीच्यानामनाचारणस्येच्छाविरहेणैवोपपतेः । इच्छाविरहश्च तद्देशीयपूर्वपूर्वाणामनाचारदर्शनात्, प्रतीच्यानामुल्कादानाद्याचारविरहवत् । नह्यनाचारार्थं वेदः कल्प्यते । तथा च यत्र सामान्यश्रुत्या उपपत्तिस्तत्र विशेषविधिर्न कल्प्यते, 'गुरुरनुगन्तव्यः सदा' इतिवत् । नहि कर्मकाले तदसम्भवात्तदन्यकाले इति तत्र विशेषणीयं भवति । इति । तदेतज्जैमिनिन्याये ( १।३।८ ) प्रथमाध्याये तृतीयपादे निर्णीतम् । साधारणस्मृतिकल्पनाबलादेव कश्चन सन्दिग्धो निर्णयो वा विषयो यदि स्वीयसदाचारपरिगृहीतनिबन्धग्रन्थेषु नोपलभ्यते र्तार्ह तस्मिन् विषये अन्यजनपरिगृहीतसदाचारवशान्निर्णयः कर्तव्य इति कमलाकरो ज्ञापयति ।

यथा नवरात्रप्रतिपन्निर्णये पूर्वोक्तवाक्यानां सर्वेषां हेमाद्र्याद्यलिखितत्वेन निर्मूलत्वात् तैश्चान्यनिर्णयस्यानुक्तेः । सामान्यनिर्णयात् पूर्वप्राप्तावपि गौडनिबन्धेषु विशेषनिर्णयादौदयिकी ग्राह्या । इति । ( १२२ पृ० ) दाक्षिणात्यैरिति शेषः । सोऽयं निर्णयप्रकारः पिकनेमाधिकरणेन ( जै० न्या० १।३।६ ) समर्थ्यते ।

**तान्त्रिककर्मकाण्डस्य वैदिकाभिमतत्वम्**

एवं चाचारस्य स्वरूपे ज्ञाते आचाररूपत्वेन च तन्त्राणां प्रामाण्यस्य वैदिकविद्वत्समर्थितत्वेनैव सम्प्रत्यपि वैदिकत्वाभिमानिनो हिन्दवः कतिचित् तान्त्रिकविधाः कर्मकाण्डे समाद्रियन्ते ।

**तन्त्रभेदाः**

अत एव धर्मकल्पद्रुमे (२।३१६) तन्त्रवाङ्मयनिरूपणमाचारशब्देनैव यथा—

आचारस्त्रिविधः प्रोक्तः साधकानां मनीषिभिः ।
दिव्यदक्षिणवामाश्चाधिकाराः सप्तकीर्तिताः ॥
सप्ताधिकारा विदुषः साधकस्य मता इमे ।
दीक्षा ततो महादीक्षा पुरश्चरणमेव च ॥
ततो महापुरश्चर्याभिषेकस्तदनन्तरम् ।
षष्ठो महाभिषेकश्च तद्भावोऽन्तिम ईरितः ॥
साधको येन लभते मोक्षं नास्तीह संशयः ।
एषां सप्ताधिकाराणां नामानि विविधानि वै ॥

तन्त्रादिशास्त्रे कथितान्याचारस्यानुसारतः।
परस्परं विप्रतीपावाचारौ वामदक्षिणौ ॥
द्वयोरभिन्नलक्ष्यत्वेऽप्येकः प्रवृत्तिनिष्ठितः।
निवृत्तिनिष्ठो ह्यपरः प्रवृत्तिर्हि निसर्गधा ॥
महाफला निवृत्तिस्तु विज्ञेया वेदवादिभिः।
अतो ह्युपासनायां वै आचारो द्विविधो मतः ॥
उपासनान्तर्भावा वै त्रिविधाश्चापि शुद्धयः।
आचारैः परिचीयन्ते प्रोक्तमेतन्मनीषिभिः ॥
स्वाचारभेदा विज्ञेया गुरुदेवोपदेशतः।
निवृत्तिमार्गपथिका रता यत्र निसर्गतः ॥
दिव्याचारः स भवति यस्तृतीयतया मतः।
द्वौ वामदक्षिणाचारौ विरुद्धौ हि परस्परम् ॥
दिव्याचारो नो विरुद्धः सर्वजीवहितप्रदः।
वामःप्रवृत्तिपरको दक्षिणस्तु निवृत्तिगः ॥
दिव्याचार उभाभ्यां वै परः श्रेयस्करो मतः।
जने सत्त्वप्रधाने तु दिव्याचारः प्रशस्यते ॥
दक्षाचारो रजोमुख्ये वामाचाराश्च तामसे।
वामाचारश्च यो यं वै वीराचारः स कथ्यते ॥
यथा द्वैविध्यमापन्नो दक्षिणाचार उच्यते ॥
वामाचारे तथा चाष्टौ भेदाः प्रोक्ता हि तान्त्रिकैः ॥

**वैदिकतान्त्रिककर्मसमुच्चयविचारः**

"तन्त्रे न श्रुतिपथगलितोऽधिकारी। अत एव शङ्करभगवत्पादानां तन्त्रानुसारिप्रपञ्चसारनामकनिबन्धनिर्माणमपि साधु संगच्छते। न च वेदपथगलितोपरि यथा कृपया शिवेन तन्त्राणि निर्मितानि तथा तदुपरि कृपयैव भगवत्पादैः निर्मितमिति वक्तुं शक्यते। नेदं साधकमिति वाच्यम्। भगवत्पादानां वैदिक एव पक्षपातो न तदन्यस्मिन् तथा सति बुद्धादिशास्त्रानुसार्यपि निबन्धरचनं स्यात्। किं च स्वकृतमानसपूजायाम्—

मन्त्रांस्तान्त्रिकवैदिकान् परिपठन् सानन्दमत्यादरात्।
स्नानं ते परिकल्पयामि जननि स्नेहात्वमङ्गीकुरु ॥

इति श्लोके तान्त्रिकवैदिकयोः समुच्चयलेखनेन तान्त्रिकत्वं वैदिकत्वमविरुद्धं तदभिप्रेतं सुस्पष्टम्। इति (परशुरामकल्पसूत्रे रामेश्वरवृत्तौ १६ पत्रे) 'स्नानकर्मणि' इत्यादि परशुरामकल्पसूत्रे (३।४) व्याख्यायां रामेश्वरः—

'स्नानकर्मणि प्राप्ते' स्नानावसरे। एतेन वैदिकस्नानोत्तरत्वं अस्य सूचितम्। अयमेवार्थः स्पष्टमुक्तः त्रिपुरार्णवे-"त्रैवर्णिकैर्वैदिकान्ते तान्त्रिकं क्रियतेऽखिलम्"। इति। पत्र १०२॥

एतेनेदं स्पष्टं ज्ञायते यद् वैदिकाः यदि फलभूमार्थितया तान्त्रिकं कर्म चिकीर्षन्ति तर्हि वैदिककर्मकरणानन्तरं तान्त्रिकं कर्म कुर्युः। यदि प्रयोगाविरोधी भवति तदा मध्येऽपि तस्य प्रयोगः कर्तुं शक्यते।

**तान्त्रिककर्मणां शुद्धे वैदिके कर्मणि निषेधः**

रुद्रकल्पद्रुमे—यत्तु केचिदाहुः संकल्पानन्तरं प्राङ्न्यासासम्भवाद् भूतशुद्धिं प्राणप्रतिष्ठां मातृकान्यासांश्च कुर्वन्ति सर्वमन्त्रजपाङ्गत्वेन तन्त्रोक्तत्वादिति। तन्न।

"दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात्।
प्राणायामैस्त्रिभिः पूतस्तत्क्षणाज्ज्वलतेऽग्निवत्।
यथा पर्वतधातूनां दोषान् दहति पावकः।
"एवमन्तर्गतं पापं प्राणायामेन दह्यते"।

इति योगियाज्ञवल्क्येन प्राणायामैरेवेन्द्रियदोषान्तर्गतपापदाहप्रतिपादनद्वारात्मशुद्धिप्रतिपादनाद्वैदिकमन्त्रजपादियोग्यतायास्तैरेव सिद्धैस्तान्त्रिकाणां भूतशुद्ध्यादीनां हि तान्त्रिकमन्त्रजपादियोग्यता प्रतिपादकत्वाच्च न वैदिकरुद्रजपादिषु तद्योग्यताप्रतिपादकत्वेन तेषामपेक्षा। अत एव सन्ध्योपासनादौ भूतशुद्ध्याद्यापत्तेः। किञ्च—

"बोधायनोक्तमेवाहं प्रवक्ष्ये कौशिको द्विजः।
कामिनां सर्वकामानामकामानां च मुक्तये॥
अकामः सर्वकामो वा जपेद्यः शतरुद्रियम्।
परस्यार्थेऽथवा तीर्थे स्नानं कृत्वा यथाविधि॥
रक्षार्थं तु शिखाग्रन्थिरूर्ध्वकेशीति मन्त्रतः"।

इति देवयाज्ञिकपद्धत्यनुसारी पाठः।
सहस्राणीति मन्त्रेण प्रार्थयेच्च ततो महीम्।
ककुभं प्रार्थयेत्तिष्ठन् य एतावंत मन्त्रतः॥
उपविश्य शुचौ देशे प्राणानायम्य वाग्यतः।
सङ्कल्पजपहोमैस्तु यदर्थं येन वेति च॥
रुद्रमन्त्रस्य वेदोत्र स्यादनुष्टुवृषिर्यथा।
अघोरः सर्पाकारः आदित्यो देवता परः॥
न्यासम्भवादिभिः कृत्वा नमोऽन्ते प्रणवान्वितैः"।

इति हेमाद्रौ बोधायनकल्पे सर्वकर्माङ्गत्वेन स्मृतिविहितानेवोपवेशनप्राणायाम-सङ्कल्पाननूद्य ऋष्यादिस्मरणपूर्वकं न्यासकर्तव्यताविधानेन मध्ये भूतशुद्धयादीनां निवृत्यर्थत्वात् । अन्यथा स्मृतितः प्राप्तत्वे उपवेशनार्थानुवादस्यानर्थक्यापत्तेः । किञ्च— भूतशुद्धयादीमनूद्यत्वे उपवेशनादिवद् भूतशुध्याद्यप्यनूद्येत । अत एव देवयाज्ञिकनारायणभट्टादिभिर्भूतशुध्यादिकं नोपन्यस्तम् । ( रु० क० २१६ ) इति । एतेन यदि कश्चन विशुद्धमेव कर्म चिकीर्षति तदा ।

**तन्त्राणां श्रौताश्रौतभेदेन द्वैविध्यम्**

तन्त्राणां वाङ्मयं डामरयामलागमादिभेदेन बहुधा भिद्यते । तेषां च श्रौताश्रौतभेदेनास्ति द्वैविध्यम् । तथा हि—वीरमित्रोदये संस्कारप्रकाशे "शैवाद्यागमोऽपि द्विविधः इत्युपक्रम्य स्वसमानयोगक्षेमवैष्णवपाञ्चरात्राद्यागमानामपि श्रौताश्रौतभेदेन द्वैविध्यमुक्तं भवति । ( २३ पृ० ) एवं च यद्धि तान्त्रिकं श्रौतं तत्तु वैदिकेन कर्मणा समुच्चेतुं शक्यते । वैदिकमार्गानुयायिभिश्च नानुष्ठातुमभिप्रेयते । अत एव अश्रौतस्य तन्त्रस्य कर्मकाण्डे ऐक्यरूप्येण सर्वेऽप्याचाण्डालमधिकारिणः । श्रौते तु यथाधिकारं चतुर्णामेव वर्णानामिति विशेषः । प्रबन्धेऽस्मिन् श्रौतस्य तन्त्र-कर्मकाण्डस्य विचारः कृतस्तस्यैव वैदिककर्मणा साहचर्यस्य भवितुं शक्यत्वादिति ।

**तान्त्रिकी उपासना**

तन्त्रे उपास्यानां देवतादीनां वशीकरणमिव स्वाभिलषितक्रियाकारित्वं सम्पद्यत इति जनप्रसिद्धिः । तच्चोपासनां विना न सम्भवतीति उपासनाभेदा उच्यन्ते—

उपासनास्त्रयः सन्ति सात्विकी राजसी तथा ।
तामसी च तृतीया सा गर्हितात्र निगद्यते ॥
भूतवेतालकूष्माण्डपिशाचानामुपासना ।
सा ज्ञेया तामसी घोरा देवानां सात्विकी स्मृता ॥
यक्षाणां राक्षसाणां च या सा ज्ञेया तु राजसी ॥
( वा० रा० २७५।१८ )

अत एव च श्रीमद्भगवद्गीतायामुच्यते—

देवान् देवयजो यान्ति पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या मद्भक्ता यान्ति मामपि ॥

एवमयं तन्त्रकर्मकाण्डपरिचायनाय संक्षिप्तो निर्देशः । प्रयोगपरिचयस्तु अग्र दास्यत इति ।

**मिश्रकर्मकाण्डम्**

श्रीमद्भागवते 'वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।' इति ( ११।२७।७ ) भगवता मखत्वेनाभिप्रेतस्य भारतीयकर्मकाण्डस्य वैदिकतालिका-

मिश्रभेदेन त्रैविध्यमाख्यातम्। तत्र वैदिककर्मकाण्डस्य श्रौत स्मार्त पौराणिकविधया त्रिविधत्वम्। एतासां च तिसृणामपि विधानां परिचयः पूर्वमुक्तः। तदनन्तरं तान्त्रिक-कर्मकाण्डपरिचयाय तदीयस्वरूप-प्रामाण्यादिविषयेऽपि चिन्तितम्। अधुना मिश्रत्वेनाभिमतस्य कर्मकाण्डस्य परिचय उपस्थाप्यते।

**मिश्रशब्दार्थः**

मिश्रं हि तदभिधीयते यत्र विभिन्नजातीयपदार्थयोरेकत्र संबद्धा स्थितिर्भवति। एवं च पूर्वोक्तानां श्रौत-स्मार्त-पौराणिक-तान्त्रिककर्मसु यथायथमितरकर्मकाण्ड-विधानामनुष्ठानं यदा भवति तदा मिश्रं तत्कर्मकाण्डमिति कथ्यते। तत्र श्रौतस्मार्त-कर्मकाण्डे यास्तु बहुषु स्थलेषु नीरक्षीरवदैकरूप्यापन्नं मिश्रणं दृश्यते। अत एव आधानसोमयागादीनां श्रौतत्वेऽपि तत्र कर्मांगत्वेन वृद्धिश्राद्धादेः श्रौतस्य कर्मणो निर्णयः—

'नानिष्ट्वा तु पितॄन् श्राद्धे कर्मवैदिकमाचरेत्।' इति रुद्रकल्पद्रुम ( सं० ग०—७५ ) वचनात् वैदिकस्य कर्मण आरम्भे अविशेषेण करणीयत्वेन सम्प्रदाय-सिद्धत्वाच्च युक्तो भवति।

साम्प्रतिके च काले स्मार्तानां कर्मणां विवाहादिसंस्काराणां पौराणिकैः सहापि संमिश्रणं बहुधोपलक्ष्यते। तच्च मिश्रणं सप्तपद्यादितत्तदवान्तरकर्मगतंपूर्वोत्तराङ्ग-त्वेन वा प्रचलितं दृश्यते। सत्यपि स्मार्ते पौराणिके च कर्मणि परस्परं मिश्रणो न सर्वथा तयोः स्वरूपमन्यथायितं भवति। अत एव तुरीयवर्णानां विशुद्धं पौराणि-कमपि कृत्यं स्पष्टतया संस्कारोर्ध्वदैहिकादीनां विधीयत एव। तान्त्रिकं च कर्मकाण्डं प्रायशः पौराणिक एव कर्मकाण्डे मिश्रितं दृश्यते, न श्रौतस्मार्तयोः।

यद्यपि केचन वैदिकाभिमानिनः श्रौतीं याज्ञिकीं हिंसापद्धतिं तान्त्रिकप्रभाव-प्रसृतां मन्यन्ते, परमादिप्रसिद्धवेदवेदाङ्गवाङ्मये सपाशुककर्मणां स्पष्टतयोपलब्धेर्न युक्तिप्रमाणसहत्वं निश्चेतुं शक्यते। पौराणिकतान्त्रिककर्मकाण्डमिश्रणं संप्रति विशेषतः गायत्रीपुरश्चरणे शतसहस्रा-युत-लक्ष-कोटिचण्ड्यादिमहानुष्ठाने च प्रचुरद्रव्यं दृश्यते। तत्र पुराणप्रोक्तपूजाजपाद्यनुष्ठाने न सह न्यासादितान्त्रिकविधीनां क्रियमाणत्वात्।

चतुर्वेदीयपुण्याहवाचनादिषु स्वसमानजातीयशाखान्तरीयकर्मकाण्डविधाना-मपि मिश्रणं सम्प्रदायसिद्धं निबन्धग्रन्थानुमोदितं चेत्यन्यो विस्तारः।

**मिश्रकर्मकाण्डप्रवृत्तिकारणम्**

यदि हि श्रौतं स्मार्तं पौराणं तान्त्रिकमिति चतुर्विधमपि कर्मकाण्डं स्वस्मिन् पूर्णं फलाधायकं च वर्तते तर्हि श्रुतोऽपिकर्मकाण्डस्य प्रवृत्तिरिति विचारे फलभूयस्त्व-

कामनया मिश्रकर्मकाण्डप्रवृत्तिरिति ब्रूमः। श्रीमद्भागवते भगवत्परिचर्याप्रकरणे वैदिकतान्त्रिकमिश्रितक्रियाविधानमुपदिश्य—

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः।
अर्चन्नुभयतः सिद्धं मन्त्रो विन्दत्यभीप्सितम्॥ (११।२७।४९)

इत्यत्र वैदिकतान्त्रिकैरित्येकसमासेन क्रियां विशिष्य उभयतः सिद्धमिति पदेन फलभूयस्त्वस्य निर्देशात्' कर्मणा भागिनः प्रीत्यै भूयो भूयसि तत्फलम्।' (भा० ११।२७।५५) इत्युपसंहाराच्च। फलभूयस्त्वन्यायश्च जैमिनिनापि प्रतिपादितः।

**फलभूयस्त्वन्यायः**

"फलस्य कर्मनिष्फलैस्तेषां लोकवत्परिमाणतः सारतो[१] वा फलाविशेषः स्यात्।' इति जैमिनिम् (१।२।१८) सूत्रात् लघुपक्षेऽल्पे महति च विशिष्टं फलं व्यवस्थाप्यते। सूत्रस्य सायणाचार्यदिशा व्याख्यानमेतत्—

फलं हि कर्मणो निष्पन्नं भवति। अतः कर्मणः परिमाणं वा यथा दृश्यते तथैव फलेऽपि अल्पत्वं महत्त्वं च व्यवस्थाप्यते लोकवत्। यथा लोके निष्केण खारीपरिमितान् व्रीहीन् क्रीत्वा निष्कान्तरेण पुनः क्रये सति परिमाणाधिक्यं भवति। यथा वा लोके निष्केण वस्त्रमात्रं लभ्यते, निष्कद्वयेन तु सारभूतं दुकूलम्। तथा प्रयाससाध्ये कर्मणि भोगाधिक्यं भोगसारत्वं वा कर्मान्तरादन्यस्मात् तत्र द्रष्टव्यम्।' "अग्निहोत्रं जुहुयात् स्वर्गकामः।" 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत।' 'ज्योतिष्टोमेन स्वर्गकामो यजेत्' इत्याद्युच्चावचकर्मणामेकविधफलसंभवे महतः प्रयाससाध्यस्य कर्मणोऽनुष्ठाने प्रवृत्तिरेव।

'पक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।' इति न्यायेन न स्यादिति तेषामानर्थक्यं प्रसज्येत। अतो महदल्पकर्मणां व्यवस्थाया स्वर्गोऽपि बहुविधः। (तु० तै० सं० भू० ५ पृ०) एवमेव—'सर्वं पाप्मानं तरति, तरति ब्रह्महत्यां श्वमेधेन यजते, य उ चेनमेवं वेद।'

इत्यत्र अल्पप्रयाससाध्येन वेदनेन ब्रह्महत्यानिवृत्तिसिद्धौ बह्वायाससाध्यमनुष्ठानं व्यर्थं स्यादित्याशङ्क्य तरणीयाया ब्रह्महत्यायाः मानसिककायिकत्वादिभेदेन तारतम्योपपत्तेः मानसा सङ्कल्पिता, वचनाभ्यनुज्ञाता, परहस्तेन कारिता, स्वयं कृता, पुनः पुनः कृता चेत्येषां तारतम्यनावस्थिता ब्रह्महत्या अनेकविधा, अतस्तत्तरणमप्यनेकविधम्। मानस्याः स्वल्पाया वेदनमात्रेण तरणम्, कायिक्यास्तु महता अश्वमेधेन इति नास्ति अन्यानर्थक्यम्।

---

१. स० भ्र० ३१ पृ०।

अमुमेव न्यायमनुसृत्य प्रयोजकादीनामापस्तम्बेन ( आप० ध० २।२९।१-२ ) फलसम्बन्ध उक्तः 'प्रयोजयितानुमन्ता कर्ता चेति स्वर्गनरकफलेषु कर्मसु भागिनो यो भूय आरभते तस्मिन् फलविशेषः ।' इति ( म० ३।२२७ ) ।

**मिश्रकर्मकाण्डे फलाधिक्यम्**

पूर्वोक्ते फलभूयस्त्वन्याये मीमांसकैः एकस्मिन्नेव फले बहुविधानामुच्चावच-कर्मणां विधाने परिमाणतः सारतश्च फलविशेषविधानं साधितम् । एतमेव—पक्षं दृष्टौ निधाय मिश्रकर्मकाण्डं प्रचरितं समर्धितं निबन्धवृद्धिर्यथा—

एवं भूतशुद्ध्यादीनि रुद्राङ्गत्वेनानुष्ठेयानि इति परशुरामादयः हेमाद्रि-महार्णव–देवयाज्ञिकनारायणभट्टादिभिर्भूतशुद्ध्यादीनि रुद्राङ्गत्वेन नोक्तानि । यक्तूत्तरं चैतदित्यन्ये । भूतशुद्ध्यादीनां तान्त्रिकमन्त्रपूजाजपाद्यङ्गत्वेन तत्रस्थप्रमाणत्वात् । वैदिकमन्त्रपूजाजपाद्यङ्गत्वे वैदिकमन्त्रप्रमाणाभावात् । अन्यथा संध्योपासनादिषु सर्वेष्वपि वैदिककर्मसु भूतशुद्ध्याद्यापत्तेः । न चेष्टापत्तिः । शिष्टाचारादर्शनादिति । अपरे तु भूतशुद्ध्याद्यकरणे न रुद्रैर्गूढम् । करणे तु फलभूयस्त्वमित्याहुः । इति ( रुद्रकल्प० पृ० ३२४ ) एवं चापेक्षितं मिश्रकर्मकाण्डं विचित्य द्वितीयोऽयं कर्मकाण्डविधाध्यायः परिसमाप्यते ।

## तृतीयोऽध्याय:

# कर्मकाण्डाधिकाराध्ययनाध्याय:

### अधिकार-विचार:

एवं च मन्त्रब्राह्मणात्मको वेदा: धर्मापरपर्यायस्य भारतीयकर्मकाण्डस्य मूलमिति सिद्धे वेदप्रामाण्याभिमानी मानवो भारतीयकर्मकाण्डे सम्यगधिक्रियते इति सुस्पष्टमेव।

अथान्यत्र किञ्चिद्विशिष्य विचारणीयं भवति। किं मानवमात्रं निर्विशेषेण वैदिके कर्मकाण्डेऽधिक्रियतेऽथवा कमपि विशेषनियममनुसृत्येति। तत्राधुनिका:—

'यथेमां वाचं कल्याणीमावदानि जनेभ्य:।
ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च।
'प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे काम: समृध्यतामुपमादो नमतु॥' ( शु० म० सं० २६।२ )॥

इतीमं वैदिकं मन्त्रमुपस्थाप्य मानवमात्रस्य कृते कल्याण्या: भगवत्या वेदवाण्या अधिकारं साधयन्त:-सर्वानपि मानवान् वेदे तत्प्रतिपादिते च कर्मणि अधिकुर्वंते। परमिदं न विचारसहम्। यतो हि—सांप्रतिके जाति धर्म-लिङ्गभेदेन प्राप्ताया असमानताया: समुन्मूलनपरेऽपि युगे सर्वस्यापि सर्वक्षेत्रीयाधिकारसाधनेऽपि कंचनैवं विधा नियमा: सुव्यवस्थायै क्रियमाणकर्मण: लक्ष्यस्य च गौरवाभिवृद्धये व्यवस्थाप्यन्ते, येन तत्तन्नियमानुबद्धा एव पुरुषास्तत्राधिक्रियन्ते। न हि विशिष्टयोग्यतासंपन्नेऽनुत्तीर्णापेक्षितपरीक्षोऽदत्तपरीक्षो वा उत्तरस्यां परीक्षणीयकक्षायां प्रवेष्टुं राष्ट्रपतिनाप्यनुमन्यते। न वा अदत्तशुल्को धनिकोऽपि जनो यात्रायां शकटीषु प्रथमश्रेण्यामारोढुमधिक्रियते। एवमेव कर्मकाण्डानुष्ठानान्तर्गता ये विधय: सन्ति तेषु अधिकृत एव पुरुष: प्रवृत्त: सच्छ्रेयसा युज्येत।

अत एव च राजनीतिशास्त्रविशारद आचार्यकौटल्यो लोकश्रेयसे नियमयति—

व्यवस्थितार्यमर्याद: कृतवर्णाश्रमस्थिति:।
त्रय्या हि रक्षितो लोक: प्रसीदति न सीदति॥ इति॥

**कर्मकाण्डे मानवस्यैवाधिकार:**

ननु यदि श्रेय:प्राप्तिर्वैदिकेभ्य: कर्मभ्यस्तर्हि वर्णाश्रमाचारवानेव मानव: कुतोऽधिक्रियते, किं नापरे श्रेय:काङ्क्षिणो जीवा नाधिक्रियन्त इति विचारे उच्यते। पौराणिकास्तावत्—

स्थावरं विंशतिर्लक्षं जलजं नवलक्षकम्।
कौर्मं च रुद्रलक्षं स्याद् दशलक्षं च पक्षिणाम्॥

त्रिंशल्लक्षं पशूनां च चतुर्लक्षं च वानरम्।
ततो मनुष्यताप्राप्तिस्ततः कर्माणि साधयेत्॥

इति चतुरशीतिलक्षसंख्याका योनीरभिप्रयन्ति। सम्प्रदायविदश्चास्यैवमर्थं बोधयन्ति—

स्थावराणां (अंसज्ञानां) विंशतिलक्षसंख्या योनीनाम्। जलजानां= जलचरजीवानां नवलक्षसंख्या। कौर्ममिति जलस्थलोभयचारिजीवानां योनिसंख्या एकादशलक्षम्। पक्षिणामिति खेचराणां योनीर्दशलक्षसंख्याताः। पशूनामिति स्थलचरजीवानां योनिसंख्यास्त्रिंशल्लक्षम्। वानरमिति स्थलचरत्वेऽपि अवलम्बनेनान्तरिक्षचारिणां जीवानां योनिसंख्या चतुर्लक्षम्। एवम् २०+९+११+१०+३०+४=८४ लक्षसंख्याता योनयः सन्ति। स्वकर्मवशादिमाश्चतुरशीतिलक्षयोनीः सम्प्राप्नुवन्ति, केनापि कर्मविशेषेण भगवतः कारुण्यलाभाय श्रौतस्मार्तकर्मसाधकं निःश्रेयसाभ्युदयसाधनं मानुष्यं जन्म प्राप्नोति। इयं च मानवीयोनिरेवमुपदिश्यते भागवते—

नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम्।
मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत्स आत्महा॥

एवं च चतुरशीतिलक्षयोनीनां विच्छेदकारिणि मानवीययोनावेव श्रौतस्मार्तपौराणतान्त्रिककर्मणामधिकारः। अतएव कात्यायनः—

अथातोऽधिकारः ॥ १ ॥ फलयुक्तानि कर्माणि ॥ २ ॥
सर्वेषामविशेषात् ॥ ३ ॥ मनुष्याणां त्वारम्भसामर्थ्यात् ॥ ४ ॥

इति (का० श्रौ० १।१।१-४) पूर्वोत्तरपक्षविमर्शपूर्वकं मनुष्याणामेव कर्मसु अधिकारं साधयामास। अत्र हि कर्काचार्यः स्पष्टमेव सयुक्तिकं मनुष्याणामेवाधिकारं व्यवस्थापयति यथा—

कर्क पृ० ४—'न सर्वेषामधिकारो, मनुष्या एव कर्मस्वधिक्रियन्ते। त एवहि यथाश्रुतं कर्मारब्धुं समर्थाः, न देवादयः देवास्तावदवाप्तकामाः। न च तेषामवाप्तव्यमस्ति, यद्यागादिभिरवाप्यते। न च देवा नामपि देवाः सन्ति यान्यजेरन्। ऋषीणामार्षेयाभावादनधिकारः रक्षःपिशाचानामशुचित्वात्। गवादीनामासन्नचेतनस्वात् विद्याशून्यत्वाच्च। यच्च दर्शनमुक्तम् "गावो वा एतत् सत्रमासत" इति, स सत्रप्रशंसार्थोऽर्थवादः। तस्मान्मनुष्याणामेवाधिकारः।

**मानवेषु वर्णविभागः**

लोके मानवयोनौ तत्रापि भारते वर्षे एव चत्वारो वर्णाः सन्ति इति साधारणतयास्ति प्रसिद्धिः। परं वेदानां वैदिकानां ग्रन्थानां चानुशीलनेन ज्ञायते

यत् सृष्टौ यावतीर्योनयः सन्ति तासु सर्वास्वपि ब्राह्मण-क्षत्रिय-वैश्यशूद्राख्याश्चत्वारो वर्णा विद्यन्ते। एतस्य स्पष्टावगमाय कतिपयवैदिकवाक्यानीह प्रस्तूयन्ते—

१—ब्राह्मणो वै रूपमहः, क्षत्रस्य रात्रिः। ( तै० ब्रा० ३।९।१४।३ ) क्षत्रस्य वा एतद्रूपं यद्रात्रिः ( १३।१।५।५ )।

२—ब्रह्म वै वसन्तः। क्षत्रं ग्रीष्मः। वैश्यो वर्षाः। तस्माद् ब्राह्मणो वसन्त आदधीत। तस्मात्क्षत्रियो ग्रीष्म आदधीत।··· ··· वैश्यो वर्षास्वादधीत। ( श० ब्रा० २।१।३।५)।

३—ब्रह्म वा अग्निः। क्षत्रं सोमः। (कौ० ब्रा० ९।५) प्रजापतिर्वै क्षत्रम्। श० ब्रा० (८।२।३।११॥) मित्रः क्षत्रं क्षत्रपतिः। (तै० ब्रा० २।५।७।४॥ श० ११।४।३। ११॥) क्षत्रं वै वरुणः। (श० २।५।२।६, ३४) क्षत्रं वा इन्द्रः-(तै० ३।९।१६।३ श० २।५।२।२७) यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति—(श० १४।४।२।२३) ब्रह्म वै बृहस्पतिः (कौ० ७। ०) विशो विश्वदेवाः—(श० ५।५।१।१०) स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते। वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति—(श० १४।४।२।२४,) स शौद्रं वर्षमसृजत पूषणम्। (—श-१४।४।२।२५॥)

एवं च सर्वास्वपि योनिषु ब्राह्मणादयश्चत्वारो वर्णाः सन्ति। ततश्च यथा वनस्पत्यादिषु कर्मणा वर्णो विपर्येतुं नेष्यते न वा प्रभवितुं शक्नोति। एवमेव मानवेष्वपि कर्मणा वर्णो विपर्येतुं नेष्यते शास्त्रकृद्भिः, न वा तत्परिवर्तितुं शक्यते।

यत्तु विश्वामित्रस्य सौधन्वानामृभूणां वा दृष्टान्तमुपस्थाप्य वर्णपरिवर्तनं साधयितुं प्रयत्यते तदपि शास्त्ररहस्यतलस्पर्शविरहमूलकमेव। विश्वामित्रस्योत्पत्तिविधायके चरौ ब्राह्मण्यस्य स्पष्टं प्रणिधानात्, ऋभूणां चोत्कर्षमात्रेण आधानमात्राधिकारिकरथकारजात्यभिमानिदेवतामात्रस्य दृष्टत्वात्।

तथाहि–आधानप्रकरणे—'ऋभूणां त्वेति रथ कृतः' ( का० श्रौ० ४।९।३) इत्यनेन 'ऋभूणां त्वा देवानां व्रतपते व्रतेनादधे इति रथकारकर्तृकाधीनदेवत्वेन स्मर्यमाणत्वात्। जन्मना वर्णव्यवस्थायामेव भारतीयार्षशास्त्रानुयायिनां सदाग्रहः कर्मणा वर्णनिर्णयनिरासश्चेति विषये बहु वक्तव्यमप्यत्र प्रसङ्गान्तरभयान्नेह विव्रियते।

**ब्राह्मण्यम्**

ब्राह्मणेषु ब्राह्मण्यं नाम कश्चन स्वाभाविको गुणः, तत्प्रभावेण च तादृगेव कर्म प्रभवतीति शास्त्रकारा अभिप्रयन्ति। यथा हि श्रीमद्भगवद्गीतायाम् (१८।४१-४२)

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्मस्वभावजम् ॥

श्रीमद्भागवतेऽपि ( ११।१७।१७ )

शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् ।
मद्भक्तिश्च दया नित्यं ब्रह्मप्रकृतयस्त्विमाः ॥

स्मृतिपुराणानां वेदमूलकत्वमेवास्तीति एतस्य मूलमेतरेयब्राह्मणे क्षत्रियस्य सोमभक्षनिषेधप्रसङ्गे एवं सूत्ररूपेणोपलभ्यते ।

'स यदि सोमं ब्राह्मणानां स भक्षो ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि ब्राह्मणकल्पास्ते प्रजायामाजनिष्यत आदाय्यापाय्यावसायी यथाकामप्रयाप्यो यदा वै क्षत्रियाय पापं भवति ब्राह्मणकल्पोऽस्य प्रजायामाजायत ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युपेतो स ब्रह्मबन्धेन जिज्यूषितः, इति ( ऐ० ब्रा० ३५ अ० ३ खं० ॥ )

अथास्य स्पष्टार्थं प्रतिपत्तये सायणभाष्यमुद्ध्रियते—

सोनभिज्ञ ऋत्विग्यदि ते विश्वोत्तरस्य क्षत्रियस्य सोमं भक्षमाहरेदिति शेषः । स सोमो ब्राह्मणानां योग्यो भक्षस्तेन भक्षेण ब्राह्मणाञ्जिन्विष्यसि प्रीणयिष्यसि । न तु क्षत्रियस्य तव प्रीतिः । तथा सति ते तव राज्ञः प्रजायां संततौ ब्राह्मणकल्प ईषदसमाप्तौ ब्राह्मण आजनिष्यते । क्षत्रियधर्मेण शौर्येण रहितत्वात्तस्य ब्राह्मणसदृशत्वम् । स च पुत्रो ब्राह्मणवद्वक्ष्यमाणगुणचतुष्टयोपेतो भवति । आदानं प्रतिग्रहस्तच्छीत आदायी । प्रतिग्रहश्च ब्राह्मणगुणः ऋत्विग्भूत्वा सोममा समन्तात्पाययतीत्यापायी तदेतद्याजनमपि ब्राह्मणगुणः । अवसमन्नं तस्य संबन्धि याचनमावसस्तमावसमेति प्राप्नोतीत्यावसायी । परगृहे सदा भोजनयाचनमपि ब्राह्मणगुणः काममिच्छामनतिक्रम्य यथा कामं तदनुसारेण प्राप्यो निर्वासयितुं शक्यः, क्षत्रियवैश्यादिवच्छौर्यधनाद्यभावाद्यः कोप्यागत्य दुर्बलं ब्राह्मणं तद्गृहात्तदीयग्रामाद्वा निष्कासयितुमिच्छति तदानीमयं ब्राह्मणो दुर्बलत्वात्तेन निःसारयितुं शक्यते ।

एवमेते चत्वारो धर्मा ब्राह्मणगुणाः । सोमं भक्षयतो राज्ञ एतद्गुणकः पुत्रो जायते । किं च यदा प्रमादात्क्षत्रियाय पापं क्षत्रियस्य किञ्चिन्निषिद्धाचरणं भवति तदानीं तेन पापेन तस्य क्षत्रियस्य प्रजायां संततौ ब्राह्मणकल्पः शौर्यराहित्यादिना ब्राह्मणसदृशः पुत्र आजायते । अस्मात्पापिनः क्षत्रियाद् द्वितीयो वा तृतीयो वा पुत्रो वा पौत्रो वा ब्राह्मणतामभ्युपेतः शौर्यादिगुणरहितं ब्राह्मण्यं प्राप्तुमीश्वरः समर्थो

भवति। स ब्राह्मणसदृशः क्षत्रियपुत्रो ब्राह्मणवद्धर्मेण ब्राह्मणानां क्रमबन्धुत्वेन ब्राह्मणोचितयाच्ञादिना जिज्यूषितो जीवितुमिष्टो दैन्यवृत्या जीवितुं प्रवृत्तो भवति। इति।

अत्र ब्राह्मणग्रन्थे गीतोक्ता भागवतोक्ता वा गुणाः कण्ठरवेण नोक्तास्तथापि येषामत्र आदायित्वम् आपायित्वम् आवसायित्वम् यथाकाम्यप्रमाप्यत्वं वोच्यते ते गुणा शमदमादिमूलका एव प्रादुर्भवन्ति। क्षान्तिरार्जवसन्तोषाणामादायित्व-फलकत्वात्। ज्ञानविज्ञानदयाभक्तीनामापायित्वनिदानकत्वात्। दमतपसोः अव-सायित्वे प्रवर्तनाम्। शौचास्तिक्यशमानां याथाकाम्यप्रमाप्यत्वोद्बोधकत्वम्। इति।

**क्षत्रम्**

ब्राह्मणेषु ब्राह्मण्यमिव क्षत्रियेषु क्षत्रं नाम गुणः प्राकृतिकः। तस्य च विकसितं रूपं शास्त्रकारैः क्षात्रकर्मत्वेन बोध्यते। यथा—

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्मस्वभावजम्॥ —गीता (१८।४३)

तथा भागवतेऽपि—

तेजो बलो धृतिर्शौर्यं तितिक्षौदार्यमुद्यमः।
स्थैर्यं ब्रह्मण्यतेश्वर्यं क्षत्रप्रकृतयस्त्विमाः॥ इति॥ (११।१७।१७)

एतस्य मूलं श्रुतिष्वेवमुपलभ्यते—

ओजः क्षत्रं वीर्यं राजन्यः—(ऐ० ब्रा० ८।२।३।४) क्षत्रं हि राष्ट्रम्—(ऐ० ७।२२।)

ऐश्वर्यफलत्वेन—तस्मात् क्षत्रियं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति। (श० ६।४।१३) आ राष्ट्रे राजन्यः शूर इषव्योतिव्याधी महारथो जायताम्। (शु० य० सं० २२।२२)

एतादृशवाक्यानामेव विवरणं गीताभागवतादिषु क्रियत इति न शास्त्र-विवेचकानां कृते विवेचनीयमस्ति।

**विट् (वैश्यत्वम्)**

वैश्यवर्णेऽपि यः साहजिको गुणः तत्प्रयुक्तं च कर्म दृश्यते तस्य स्पष्टी-करणमेव गीतादिषु एवमुपलभ्यते—

"कृषिगोरक्ष्यवाणिज्यं वैश्यकर्मस्वभावजम्।' (गीता १८।४४॥)
आस्तिक्यं दाननिष्ठा च अदम्भो ब्रह्मसेवनम्।
अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः॥ (भागवते ११।१७।१८)

वैश्यगुणानां निर्देशः ऐतरेयब्राह्मणे सोमभक्षप्रसङ्गे कश्चनैवमुपदिश्यते—

"अथ यदि दधि वैश्यानां स भक्षो वैश्यास्तेन भक्षेण जिन्विष्यसि वैश्य-कल्पस्तेव प्रजायामाजनिष्यतेऽन्यस्य बलिकृदन्यस्या यो यथाकामज्येयौ यदा वै क्षत्रियाय पापं भवति वैश्यकल्पोस्य प्रजायामाजायत ईश्वरो हास्माद् द्वितीयो वा। तृतीयो वा वैश्यतामुपैतोः स वैश्यतया जिज्यूषितः[1] इति।

अथास्य सायणभाष्यम् :—

यदि ते दधिरूपं भक्षमाहरेत्तदा दध्नो वैश्यभक्षत्वात्तेन वैश्यान्प्रणित्रिष्यसि। तव संततौ वैश्यसमानः पुत्रः आजनिष्यते। वैश्यश्च वाणिज्यं कुर्वन्नन्यस्य राज्ञो वलिकृद्बलि पूजां करोति। करं प्रयच्छतीत्यर्थः। अतएवन्यस्य राज्ञ आद्य भक्ष्याधीनो भवतीत्यर्थः। तस्य राज्ञः काममिच्छामनतिक्रम्यज्येयोऽभिभवनीयो भवति। ज्याभिभव इति धातुः। त एते करप्रदानपराधीनत्वतिरस्कार्यत्वाख्या वैश्यगुणाः। यदा क्षत्रियस्य किञ्चित्पापं संभवति तदा तस्य संततौ वैश्यसदृशः पुत्रो जायते। अस्मात्क्षत्रियात्पापिनोऽन्यः पुत्रः पौत्रो वा वैश्यतां प्राप्तं समर्थो भवति स च वैश्यवृत्या करप्रदानादिना जोवितुं प्रवृत्तो भवति।

**शूद्रः**

शूद्रवर्णस्य साहजिका गुणास्तु भागवते—

"शुश्रूषणं द्विजगवां देवानां चाप्यमायया।
तत्र लब्धेन सन्तोषः शूद्रप्रकृतयस्त्विमाः॥
अशौचमनृतं स्तेयं नास्ति च शुष्कविग्रहः।
कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायिनाम्[2]॥

गीतायां तु—परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्। इति संक्षेपेणोक्तम्। ऐतरेयब्राह्मणे शूद्रगुणस्य निर्देशस्त्वेवम्—

"अथ यद्यपः शूद्राणां स भक्षः शूद्रांस्तेन भक्षेण जिन्विष्यसि शूद्रकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यो यदा वै क्षत्रियाय पापं भवति शूद्रकल्पोऽस्य प्रजायामाजायत ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा शूद्रतामभ्युपेतोः स शूद्रतया जिज्यूषितः[३]।

---

१. ऐ० ब्रा० ३५।४॥
एवं वैश्यस्य स्वाभाविकाः केचन गुणा अत्र श्रुत्या दिङ्मात्र प्रदर्शिताः सन्ति। विशेषविवरणं तु विस्तरभयान्नेह लिख्यते॥

२. भा० ११।१७।१९-२०। ३. ऐ० ब्रा० ३५।४।२९।

अथास्य सायणभाष्यम्—

यदि ते क्षत्रियस्य कश्चिदृत्विगपो जलभक्षमाहरेत्तदानीं स जलात्मकः शूद्राणां भक्षस्तेन भक्षेण शूद्रान् प्रीणयिष्यसि। ततस्तव संततौ शूद्रसदृशः पुत्र उत्पद्यते। शूद्रश्चान्यस्योत्तमवर्णत्रयस्य प्रेष्यः प्रेषणीयो भृत्यो भवति। तथा कामोत्थाप्यो मध्यरात्रादौ यदा कदाचिद्दिन इच्छा भवति तदानीमयमुत्थाप्यते। तथा तदीयं काममिच्छामनतिक्रम्य वध्यः कदाचित्पापे शूद्रसमानः पुत्रो जायते। तस्मात्क्षत्रियादन्यः पुत्रः पौत्रौ वा शूद्रत्वं प्राप्तुं समर्थो भवति। स पुत्रः शूद्रतया शूद्रवर्णतया दासत्वकृत्या जीवितुं प्रवृत्तो भवति। एवमत्र परिचर्यारूपो गुणो भङ्ग्यन्तरेण श्रुत्या समुक्तः।

कर्मसाङ्कर्यविचारः

तदेवं शास्त्रविधया चतुर्णां वर्णानां साहजिका गुणा उक्ताः। अद्यापि संप्रति तत्तद्वर्णतया प्रसिद्धेषु मानवेषु ते गुणा नोपलभ्यन्ते। तत्र किं निन्दनमिति विचारे भागवतोल्लिखितं स्मरणीयं भवति—

"वर्णानां ब्राह्मणानां च जन्ममृत्वनुसारिणीः।
आसन् प्रकृतयो नृणां नीचैर्नीचोत्तमोत्तमाः॥ (भा० ११।१७।१५)

मनुस्मृतावपि—

"कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥
शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणाम्।
कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः॥
मन्त्रतस्तु समृद्धीनि कुलान्यल्पधनान्यपि।
कुलसंख्या च गच्छन्ति कर्षन्ति च महद्यशः॥ ३।६३-६६॥

ततश्च कर्मविशेषैराचारैश्च गुणस्योत्कर्षो भवतीति शास्त्रनिष्ठाया अभावात् कुविवाहक्रियालोपवेदानध्ययनादिदोषैस्तत्तद्वर्णसमपेक्षिता गुणाः सम्प्रति तिरोभूता इव लक्ष्यन्ते।

एवं गुणापकर्षे संभवत्यपि, जन्मजातं ब्राह्मण्यादिकं तस्मिन् जन्मनि न दीयत एव। यानि तु ब्राह्मणत्वादि हानिकराणि वचनानि तानि ब्राह्मणादि-धर्मे दृढव्रतता प्रवर्तकानि न तु सर्वथा ब्राह्मण्यापनोपदकानि। अतएव ऐतरेय-

ब्राह्मणे ( ३ अ० ५ खं० ७४ पृ० ) । "अप्यब्राह्मणोक्तो यदि दुरुक्तोक्तो यजते इत्यत्र ब्राह्मणस्य जीविकार्थमुक्तेषु कर्मसु अपि विशेषलिप्सावशात्प्रवृत्तो अब्राह्मणत्वं संगतं भवति। तत एव च अब्राह्मणशब्दव्याख्यानं स्मृत्युपष्टब्धं सायणीयं व्याख्यानं संगच्छते। तथा हि—

'अब्राह्मणास्तु षट् प्रोक्ता इति शातातपोऽब्रवीत्।
आद्यस्तु राजभृत्यः स्याद् द्वितीयः क्रयविक्रयी॥
तृतीयो बहुयाज्याख्यश्चतुर्थो श्रौतयाजकः।
पञ्चमो नाम्नयाजी च षष्ठो ब्रह्मबन्धु स्मृतः॥

यद्यपि याजनाध्यापनप्रतिग्रहा ब्राह्मणस्य जीवनहेतुत्वेन विहितत्वादनिषिद्धास्तथापि यावता जीवनं निष्पद्यते तावदेव याजनं शास्त्रेणाङ्गीकृतम्। यस्तु सत्यपि जीवने धनाधिक्यवाञ्छया याजनशीलः सोऽत्र बहुयाजी विवक्षितः। यः पुमान् श्रौतकर्मण्यधिकृतो नादरेण स्वयं श्रौतं नानुतिष्ठति, अन्यानपि नानुष्ठापयति किन्तु स्मार्त्तकर्मपरः सन्ननुतिष्ठत्यनुष्ठापयति सोऽयमश्रौतयाजकः। ग्रामे नगरे च योग्यायोग्याश्च यावन्तः सन्ति धनाभिलाषेण तावतां सर्वेषां याजको ग्रामनगरयाजी। यः पुमान् प्रातः सूर्योदयात्प्राक्सन्ध्यां नोपास्ते, सायं चास्तमयात्प्राङ्नोपास्ते सोऽयं ब्रह्मबन्धुः। एते ब्राह्मत्वेन स्मृतिषूक्ताः। दुष्टान्यपवादरूपाणि वचनानि दुरुक्तानि तैरभिशस्तो दुरुक्तोक्तः। अब्राह्मणोक्तो वा दुरुक्तोक्तो वा यद्यपि यजेत तथाऽप्येषा हवनीये हुता मथिताऽग्न्याहुतिर्देवान् प्राप्नोत्येव। ततो यजमानस्य पापसंसर्गो न भवति इति।

यदि हि कर्माण्येव ब्राह्मणत्वसाधाकानि स्युः तर्हि विहितकर्मणो याजनस्य बाहुल्येन ब्राह्मण्यमधिकं जायेत, परं स्मृतिकारैर्बाहुल्यं निन्दितं, श्रुत्या च तस्य "अब्राह्मणं पदेन सङ्केतः कृतः। एवं च "ब्राह्मण्यादेव हीयते" 'स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः।' अब्राह्मणो भवति। इत्यादिवाक्यानि न वर्णव्यवस्थापकानि संभवितुमर्हन्ति इति कर्मसांकर्येऽपि जन्मनैव वर्णनिर्धारणम्।

अपरं च सर्वेष्वपि प्राकृतिकेषु पदार्थेषु च ब्राह्मणादिचतुर्वर्णविभाग इति स्पष्टमेव पूर्वमुक्तम्। ततश्च वर्णिकानां यादृशानां पदार्थानां संबन्धोऽधिकं क्रियते तत्र तस्य गुणस्य कर्मणश्चाधिकं प्रकाशो भविष्यति। यथा हि दार्शनिकेषु त्रिवृत्करण पञ्चीकरणक्रियासु तत्तद्भूतजातस्य वैशिष्ट्येन तत्तदभिधेयतया प्रसिद्धत्वेऽपि अन्यस्य भूतगणस्य सत्त्वं न दोषाय कल्पते, एवं जन्मना विवृद्धवर्णगुणस्य पदार्थान्तरसंबन्धेन साक्षाद्वा इतरवर्णगुणसंबन्धो न हानये प्रभवति। अतएव भूप्रदेशस्य क्षत्रियादिगुणवत्वे तद्भूखण्डजननवतां तद्वर्णगुणवैशिष्ट्यं चेतरवर्णेषु सुव्यक्तं दृश्यते।

( तुलनीयम् भा० ११।१७।१५ ) यथा पञ्चनदहरियाणाप्रान्तजातेषु सर्वेषु शौर्यं साहसिकत्वम् । बंगीयेषु-दौर्बल्यम्, परोपतापित्वम्, इत्यादि ।

एवं च जन्मनैव वर्णः पदार्थान्तरसहकृतः व्यत्ययेन प्रतीयमानोऽपि 'एकदेशविकृतमनन्यवदि' ति न्यायेन न विपर्येतीति भारतीयकर्मकाण्डरहस्यविदां राद्धान्तः ।

**अधिकारलक्षणम्**

प्रवृत्तिप्रयोजकीभूतफलेच्छा—फलान्यतरसमानाधिकरणकर्तृत्वमधिकारः । नित्यकर्मसु अकरणो प्रत्यवायभिया प्रवृत्युदयात् प्रवृत्तिप्रयोजकफलेच्छाया अभावेऽपि पापक्षयरूपफलत्वेन तत्समानाधिकरणकर्तृत्वस्य सत्वान्नाव्याप्तिः । श्रौतेषु कर्मसु यजतिक्रियाकर्तृत्वमध्वर्य्वादिषु, धर्मशास्त्रीयेषु कर्मसु चाचार्यादिषु ऋत्विक्षु विद्यत इति फलेच्छा फलान्यतरसमानाधिकरणेति ।

स चाधिकारो न फलकामनावत्पुरुषमात्रस्य किन्तु अधिकारिविशेषणविशिष्टस्यैव । अधिकारिविशेषणं चापेक्षितपूर्वोक्तया संस्कृतत्वं तत्तकर्मानुष्ठानशक्तिश्च । वेदाध्ययनादयो हि उपनयनादिपूर्वक्रियासंस्कृतसमर्थपुरुषसाध्याः । अतस्ते तानपेक्षन्ते । तस्मादेव च विवाहाद्युत्तरसंस्कारे क्रियमाणे पूर्वसंस्काराणामभावे तत्सिद्ध्यर्थं तदकरणजन्यप्रत्यवायपरिहारार्थं गोदानादिकमनुष्ठात्तव्यं भवति ।

तथा च कात्यायनः—

गर्भाधानादि चौलान्ते स्वकाले विधिनाकृते ।
प्रत्येकं पादकृच्छ्रं स्याद् द्विगुणं स्यादनापदि ॥ इति ।

( स्मृ० मु० ९९ व० का )

अकृते इतिच्छेदः

**सामर्थ्यस्याधिकारिविशेषणत्वम्—**

'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी' इति न्यायेन समर्थं प्रत्येव सर्वविधिप्रवृत्तेः । अत एव तिरश्चां कर्माधिकारो नास्ति, अपेक्षितपूर्वक्रियासंस्कृतत्वाभावादसामर्थ्याच्च । देवानामपि श्रौतस्मार्तकर्मसु नाधिकारः तत्कर्तृकयागे देवतान्तरकल्पने मानाभावात् । श्रुतिषु ते ते देवा वै सत्रमासत । देवा वै यज्ञं तन्वानाः । स्मार्तेष्वपि पुराणाख्यानादिषु यज्ञानुष्ठातृत्वं देवेषु दृश्यते तत् तेषु तेषु कर्मसु पुरुषाणां रुच्युत्पादनार्थमर्थवादमात्रम् ।

एवं मनुष्याणामपि विकलाङ्गानां तत्तत्कर्मापेक्षितेन्द्रियासामर्थ्ये सति नाधिकारः । ( नै० ६।१।२, जै० ६।१।६ ) तेषां यथावत् कर्मानुष्ठानासंभवात् । यथा श्रौते आज्यावेक्षणादौ, स्मार्ते देवदर्शनादौ, मूकस्य मन्त्रोच्चारणजपादौ,

पङ्गोर्विष्णुक्रमणे, बधिरस्य वेद–पुराणश्रवणे। अतोऽन्वादीनामसमाधेयाङ्गानां तदिन्द्रियापेक्षितकर्मस्वधिकारो (जै० ६।१।१०) नास्त्येव। प्रतिसमाधेयाङ्गानां प्रतिसमाधानान्तरमधिकारः। धर्मशास्त्रे तु केषाञ्चित्संस्काराणां वर्णप्रयुक्तत्वाद्वर्णधर्माणां यथाशक्ति परिपालनाय कर्मानधिकारिणामपि संस्काराः कथिताः। तथाहि ब्रह्मपुराणे—( वी० मि० ३६६ सं० प्र० )।

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः।
तस्माच्च षण्ढबधिरकुब्जवामनपङ्गुषु॥
जडरोगार्त्तशुष्काङ्गविकलाङ्गिषु।
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये॥
ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम्।
मत्तोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते॥
कर्मस्वधिकाराच्च पातित्यं नास्ति चेत्तयोः।
तदपत्यं च संस्कार्यमपरे त्वाहुरन्यथा॥
संस्कारमन्त्रहोमादीन् करोत्याचार्य एव तु।
उपनेयाश्च विधिवदाचार्यः स्वसमीपतः।
आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत्।
वन्ध्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेत्॥

तत्र सामर्थ्यं द्विविधम्—लौकिकं शास्त्रीयं च। तत्र लौकिकं इन्द्रियधन-पत्न्यादिप्रयुक्तम्। शास्त्रीयं तु–विद्या–जाति वह्नि[1] शुचितासमपेक्षितपूर्वाक्रिया[2]वत्वादि।

तत्र काम्यकर्मसु सकलाङ्गकरणसमर्थस्यैवाधिकारः। विधिर्हि साङ्गस्यैव कर्मणः फलसाधनत्वं बोधयति। तत्र यदि च नाङ्गानि नानुष्ठीयेरन् तदा कर्मणि वैकल्यापातात् विकलात्कर्मणोऽपि फलोत्पत्तावङ्गानां वैयर्थ्यापातात् काम्ये कर्मणि सर्वाङ्गानुष्ठानमावश्यकम्। नित्ये तु अङ्गकरणासमर्थस्य प्राधानमात्रकरणसमर्थस्याप्यधिकारोऽस्ति। नित्यनैमित्तिकयोर्हि 'यावज्जीवमग्निहोत्रं जुहोति' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत 'इत्यादिषु' णमुलप्रत्ययेन जीवनस्य निमित्तत्वं प्रतिपादितम्। 'वसन्ते ज्योतिषा यजेत' इत्यत्र च कालस्य निमित्तत्वं सप्तम्या। अत एव वीप्सानुवादस्सङ्गच्छते। तेन प्रतिनिमित्तं नैमित्तिकानुष्ठानं कार्यम्। सर्वाङ्गयुक्तञ्च तत्कार्यमित्युक्तं भवति। तत्तु न सम्भवति, न हि केनापि पुरुषेण यावज्जीवं सर्वाङ्गानुष्ठानं कर्तुं शक्यते इत्यशक्यार्थविधायकत्वं विधेरापद्येत।

---

१. अशुचि वादेव सूतके मृतकाशौचे कर्मानधिकारः। जै० न्या० ४।३।१६॥

२. एवं काम्ये माघ–कार्तिकस्नानादौ कृतसन्ध्यादेरेवाधिकारः। ( नि० सि० १४ )

अतस्तत्परिहारार्थं विधिरेव स्वस्याङ्गविषये सङ्कोचमभ्युपगच्छन् प्रधानमात्रकरणसमर्थस्यापि तत्राधिकारमनुमन्यते ।

प्रयोगरत्ने पितैवोपनयेत् पुत्रं तदभावे पितुः पिता ।
तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥

अत्र पितेति विप्रपरं न क्षत्रियादेः । तेषां पुरोहित एव । उपनयनस्य दृष्टार्थत्वात् तेषां चाध्यापनेऽनधिकारात् । ( नि० सि० १९५ ) इत्यादिषु अध्ययनसामर्थ्यविरहात् स्वपुत्रस्योपनयने क्षत्रियादेर्नाधिकारः ।

**सहाधिकारः**

कात्यायानश्रौतसूत्रे 'स्त्री चाविशेषत्' 'दर्शनाच्च' ( का० श्रौ० १।१ ७-८ ) इत्याभ्यां वसन्ते ब्रह्मणोग्नोनादधीत इत्यादौ श्रूयमाणस्य पुंस्त्वस्य उद्देश्यविशेषणत्वात् ( जै० न्या० ३।१।७ ) ग्रहैकत्ववदविवक्षितं ( जै० ६।१।३ ) मत्वा 'मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीम्' इत्यादिलिङ्गदर्शनाच्च पुरुषेण सह पत्न्या अधिकारः साध्यते, न तु स्वातन्त्र्येण । यद्यपि श्रौतविषये निर्णयोऽयं समीचीनः तथापि अनयोःसूत्रयोः कर्कभाष्ये सरलावृत्तौ च यद् व्याख्यानमुपलभ्यते, तन्न मनोरमम् ।

तदीयनिर्णयस्य स्त्रियाः स्वतन्त्रतया अनधिकारस्य पत्या सहाधिकारस्य च तत्र स्मृतिवचनतो निर्णयात् ।

वस्तुतस्तु सूत्रकारेणैव कश्चन निर्णयो वक्तव्य इत्यन्यद् व्याख्यानमुचितम् । तच्चापदीयं यथा—पूर्वसूत्रे त्रैवर्णिकानामधिकारः उक्तः—तत्र पुरुषणामिव स्त्रीणामायाति चेत्यत्र स्त्रीषु कंचन विशेषं ब्रुवन्नधिकारमाह स्त्री चाविशेषात् ।

यद्यपि—अश्रोत्रियत्वात् स्त्रीणामनधिकारः सिद्धः परं अविशेषात्—पुंस एव अर्धरूपत्वेन तदन्तःपातित्वरूपात् पुरुषसाधारण्यात्, स्त्री च अधिक्रियते । च शब्दः समुच्चयार्थे । ततश्चकारो सहयोगं निर्दिशति सहयुक्ता स्त्री अधिक्रियते । सा च स्त्री ब्राह्मणराजन्यवैश्यानामेव पूर्वसूत्रसंबंधात् । पूर्वसूत्रे श्रुतेः इति श्रुतिगतपुंस्त्वं हेतूकृत्य अधिकारो निर्णीतः । पुंस्त्वे च विवक्षिते तासां स्त्रियः तैः सहापि यज्ञं कर्तुं न प्रभवेयुः सन्ध्यादिवत्, कुतो स्त्रीभिः सह यज्ञः कर्त्तव्यः, इत्यस्य कुत्राप्यनिर्दिष्टत्वात् आज्यावेक्षणादिषु पत्न्याः श्रुतत्वेपि ऋत्विजामिव फलाधिकारित्वं पत्न्यां कल्पयितुं न शक्यते । अतः सूत्रकारः स्त्रीणां सहाधिकारं निर्णयति स्त्री चाविशेषादिति । विशेषः स्वस्य पृथक्फलभागित्वम् । अविशेषः—सहफलभागित्वम् । अथवा स्त्रियाः पुरुषेण सह अविशेषत्वं नाम एकरूपता । आकारभेदेऽपि पतिपत्न्योरेकरूपत्वं

शास्त्रेषु दृश्यत एव। अत एव लोके अर्धाङ्गिनीति शब्दव्यवहारः। श्रुतावपि—अर्द्धो ह वा एष यदपत्नीकः' अर्द्धो वा एषा आत्मनः यत्पत्नी (तै० ब्रा० ३।३।३५) 'अर्द्धवृगलमिव एष पुरुषः' इत्यादिभिः पतिपत्न्योरेकत्वं साध्यते। एवं चैतेन सूत्रेण अविशेषादिति हेतुना स्त्रीणां स्वतन्त्रतया यज्ञेऽनधिकार[1] उच्यते। न्यायसाम्याच्च तेनैव हेतुना स्वतन्त्रस्य विधुरस्याप्यधिकारो निरस्यते।

दर्शनाच्चेति सूत्रस्यापि व्याख्यानमेवं कार्यम्। श्रुतिलिङ्गान्यपि ईदृग्विधानि दृश्यन्ते। यैः स्त्रिया अधिकारे सहत्वमेव न तु स्वातन्त्र्येण। तथा च श्रुतयः 'यदि सानालभ्युका स्यात् तामुपरुध्य यजेत' 'मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीम्' इत्यादि। यथाऽनुष्ठाने सहाधिकारः एवं कर्तृत्वापादके फलभोक्तृत्वेऽपि लिङ्गं दृश्यते। यथा 'ता वां वास्तून्युश्यसि गमध्ये' यदाशीदां दम्पती वाममश्नुतः' (भा सं ८।५) इत्यादि। अत एव दर्शनाभावात् विधवायाः विधुरस्य च श्रौतयज्ञे नाधिकारः। यश्च विधुराग्निहोत्रादि (ऐ० ब्रा०) प्रयोगः, स तु नित्यतास्तावकरूपेणार्थवादो मन्तव्यः। आस्याग्निहोत्रपरत्वेन तस्य व्याख्यानं कर्त्तव्यम्। एवं च श्रौतयज्ञेषु पत्नी स्वतन्त्रतया नाधिक्रियते न वा पुरुष इति।

सोऽयं श्रौतकर्मविषयकः स्त्रीपुंगतोऽधिकारः अग्निहोत्रं जुहुयात् (तु० तै० सं० १।५।६।१।१८) सोमेन यजेत (तै० सं० ३।२।२।१५) इत्यादावाख्यातोपात्तसंख्यायास्तल्लक्षितकर्तर्यन्वयेन तस्यैकत्वप्रतीतावपि प्रमाणान्तरेण स्त्रीद्वितीयस्यैव पुंसः कर्तृत्वावगमादाख्यातस्य कर्तृत्व एव लक्षणामङ्गीकृत्य तत्रैव चैकत्वान्वयः। अतश्चोभयोर्व्यासज्यवृत्तिकर्तृत्वमेकम्। (जै० ६।१।४) अतश्च पुमानिके एव स्त्रीसद्वितीयः कर्मष्वधिकरोतीत्युत्सर्गः। यत्र तु विशेषश्रवणं तत्र द्वयोर्बहूनां वाऽधिकारः स्त्रीसद्वितीयानामेव। अत एव क्षौमे वसानावाऽग्निमादधीयाताम् इत्युत्पत्तिवाक्यसिद्धकर्तृत्वाधिष्ठानभूतस्त्रीपुमुभयगते द्वित्वानुवादःसङ्गच्छते। (जै० ६।१।५) अत एव कर्तृत्वं कृत्याश्रयत्वसमनियतो खण्डोपाधिः। न तु कृत्याश्रयत्वमेव।

---

१. स्त्रियास्तु यद्यप्यस्त्यधिकारः परं न स्वातन्त्र्येण पाणिग्रहणात्तु सहत्वं कर्मसु, तथा पुण्यफलेषु "धर्मे वाऽर्थे वा कामे वा नातिचरितव्या त्वया" इत्यादिना पत्या सहैव तस्याधिकारश्रवणात्। न च तस्या अध्ययननिषेधश्रवणादुपनयनाभावाच्च कथमधिकार इति वाच्यम्। पत्युर्विद्ययैव तस्या अपि तद्वत्त्वसम्भवेनाऽधिकारोपपत्तेः। एवं दम्पत्योः-सहाधिकारो वैतानिकेषु कर्मसु, तद्धर्मवत्सु च केषुचिदेकाग्निसाध्येषु कर्मसु। सन्ध्यावन्दनजपादौ तु पुरुषस्य स्वातन्त्र्येणाधिकारो, न स्त्रियाः। एवं सावित्रीव्रतादौ तासामेवाधिकारो, न पुंसः। पूर्त्तादौ तु स्वातन्त्र्येण द्वयोरप्यधिकार इत्याद्यवगन्तव्यम्। (त० सि० र० १२५)

तस्य प्रत्यात्मवृत्तिभेदेन भेदाद् व्यासज्यवृत्तित्वानुपपत्तेः। न चैकत्वस्य कर्तृत्वेन्वायाङ्गीकारे नैकस्त्रीपुरुषग्रहणेऽपि तदबाधादग्निहोत्रादावपि बहुकर्तृकत्वं दुर्वारमिति वाच्यम्। असति विशेषग्राहकप्रमाणे कारणाभावेनैकस्यैव ग्रहणौचित्यात्।

अत एव यत्र स्त्रिया अपि ग्रहणे प्रमाणाभावः, तत्र सन्ध्यावन्दनश्राद्धादौ पुंस एकस्यैवाधिकार इति ( १२७ पृ० ) तन्त्रसिद्धान्तरत्नावल्याम्।

**संभूयाधिकारः**

यत्र तु विशेषग्राहकं प्रमाणम्, यत्र द्वयोर्बहूनां वाधिकारः। यथा—'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति विहिते कुलाययज्ञादौ राज्ञस्तत्पुरोहितस्य च सस्त्रीकयोरधिकारः। ( जै० ६।६।२ ) एवमहीनेषु द्वयोर्बहूनां वाऽधिकारः। 'एको द्वौ बहवो वा हीनेन यजेरन्' इति बचनबलाद्। सत्रेषु बहूनामेवाधिकारः 'सप्तदशावराश्चतुर्विंशतिपरमास्सत्रमासीरन्' इति बचनबलादेवेत्यादि बोध्यम्। एवं सत्रे कर्तृत्वानि बहूनि, तदधिष्ठानभूताश्च बहवः तेषां च सम्भूयैव कर्तव्यम्, न पर्यायेणेति।

संभूयकारिषु सत्रेषु ये फलप्रयोजकाः अंजनार्थाः संस्काराः सर्वेषां फलार्थित्वात्सर्वेषु कर्तृषु भवन्ति ( जै० न्या० १२।४।१४ )। ये च द्रव्यगतसंस्कारविशेषाः स्पर्शादयस्ते मुख्येन कृता अपि कृतार्था भवन्ति ( जै० न्या० १२।४।११-१३ ) इत्यपि निर्णीतम्।

**सम्भूयकारित्वे फलम्**

तत्र सत्यपि सम्भूयकारित्वे फलं पृथक्पृथगेव प्रत्येकभोग्यम्, न तु समवेतानाम्, नावाक्यवशः ( जै० ५।२।१ ) न चैवमेकस्मादेव कर्मणोऽनेकफलोत्पत्तौ योगसिध्यधिकरण ( जै० न्या० ४।३।११ ) विरोधापत्तिः। तत्रैकस्मात्कर्मण एकस्यैव फलस्योत्पत्तेस्सिद्धान्तितत्वादिति वाच्यम्। एकस्मात्कर्मण एकस्मिन्न्येकफलोत्पत्तेरेव तदधिकरणसिद्धान्तादात्मान्तरे तदुत्पत्तौ बाधकाभावादिति सर्वेषां फलं भविष्यति।

---

**विशेषाधिकारः**

सामान्यशास्त्रेणाधिकृतस्य वचनबलात् कर्मविशेषे अधिकारो विशेषाधिकारः। यथा—राज्ञो राजसूये, ब्राह्मणस्य बृहस्पतिसवे, वैश्यस्य वैश्यस्तोमे, अत्रैवर्णिकस्य

रथकारस्याधाने, निषादस्थपतेर्गवेधुकचरौ, स्त्रियाः सावित्रीव्रते, कुमारीणां कात्यायन्यर्चनव्रते ।

**रथकाराधिकारः** ( जै० ६।१।२ )

'वर्षासु रथकारोऽग्नीनादधीत' इति विहिताधाने रथकारस्याधिकारः। रथकारो नाम व्रात्यात्तु जायते शूद्रात्सुधन्वाचार्य एव च, इति वचनात् सौधन्वा ऋभवः सूरकक्षसं इति ( ऋ० १।११११।८ ) मन्त्रवर्णाच्च, सौधन्वापरपर्यायो वेदानधिकृतो जातिविशेषो, न तु शूद्रः। तस्याऽध्ययनाभावेन, विद्याभावात्तन्मात्रौपयिकः ज्ञानमनेनैव विधिनाक्षिप्यते। अत एव नोत्तरक्रतुष्वधिक्रियते। अत एव वेदमाधानं नाग्निसंस्कारकम्। किन्तु लौकिकाग्निगुणकं विश्वजिन्न्यायेन स्वर्गफलकमिति ध्येयम्। इति तन्त्रसिद्धान्तरत्नावल्याम् ( १२४ पृ० ) कात्यायनीयश्रौतव्याख्यातारस्तु–( का० श्रौ० १।१।६-११ ) क्षत्रियाद्वैश्यायां जातो माहिष्यः। वैश्याच्छूद्रायां जाता करणी। माहिष्येण करण्यां जातो रथकारः।

'माहिष्येण करण्यां तु रथकारः प्रजायते'। ( या० स्मृ० १।४२ ) इति याज्ञवल्कीयात् अनुलोमजातिसङ्करं रथकारत्वेन वर्णयन्ति। एतदेव माधवाचार्येणापि स्वीकृतम् ( जै० ६।१।१२ ) एतत्प्रभावेणैव स्मृतिमुक्ताफले शूद्रस्योपयिकधर्मज्ञानं ( ३३५ आ० ) प्रतिपादितम्।

**निषादस्थपत्यधिकारः** ( जै० ६।१।१३ )

'एवं रौद्रं वास्तुमयं चरुं निर्वपेत्' ( मै० सं० २।२।४ ) इति श्रुत्य एतया 'निषादस्थपतिं याजयेत्' इति विहितायामिष्टौ निषादस्थपतेरधिकारः। निषादस्थपतिशब्दश्च निषादानां स्थपतिरिति न षष्ठीसमासनिष्पन्नः। तथात्वे पूर्वपदे लक्षणापत्तेः। किन्तु निषादश्चासौ स्थपतिश्चेति कर्मधारयान्निष्पन्नः। अतश्च निषादजातीयो यस्य पतिः स एवाऽधिक्रियते। न च तस्याग्निविद्ययोरभावेन तदौपयिकाग्निविद्याक्षेपकत्वकल्पने गौरवापत्तेः। षष्ठीतत्पुरुषसमासमाश्रित्य त्रैवर्णिकमात्रपरत्वमस्त्विति वाच्यम्, लक्षणाया दुष्टत्वात्। गौरवस्य च फलमुखत्वेनादोषात्। अतो निषादाख्यस्य ब्राह्मणाच्छूद्रायामुत्पन्नस्यानुलोमसङ्करजातिविशेषस्यैवात्राधिकारः। अत्र मातृतो जातिकल्पनाच्छूद्र एवायं जात्या इति तन्त्रसिद्धान्तरत्नावल्याम् ( १२५ पृ० )। कातीयश्रौते ( १।१।१२ ) निषादस्थपतिर्गवेधुके ( मै० सं० २।४।२ )। चरावधिकारमुक्त्वा तस्य लौकिकाग्नौ ( १।१।१५ ) ( जै० ६।८३ ) करणमित्युक्तं भाष्यवृत्त्यादिषु, माधवाचार्येण च ( जै० न्या० ६।१।१३ ) तात्कालिकाचार्योपदेशादिना विद्यां संपाद्य धनिको निषादो रौद्रयागं कुर्यादित्युक्तम्।

एवं ब्रह्मचर्याश्रमे वसन् यः स्त्रियमुपैति तस्यावकीर्णिपदवाच्यस्य गर्दभेज्या-श्रौती लौकिकाग्नावेव भवतीति तत्राधिकार उक्तः कात्यायनेन ( श्रौ० १।१।१३-१७। जै० ६।८।४। )

**व्रात्यस्तोमः**

येषां त्रैवर्णिकानां सावित्रीग्रहणकालो व्यतीतस्तेषां व्रात्यसंज्ञानां व्रात्यस्तोमेऽधिकारः सूत्रेषूक्तः। व्रात्यस्तोमस्य च गणयज्ञत्वात्तस्य चाग्निसाध्यत्वात्, पाशुकत्वाच्च कलियुगे नानुष्ठानमिति याज्ञिकाः ( उ० प० सू० ) अभिप्रयन्ति। परं स्मृतिचन्द्रिकायां—व्रात्यस्तोमो व्रात्यानां प्रायश्चित्तार्थः क्रतुः। तं विहायान्यत्राधिकार इत्यर्थः। तत्र तु अपत्नीकस्य अनधीतवेदस्य अकृताधानस्य च वचनाधिकार इत्यविरोधः। (७३ सं० का०) इत्युक्तम्। तेन चाधुनापि कर्तव्यतास्य स्तोमे भवितुमर्हतीति ज्ञायते।

**स्मार्ते विशेषाधिकारचिन्ता**

एतेषामधिकरणानां प्रभावेण स्मार्तकर्मण्यपि धर्मशास्त्रीयो निर्णयः प्रभवति। यथा—

'चतुर्दश्यां तर्पणीया लुप्तपिण्डोदकक्रियाः।' इति ब्राह्मवचनात् येषां शास्त्रे पिण्डदाने उदकदानेधिकारो नास्ति तेषां पतितानामपि आश्विनकृष्णचतुर्दश्यां सगोत्रैः सपिण्डैर्वा महालये तर्पणीयत्वम्।

एवं पतितस्य वैदिककर्मसु अधिकारो नास्तीति तत्कर्तृत्वेन श्राद्धपिण्डदानादिकं न फलावहं भवति। एवं पातित्यमाप्तस्यापि श्राद्धपिण्डदानादिकमधिकारिणा न कर्त्तव्यमिति सामान्यनियमः। परं—'पतितेनाऽपि कर्त्तव्यं पतितस्य च। इति वचनाद् गयाश्राद्धं पतितकर्तृकं पतितोद्देश्यकं च श्राद्धं विशेषविधिना व्यवस्थाप्यते। ( नि० सि० १२० ) एवं म्लेच्छीकृतानामपि गयाश्राद्धं कार्यम् ( नि० सि० ३९२ )।

**निषेधशास्त्राधिकारः**

'न गृञ्जनं भक्षयेत्' ( जै० न्या० ६।२।५ ) 'न सुरां पिबेत्' इत्यादिषु निषेधेषु तु नाग्निविद्यापेक्षा। तथात्वे न कोऽपि निषेधवाक्यान्यधीयीत। न वा जिज्ञासेत तदर्थम्। को हि नाम प्रत्यवायफलकं निषेधवाक्यार्थं ज्ञातुमिच्छेत्? यस्तदर्थमध्ययनमनुतिष्ठेत्। अग्नीनां तु तत्रोपयोग एव नास्ति। अतो रागतः प्रवृत्युन्मुखस्य पुरुषमात्रस्य निषेधेष्वधिकारः। तत्राऽपि वर्णपुरस्कारेण प्रवृत्तेषु निषेधेषु ( मिताक्षरा ३।२५५ ) 'ब्राह्मणो न सुरां पिबेदि'त्यादिषु जातमात्रस्य

ब्राह्मणस्याधिकारः। अतो जातमात्रस्याऽपि ब्राह्मणशिशोः सुरापाने प्रत्यवायो भवत्येव पातित्यावहः। सामान्यनिषेधेषु तु 'प्रागुपनयनात्कामचारवादभक्षाः' इति गौतमेनोपनयनात्प्राग्यथेच्छभक्षणादेरभ्यनुज्ञानात्तदनन्तरमेवाधिकारः (जै० न्या० ६।२।६)। येषामुपनयनाभावस्त्रैवर्णिकातिरिक्तानां तेषामुपनयनस्थाने विवाह-विधानात् तत्प्रभृत्येव निषेधेष्वधिकार इति बोध्यम्।

**फले कर्तृवैयधिकरण्येऽधिकारः**

कर्मजन्यफलभोक्तृत्वं सामान्यतोऽधिकारस्वरूपम्। परं कुत्रचिद् वचनबलात् कर्तरि फलं न भवेत्तदभिलषिते संस्कार्ये भवति। यथा जातेष्टौ। तथा हि—"वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते। यस्मिन्जाते इमामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति।" इति श्रूयते। अतः पितुः प्रबुद्धस्य कर्तृत्वं न तु मुग्धस्य पुत्रस्य। ततोऽनुष्ठानफलयोर्वैयधिकरण्यपरिहाराय पितुरेव पूतत्वादिफलमिति प्राप्ते—"यस्मिञ्जाते निर्वपति स पूतः" इति वाक्येन फलस्य पुत्रसंबन्धावगमात्, पुत्रपूतत्वादेरीप्सिततमत्वेन स्वफलबुद्ध्या प्रवृत्तिसंभवात् पुत्रस्यैव पूतत्वादिकं फलमिति जैमिनीये (४।३।१७) निर्णीतम्।

एवं पुत्रसंस्कारे पितुः, पितुः प्रतिनिधित्वेन वा सपिण्डादेः कर्तृत्वेऽपि संस्कारस्यैव फलं भवति। एवं श्राद्धेऽपि पुत्रकृते उद्देश्यपित्रादेस्तृप्त्यादिफलम्।

उपनयनात्प्राक् वैदिके कर्मणि सामान्यतो नाधिक्रियते पुरुषस्तथापि संस्कारेषु उपनयनोत्तरमपि विवाहान्तसंस्कारकर्मसु कर्तृत्वमन्यस्यैव वचनबलात्, नोपनीतस्य संस्कार्यस्य।

यदि पुरुषः विवाहे स्वयं वरेण कन्यां वरयति तत्र संस्कृतभ्रात्राद्यभावे स्वयमेव नान्दीश्राद्धं कुर्यात्, न माता। (न० सि० २२१ पृ०)।

द्वितीयविवाहे तु पित्रादिसत्त्वेऽपि स्वयमेव नान्दीश्राद्धं कुर्यात् (ध० सि० २२३)।

एवमन्योऽपि नान्दीश्राद्धीयो विचारः संस्कारकर्तृत्वक्रमश्च तत्तत्प्रकरणे आकरग्रन्थेभ्यो विज्ञेय इति।

**प्रतिनिधिः**

प्रतिनिधिः ऋत्विक् इति द्वौ शब्दौ भिन्नधर्माणौ स्तः। प्रतिनिधीनां दक्षिणा च न भवति। ऋत्विजस्तु दक्षिणा वरणं चेत्युभयं भवतीति रुद्रकल्पद्रुमे स्पष्टम्। प्रतिनिधित्वं व्रतादौ यजमानसजातीयः सपिण्डः सगोत्रो वा भवितुमर्हति। आर्त्विज्यं तु ब्राह्मणस्यैवेति विशेषः।

यत्तु कश्चिदाह—शूद्रस्य ब्राह्मणादिरेव प्रतिनिधिर्युक्तो न शूद्रः।

जपस्तपस्तीर्थसेवा प्रव्रज्या मन्त्रसाधनम्।

विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलम्॥ इति मरीचिवचनादिति।

तत्तुच्छम्। प्रव्रज्यादीनां शूद्रेऽसंभवात्। 'विषये प्रायदर्शनात्' ( जै० २।३।१६ ) इति न्यायेनास्य ब्राह्मणादिगोचरत्वात्।

यदपि—उपवासो व्रतं होमस्तीर्थस्नानजपादिकम्। इति पूर्वार्धपाठस्तदापि सत्त्वे दोषः। 'स्त्रीशूद्रपतनानि षट्' इति मानवीये जपनिषेधात्। वस्तुतस्तु-संपूर्णता वाचनमात्रमत्रोच्यते इति प्रतिनिधेः का वार्तेत्यन्नदिति निर्णयसिन्धौ ( २१ पृ० )।

**प्रतिनिधित्वे-क्रियाः**

यदा तु पितुः प्रतिनिधित्वेन गयां याति, तदा यजमानस्य पितृपितामह-प्रपितामहानां श्राद्धम्। तत्र स्वमातुः पितृपत्नीत्वेनैकोद्दिष्टं कृत्वा मातृत्वेन पुनः पार्वणं कुर्यादिति त्रिस्थलीसेतौ। तच्च फल्गुविष्णुपदाक्षय्यवटेष्वेवेति केचित्। आद्यन्ते एवेत्यन्ये। मध्यमान्ते इत्यपरे। संकोचहेत्वभावात्तत्रत्यसर्वपदानि मातुः कार्याणीति युक्तं प्रतिभाति।

यत्तु मदनपारिजाते—

न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः।
येभ्य एव पिता दद्यात् तेभ्यः कुर्वीत साग्निकः॥

इति सुमन्तूक्तेः साग्नेरेव जीवत्पितृकस्य तीर्थादिश्राद्धमुक्तम्। साग्नेरपि मैत्रायणीयशाखीयस्यैव नान्येषाम्। 'षडेते जीवतः पितुः, इति तत्परिशिष्टे एवोक्तेरिति रत्नावलीदिवोदासादयः तदयुक्तम्। सौभन्तव० पिण्डपितृयज्ञविषयं संन्यस्य पित्राद्यतिरिक्तविषयं वेति पृथ्वीचन्द्रोदयोक्तेः। वृद्धौ तीर्थे चेत्यादेः साधारण्येनास्यापि तथात्वाच्च। ( ३५५ नि० सि० )।

एवं प्रतिनिधिकर्तृके प्रयोगविशेषस्तत्र ज्ञेयः।

**ऋत्विजः**

श्रौते धर्मशास्त्रीये च कर्मणि यथाविद्ध्यनुष्ठानसम्पत्त्यर्थं येषां विदुषां ब्राह्मणानां शास्त्रीयविषया शास्त्रबोधितानि वस्तूनि दत्त्वा स्वत्वापादनं, ते ऋत्विजः इति कथ्यन्ते। ऋत्विजश्च ब्राह्मणवर्णोत्पन्नास्तत्कर्म विदुष एव भवितुमर्हन्ति। तदेतत् जैमिनीयदर्शनेन ( १२।४।४२-४७ ) कात्यायनीयादि श्रौतसूत्रेभ्यश्च ( का० श्रौ० १।२।८ ) निर्णीयते।

स्मृतिषु—

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥

(मनु० स्मृ० १०।७६)

इत्यनेन याजनस्य जीविकार्थत्वोक्तेः ब्राह्मणानामेवार्त्विज्येऽधिकारः समर्थ्यते। तैत्तिरीयब्राह्मणे (१।४।४) तु देवदूत वा एते ऋत्विज इति देवविशेषः संबन्धो ऋत्विजि व्यवस्थापितः। अत एव च शतपथब्राह्मणे अमानुष इव वा एतद् भवति यदार्त्विज्ये प्रवृतें (श० ब्रा० १।६।१।२६) इत्यनेन देवत्वं साध्यते। अत एव च श्रीमद्भागवते (६।१।१६) होत्र्त्विजः सङ्कल्पान्यथाभावेन पुंप्रजायाः कल्पनायामपि स्त्रीप्रजोत्पत्तिः ऋत्विजां महत्त्वमाख्याति।[१]

कर्मणि ऋत्विग्भिः प्रार्थिता आशिषः यजमानायैव भवन्ति—"यां वै काञ्च यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव सा।" इति (श० ब्रा० १।६।१।२१) श्रुतेः। मीमांसायां तु तृतीयाध्याये आशीः प्रार्थनायां स्वामिनोऽधिकारः (३।८।७) साधितः।

ऋत्विजां प्रवृत्यर्थं कर्मणश्च साङ्गतार्थं दक्षिणादीयते। दानं च प्रतिग्रहान्तमिति प्रतिग्रहे क्षत्रियवैश्ययोरनधिकाराद् ब्राह्मणस्यैवार्त्विज्येऽधिकारः।

योग्यस्य हि कर्माधिकारे सति पश्चात् प्रयासरूपेण व्यापारेषु स्वयमशक्तः सकर्मकरानृत्विजो दक्षिणया परिक्रीणाति। (जै० न्या० वि २।८।३)

**शरीरनियमाः**

कर्मणि केचन संस्काराः वपनाद्याः यजमानगतमालिन्यमपनीय यागयोग्यतामुत्पादयितुं क्रियन्ते। एवं प्रणिनः सुखरूपस्य फलस्य प्रतिबन्धकं दुःखजनकं यत्पापं तस्य नाशकत्वेन उपवासादिदुःखरूपस्तस्यापि तपसः स्वामिसंस्कारत्वम्। तदीदृशयोः यजमानशरीरसंबन्धिनोः संस्कारयोः प्रतिनिधौ ऋत्विगादौ च सत्यपि स्वयं यजमानायैव कर्तृत्वमिति तृतीयाध्याये (३।८।३-४) (का० श्रौ० १।७।२०) स्पष्टम्। तन्मतमेव सिद्धान्तमुररीकृत्य धर्मशास्त्रीयनिबन्धेष्वपि तथा निर्णीतमस्ति। यथा—

---

१. तत्र श्रद्धा मनोः पत्नी होतारं समयावत।
दुर्मित्रियमुपागम्य प्रणिपत्य प्रयोव्रता॥
प्रेषितोऽध्वर्युणा होता ध्यायंस्तत् सुसमाहितः।
हवींषि व्यचरत् तेन वषट्कारं गणन्द्विजः॥
होतुस्तद्व्यभिचारेण कन्येला नाम साऽभवत्॥

'तेन यस्मिन् व्रते यत्पूजाद्युक्तं तदन्येन कारयेत्। शारीरनियमान् स्वयं कुर्यात् इति हेमाद्रिर्व्याचख्यौ।' ( नि० सि० २१ पृ० )

एवं सामर्थ्यस्याप्यधिकारिविशेषणत्वाद् अन्यकर्तृकेऽपि होमादौ त्यागादि यजमानेनैव कार्यम्। स्वत्वस्य तेनैव त्यक्तुं शक्यत्वात्। अग्निहोत्रादौ प्रतिनिधिव्यवस्थापनेऽपि कार्यसीमा निर्धारिता। तथा हि—

याज्ञवल्क्यः—वैतानोपासना: कार्याः क्रियाश्च श्रुतिचोदनात्।

**तत्र त्यागमात्रे ( का० श्रौ० १।७।२० ) स्नानोत्तरं स्वयं कर्तृत्वम्।**

श्रौतकर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्।' इति स्मृतेः।
त्यागातिरिक्ते तु श्रौते स्मार्ते वान्यस्यैव कर्तृत्वम्।
सूतके मृतके चैव अशक्तो श्राद्धभोजने।
प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत्। इति बृहस्पत्युक्तेरिति दिक्

॥ इति समाप्तोऽयं तृतीयः कर्मकाण्डाधिकाराध्ययनाध्यायः॥

## चतुर्थः
# कर्मकाण्डस्वरूपपरिचायनाध्यायः

**दर्शपूर्णमासयागाध्ययनम्**

भारतीयकर्मकाण्डेषु नानाविधदिव्यातिदिव्यशक्तिसमुपजृम्भितं साक्षाच्छ्रुतिप्रतिपादितत्वात् सर्वकर्मकाण्डमूर्धन्यं—श्रौतं नाम कर्मकाण्डम्, छन्दसां गायत्री, वेदेषु साम, सामसु बृहत्साम, सतीषु सीता, महाभारते गीता, मुनीनां व्यासः, वृष्णीनां वासुदेव इव परमं प्राधान्यमावहति। तथा श्रौतातिरिक्तानि सकलान्यन्यानि कर्मकाण्डानि श्रौतकर्मकाण्डमूलकानि छायाश्रितान्येव वा सन्ति। सूर्यरश्मिभिश्चन्द्र[1] इव सर्वमपि भारतीयकर्मकाण्डजातं श्रौतकर्मकाण्डादेव प्रकाशमादाय दीप्तिमद् वर्तते। अतः एकस्मिन् विज्ञाते सर्वं विज्ञातं भवतीतिवत् श्रौतकर्मकाण्डस्वरूपाध्ययनेनेतरेषां सर्वेषां—कर्मकाण्डानां स्वरूपाध्ययनं सम्पन्नमिव भवितेति कृत्वा (समुपक्रान्ते भारतीयकर्मकाण्डस्वरूपाध्ययनेऽस्मिन् सर्वदा श्रौतकर्मकाण्डानामेव स्वरूपाध्ययनमुचितम्।

तत्रापि श्रौतकर्मकाण्डेष्वपि कस्य कर्मणो हि स्वरूपाध्ययनम् आदौ विधेयमिति।

---

१. वैदिक निघण्टु १।१ गौः। ग्मा। ज्मा। क्ष्मा। क्षा[1] इत्यादि एकविंशतिपृथिवीनामसु गौः, इत्यस्य व्याख्याप्रकरणे निरुक्ते भाष्ये 'आदित्योऽपि गौरुच्यते' उतादः परुषे गवि पर्ववति भास्वतीत्यौपमन्यवः'॥ (निरु० नैघण्टुक० अ० २ खं० ६ पृ० १२०) (दुर्गाचार्यवृत्तौ)

एतस्याग्रे पुनः "अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यम्—आदित्यतोस्य दीप्तिर्भवतीति। "सुषुम्णः सूर्यरश्मिश्चन्द्रमागन्धर्वः" इत्यपि निगमो भवति। अत्र दुर्गाचार्याः निरुक्तवृत्तौ—एको रश्मिरादित्यस्य सुषुम्णो नाम चन्द्रमसं प्रत्यवस्थितो दीप्यते। तदेतेन मन्त्रार्थविदा मन्त्रान् उपेत्य ईक्षितव्यं द्रष्टव्यम्। येयमस्य चन्द्रमसोदीप्तिः, ज्योत्स्ना सेयम् आदित्यतः; आदित्यरश्मेरनुग्रहादेव अस्य भवति–इति।

अम्मयं हि चन्द्रमसो मण्डलं तत्तेजः सम्बन्धात् दीप्तिमद् भवति, ततः सर्वा दिशः प्रकाशयति। यथा चेतदेवं तथा' सुषम्णः—(यजुर्वे० वा सं० १८।४०) इत्यादि तत्र सुस्पष्टम्।

विचारे सकलानां श्रौतकर्मणां त्रेताग्निसाध्यत्वादग्नीनां चाधानकर्मसाध्यत्वात् अन्याधानस्वरूपाध्ययनमेवादौ युक्तमिति प्रतिभाति, किन्तु अग्न्याधानेऽपि पवमानादीष्टयो[1] भवन्ति पवमानादीष्टिभिरग्नयो निष्पाद्यन्ते।[2] पवमानादीष्टयश्च-दर्शपूर्णमासविकृतितया दर्शपूर्णमासेष्ट्यधिगमसापेक्षज्ञाना वर्तन्ते। तस्मात् यथा च शुक्लयजुर्वेदस्य मन्त्रभागे वाजसनेयमाध्यन्दिनसंहिताया आदौ दर्शपूर्णमासेष्टिमन्त्रा[3] एव आम्नाता दृश्यन्ते। एवं च श्रौतकर्मकाण्डविधिसमाम्नानप्रमुखे शतपथब्राह्मणेऽपि दर्शपूर्णमासेष्टिप्रकरणगतमेव पूर्णमासस्य प्रथमं यदङ्गं व्रतोपायनं तदङ्गत्वेन कर्त्तव्यतया अपामुपस्पर्शनमेवादावाम्नातमस्ति।[4] कात्यायनश्रौतसूत्रेऽपि परिभाषा-सूत्राध्ययनानन्तरं कर्मणां निरूपणप्रसङ्गे सर्वादौ पूर्वां पौर्णमासीमुत्तरां वोपवसेत्, इत्यादिना दर्श[5]पौर्णमासेष्टियागनिरूपणमेवादौ कृतमस्ति। अतो हि मयापि सर्वादौ सर्वासामिष्टीनां प्रकृतिभूतायाः दर्शपूर्णमासेष्टेः दर्शपूर्णमासयागस्यैव स्वरूपाध्ययनं क्रियत इति।

---

१. अग्न्याधानमधिकृत्याह (क) अग्नये पवमानाय प्रथमा (का० औ० ४।१०।८) (ख) अग्नये पावकायाग्नये शुचये च द्वितीया (का० श्रौ० ४।१०।९) (ग) आदित्यं चरुस्तृतीया (का० श्रौ० ४।१०।१०)

तत्रैवाह पक्षान्तरमपि अग्नये एव वा पुरस्तादादित्यस्य' (का० श्रौ० सू० ४।१०।११) अथवा आदित्यस्य चरोः पुरस्ताद् आग्नेयोऽष्टाकपालः पुरोडाश एव केवलः कार्यो न प्रागुक्तः द्वे इष्टी, अस्मिन् पक्षे आग्नेयीष्टिः अदितीष्टिश्चेति इष्टिद्वयमेव कार्यम्। इति विद्याधरवृत्तिः (पृ० १६५।)

२. शतपथ (का० अ० ब्रा० २।२।१, ६–१९) कण्डिकान्तभागोऽपि द्रष्टव्यः (पृ० ३३–३७।) कथं पवमानेष्टिभिरग्नयो निष्पन्ना भवन्तीत्यत्र विषये आख्यायिकाचात्र (शत० २।२।१ पृ० ३३–३८) यावत्स्थलेऽस्ति।

३. इषे त्वोर्जे त्वा (शु० य० मा० सं० १।१)

४. व्रतमुपैष्यन्० (शतप० १।१।१।१)

५. पौर्णमास्यां तिथौ भव इत्यर्थे पौर्णमासीशब्दात् 'सन्धि–वेलाद्यृतुनक्षत्रेभ्योण् (४।३।१६) इति सूत्रेण प्रत्यये कृते पौर्णमासशब्दो निष्पाद्यते। स चायं दर्शश्च यागवचनो। दर्शश्च पौर्णमासश्च यागो पक्षान्तयोः पृथक्। इति (२।७।४८) अमरकोशादावुक्तत्वात् अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा। दर्शेन चार्धमासेन पौर्णमासेन चैव हि॥ (मनु० ४।२५॥) इत्येवं शास्त्रेषु सर्वत्रैव प्रतीतत्वाच्च।

**एवञ्चापि**—दर्शपूर्णमासयागेऽपि द्वयोः कर्मणोः ( दर्शस्य पूर्णमासस्य च ) युगपत्संपादनस्याशक्यतया, अवश्यमेव कस्मिंश्चित्क्रमे आश्रयणीये श्रुतौ व्रतमुपैष्यन् (शत० १।१।१) इत्यादिना पौर्णमासेष्टिकर्मणोऽङ्गस्य व्रतोपायनस्यैवारभ्यमाणत्वात्, मन्त्रकाण्डे दार्शिक - ( दर्शेष्टि- ) मन्त्राणामिषेत्वोर्ज्जेत्यादीनां प्रथमकाण्डेपि दर्शस्यापि पौर्णमास[1]पूर्वकत्वात् प्रथमं तावत् पौर्णमासस्यैव वाध्ययनमौचित्यमाभजते। किन्तु द्वयोरपि कर्मणोः ( दर्शपूर्णमासयोः ) सहभूयैव स्वर्गप्राप्तिरूपफलस्य साधकत्वात् द्वयोः कर्मणोः एकत्वात् युगपदेव तयोरध्ययनस्वरूपनिरूपणमुचितमतस्तदेव क्रियत इति ।

**द[2]र्शपूर्णमासयागस्वरूपविवेकः**

दर्शे ( अमावास्यायां तिथौ ) पूर्णमासे ( पौर्णमास्यां तिथौ ) चेति कालविशेषयोः क्रियमाणत्वात् उपचारात् दर्शपूर्णमास ( दर्शपूर्णमासौ ) इति या[3]गविशेषयोः ( इ[4]ष्टिपदवाच्ययोः ) नाम ।

---

१. शतपथ० १।१।१ सायणभाष्यटिप्पणी ।

२. दर्शश्च पूर्णमासश्च दर्शपूर्णमासौ दर्शपौर्णमासौ । दर्शपूर्णमासयागौ, दर्शपौर्णमासयागः । दर्शपूर्णमासेष्टी, दर्शपौर्णमासेष्टी । दर्शपूर्णमासेष्टिः, दर्शपौर्णमासेष्टिः । पृथक् पृथक् दर्शेष्टिः पूर्णमासेष्टिः पौर्णमासेष्टिः । दर्शयागः पूर्णमासयागः दर्शपौर्णमासयागः, इति वा शास्त्रव्यवहारार्थं लोकव्यवहारार्थं वा स्वीकृतानि संज्ञा-पदानि सर्वसम्मतानि ।

३. तिष्ठद्धोमा वषट्कारप्रदाना याज्या पुरोनुवाक्यावन्तो यजतयः ( का श्रौ० १।२।६ )

४. इष्टिर्यागेच्छयोः ( अमरको० ३।३।३६ ) इष्टिर्मताभिलाषेऽपि संग्रहश्लोकयागयो इति मेदिनी, इत्यादिकोशग्रन्थानुसारेण बह्वर्थाभिधायी सन्नपि, अत्रेष्टिशब्दः याज्ञिकसम्प्रदाये चतुर्भिऋत्विग्विशेषैः अध्वर्यु-ब्रह्म-होत्रग्नीद्भिः, अध्वर्युः ब्रह्मा, होता, अग्नीन् इत्येतैः सम्पाद्यानां यागविशेषाणामर्थे, एवायमिष्टिशब्दो रूढ इवास्ते ।
उपर्युक्तः, इष्टिशब्दस्य चायं पारिभाषिकोऽर्थः—
"तस्माद्दर्शपौर्णमासयोर्यज्ञक्रतोश्चत्वारर्त्विजः ( वै० सं० २।३।६ ।" )
"दर्शपूर्णमासाविष्टीनां प्रकृतिः (आ श्रौ० २४।३।३२ ।) इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ( जै० ८।१।११ ) इत्यादिवचनानामर्थानुसन्धानेन सुस्पष्टमवगम्यते ।
अस्मिन्नुपयुक्तेऽर्थे—इष्यते स्वर्गादिफलार्थं जनैरियमितीष्टिरिति विग्रहे इषु इच्छायामिति ( तु० प० से० धातोः ) स्त्रियां क्तिन् ( ३।३।९४ ) सूत्रेण क्तिन्प्रत्यये ऽनुबन्धलोपष्टुत्वादिकार्ये कृते ।

दर्शपूर्णमासौ ( दर्शपौर्णमासौ, वेति ) द्विवचनान्तपदेन निर्दिष्टो कालद्वयेनानुष्ठेयावपि, इमौ उभावपि यागौ सहभूयैव कस्यचित् स्वर्गादिफलस्य साधकौ भवतो न खलु पृथक् पृथगिति। अत एवेदं दर्शपूर्णमासयागरूपमेकमेव कर्म।

---

अथवा

इज्यन्ते देवता अनया इति विग्रहे 'यज देवपूजासंगतिकरणदानेषु' ( स० कौ० पृ० ४५७ )। इति भ्वाद्युभयपदयजनाधातोः स्त्रियां क्तिन् ( ३।३।९४ ) इत्यधिकारे पठितेन ( सि० कौ० पृ० ६६० । ) "श्रुयजीषिस्तुभ्यः करणे" इति वार्तिकेन करणे क्तिनिप्रत्यये अनुबन्धलोपे च कृते कृत्वात् 'वचिस्वपियजादीनां किति ( ६।१।१५ ) इति सूत्रेण सम्प्रसारणे ( इग्यणः सम्प्रसारणम् ( १।१।४५ ) इति निर्णयत्वात् यकारस्थाने इकारे ) "सम्प्रसारणाच्च" ( ६।१।१०८ ) इति पूर्वरूपे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" ( ८।२।३६ ) इति जस्य षकारे "ष्टुनाष्टुः" ( ८।४।४१ ) इति ष्टुत्वे ( क्तिनः तकारस्थाने टकारे ) च कृते इष्टि शब्दो व्युत्पाद्यते।

उपर्युक्तस्य इष्टिपदस्य यागपदवाक्यता ऋग्वेदसायणभाष्ये ( १।५७।२–१।११२। १–२, १।११३।५–१।११४।६–१।१२९।४– ) इत्यादिबहुस्थलेषु प्रायः सर्वत्रैव प्रतिपादितास्ति।

इमौ दर्शपूर्णमासौ यावज्जीवं पुरुषेणानुष्ठेयौ भवतः। किन्तु तावत्कर्त्तमशक्तेन त्रिंशद्वारमनुष्ठाय विरमितुं शक्यते। तत्रापि दाक्षायणयज्ञरूपेण पञ्चदशैव वर्षाणि यावत्कृत्वा विरमितुं शक्नोति, यतो हि दाक्षायणयज्ञो नाम एकैकदर्शपूर्णमासयागप्रयोगस्य तत्तदप्रयोगकाले द्विर्द्विनुष्ठानमेव नान्यत् कर्मेति।

**पौर्णमासेष्टी—**

१. आग्नेयोऽष्टाकपालपुरोडाशयागः प्रथमः
२. आग्नीषोमीय आज्यद्रव्यत उपांशुयागो द्वितीयः।
३. अग्नीषोमीय एकादशकपालकपुरोडाशयागस्तृतीय इति प्रधानं यजमानस्य भवति।

**दर्शेष्टी—**( दर्शयागे ) सान्नाय्येन यक्षतो–यजमानस्य—

१. आग्नेयोऽष्टाकपालः पुरोडाशयागः प्रथमः
२. इन्द्रदेवताको दधिद्रव्यको यागो द्वितीयः
३. इन्द्रदेवताकः पयोद्रव्यकयागस्तृतीयः इति प्रधानं यागत्रयं भवति। उभयत्र आहृत्य प्रधानाः षट् यागा इमे सान्नाय्ययाजिनो यजमानस्य भवन्ति।

तस्मात् अनयोः कर्मणोरन्यतरत् किमप्येकं समनुष्ठाय पुरुषो न किमपि फलं लभते। फलार्थं च तयोर्द्वयोरेवानुष्ठानमनिवार्यं द्वयोरपि एककर्मत्वात्। अत्र कृताधानस्य दारवतः सपत्नीकस्य त्रैवर्णिकस्यैवाधिकारो नाकृतदारस्य, न वा मृतपत्नीकस्य। प्रत्येकं दिनद्वयमनुष्ठेयमिदं कर्म पौर्णमास्यां प्रातरारभ्य प्रतिपदि पूर्वाह्णे समापनीयम्। एवं चामावास्यायामपि प्रातरारभ्य तदनन्तरं प्रतिपदि समापनीयं भवति। किन्तु पौर्णमासयागे समः पक्षत्वमप्यस्ति तेन पौर्णमासयागः, एकस्मिन्नपि दिने (प्रतिपद्यपि कर्तुं शक्यते। श्रौताधानान्तरं पौर्णमासाभ्यामेव दर्शपूर्णमासयागानुष्ठानं भवति। आधानानन्तरं दर्शे उपस्थितेऽपि न तत्र यागः क्रियते दर्शं विहाय, आगामिन्यां पौर्णमास्यां पौर्णमासयागं विधायैव दर्शयागोऽनुष्ठीयते। अस्य च फलभोक्ता सपत्नीको यजमानः, किन्तु कर्त्तारश्च फलभोक्तारः सपत्नीकेन यजमानेन सह अध्वर्युब्रह्महोत्रग्नीध्रश्चत्वारः ऋत्विजो भवन्ति।

सान्नाय्ययागे सोमयाजिन एवाधिकारोऽस्ति। यो हि अग्न्याधानानन्तरं सोमयागं कृतवान् तस्य सान्नाय्यागो नित्यो भवति, अन्यस्य कृते तु सान्नाय्ययागोऽयमैच्छिक एव। अतो यो हि असोमयाजी सान्नाय्येन यागं कर्त्तुं नेच्छति तस्य कृते पूर्णमासे तु त एव पूर्वोक्ताः भागा भवन्ति, किन्तु दर्शे अग्नेयेन सह वैष्णवः, अग्नीषोमीयो वा आज्यद्रव्यको यागस्तथा ऐन्द्राग्नश्च द्वादशकपालपुरोडाशयागो माध्यन्दिनीयानां शाङ्खायनानां च असन्नयताश्चान्येषां शाखिनां कृते तु—

दर्शे आग्नेयोऽष्टाकपालपुरोडाशयागः प्रथमः।

ऐन्द्राग्नः, आज्यद्रव्यकयागो द्वितीयः।

इति द्वावेव यागौ भवतः। दर्शपूर्णमासयागकृते सामान्यतः यद्यपि दर्शः (अमावस्या) पूर्णमासी (पौर्णमासी) एव कालो निर्दिष्टोऽस्ति तथापि दर्शे (अमावस्यायाम्) पौर्णमास्यां च अग्न्यन्वाधानं कृत्वा नियमा एवानुष्ठीयन्ते यागस्तु ततः परं प्रतिपद्येव क्रियते। अतः कर्मेदं द्विदिनसाध्यमेव। किन्तु पौर्णमासयागकाले सद्यस्ककालत्वेन विकल्पोऽप्यमस्ति।

अतः पौर्णमास्यान्तिथौ, अग्न्यन्वाधानादिनियमाननुष्ठाय प्रतिपदि यागोऽथवा प्रतिपद्येव, अग्न्यन्वाधानादिकाः सर्वे नियमा अनुष्ठीयन्ते यागश्च क्रियते यावद्यागं नियमाश्च परिपाल्यन्ते।

**दर्शपूर्णमास-यागे अनुष्ठीयमानाः पदार्थाः**

दर्शपूर्णयागे यावन्तो हि पदार्था अनुष्ठीयन्ते तेषां समासतो विवरणम् अधोङ्कितक्रमेण क्रियमाणः दर्शपूर्णमासयोः स्वरूपज्ञाने अवश्यमुपकरिष्यति।

**दशपूर्णमासयागे**

प्रथमतः पौर्णमास्यामग्न्युद्धरणं[१]। ततो हि, अग्न्यन्वाधानं[२], ब्रह्मणो वरणं, प्रणीताप्रणयनं[३] परिस्तरणं[४] पात्रासादनं शूर्पग्निहोत्रहवण्योः[५] प्रतपनं शकट्इडायत्रीतो[६] वा अग्निहोत्रहवण्यां हविर्ग्रहणादिकं पवित्रकरणादिकं[७] पात्रहविःप्रोक्षणं हविषः कण्डनादि फलीकरणान्तं[८] तस्य पेषणं कपालोपधानम्[९] उपसर्जनीनां[१०] हविषश्चाधिश्रयणम् आप्तेभ्योऽङ्गुलिप्रक्षालनीयम्, वेदिकरणादिकं स्तम्बयजुर्हरणादिकं[११] स्रुव–जुइपमृद्[१२]ध्रुवादीनां[१३], संमार्गः[१४], पत्नीसन्नहनम्[१५]

---

१. प्रणयनार्थं गार्हपत्यादाहवनीयदक्षिणाग्नयोः पृथक्करणमग्न्युद्धरणम्।

२. गार्हपत्याहवनीयदक्षिणाग्निषु 'ममाग्ने वर्च' इति षट्समिदाधानरूपं कर्म अग्न्यान्वाधानम्।

३ चमसे संगृहीता आपः प्रणीताः तासां प्रणयनं स्वस्थाने स्थापनं प्रणीताप्रणयनम्।

४. अग्नीनां परितः कुशैराच्छादनं परिस्तरणम्।

५. अग्निहोत्रं हूयतेऽनया साग्निहोत्रहवणी।

६. वारणकाष्ठनिर्मितारत्निमात्रदीर्घा प्रान्तेषु द्व्यङ्गुलपरिधिमती मध्ये संकुचिता चतुरंगुल-इडापात्री। इडाया आधारत्वात् इडापात्रीत्युच्यते।

७. अन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्॥ इति छन्दोगव० (२।१०)

८. तण्डुलानां कणादिनिरसनेन शोधनं फलीकरणम्।

९. कपालानां विहितक्रमेण स्थापनं कपालोपधानम्। कपालानि तु पुरोडाशपाकार्थं मृत्तिका-निर्मितानि वह्नौ पक्वानि द्व्यङ्गुलोच्छ्रायाणि यस्मिन् पुरोडाशे यावन्ति विहितानि-तानि सर्वाणि मिलित्वा गार्हपत्यस्य पश्चाद् भूमौ गार्हपत्यायतनान्तः पश्चिमभागे उपधीयमानानि त्र्यंगुलवृत्तानि षडंगुलविपुलानि। सर्वाणि कपालानि एतत्क्षेत्रान्तरमेव सम्पादनीयानि।

१०. पिष्टसंयावनार्थस्तप्ता आपः उपसर्जन्यः।

११. दर्शपूर्णमासादौ यजुर्मन्त्रेण छिन्नो दर्भः स्तम्बयुजुः।

१२. पलाशकाष्ठनिर्मिता जुह्वसदृशी उप समीपे म्रियते ध्रियते इति व्युत्पत्या अध्वर्युणा होमार्थं धृतदक्षिणहस्तसंकन्धिजुह्वाः समीपे धारणादुपमृदित्युच्यते।

१३. विकङ्कतकाष्ठनिर्मितजुहूसदृशी यागसमाप्तिपर्यन्तं वेद्यां विद्यमानतया स्थिरत्वदर्शनात् ध्रुवति अप्रचलिता भवतीति ध्रुवा।

१४. मुंजरज्जुनिर्मितः पत्नीबन्धनार्थो रज्जुर्विशेषः पत्नीसन्नहनम्।

इध्मवेदि[1]बर्हिषां प्रोक्षणम्, प्रस्तरग्रहणम्[2], वेदेः स्तरणम्, परिधिपरिधानम्[3], इध्मयोराधानम्, विधृत्योः[4] स्थापनम्, जुह्वादीनां वेद्यां स्थापनादि, पञ्चदशसामिधेन्यनुवचनम्[5], अग्निसम्मार्गः, आधारौ[6], होतृवरणादिकम्, पंचप्रायजाः[7] आज्यभागौ[8] प्रधानयागः[9], स्विष्टकृत्[10], प्राशित्रावदानम्[11], इडावदानादिकम्, भागप्राशनादिकम्, अन्वाहार्यो दक्षिणा[12]। त्रयोऽनुयाजाः[13], व्यूहनम्[14], सूक्तवाकः[15], शंयुवाकः[16], पत्नीसंयाजाः[17], दक्षिणाग्निहोमः, बर्हिर्होमः, प्रणीताविमोकादि, विष्णुक्रमादि[18], याजमानम्, व्रतविसर्गः, ब्राह्मणतर्पणं चेति शम्।

---

१. पलाशादिवृक्षाणामरत्निमात्रा अष्टादशसमिध इध्मः ( छन्दो० प्र० ८।१६-२० )

२. प्रस्तरः कुशमुष्टिः।

३. आहवनीयस्य परितो निधीयन्ते इति परिधयः पलाशादिसमिधो बाहुमात्र्यः।

४. विशेषेण धृतिर्धारणं प्रस्तरादीनां ययोस्ते विधृती कुशौ।

५. सम्यगिध्यते ज्वाल्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्यः "प्रवो वाजा अमिधेषव इत्याद्याः" ( तै० ब्रा० ३।५।२ ( १ ) एकादश, तासां पठनं सामिधेन्यनुवचनम्। ( शत० १।३।२।१३ )

६. वह्नेः कश्चिद्देशमारभ्य देशान्तरपर्यन्तं समन्त्रकमाज्यधाराया आहरणं प्रक्षेपणमाधारः।

७. प्रकर्षेण इज्यन्ते देवता एभिस्ते प्रयाजाः।

८. आज्यभागो ययोस्तौ आज्यभागौ अग्निषोमौ, तत्संबन्धाद्धावाज्यभागौ।

९. फलोद्देशेन विहिता देवता प्रधानदेवता। तदर्थं यागः प्रधानयागः।

१०. प्रधानयागस्य सुष्ठु इदं करोतीति स्विष्टकृत्, प्रधानस्य पौष्कलपादक इति यावत्।

११. प्राशित्रं ब्राह्मणो भागः, तस्यावदानग्रहणं प्राशित्रावदानम्।

१२. अन्वाहरति यज्ञसम्बन्धि दोषजातं परिहरति अनेनेति अन्वाहार्यां नामऋत्विग्भोजनीय आदेशः ( शत० साय० १।३।३।५ )

१३. अनु पश्चात् प्रधानयागानन्तरमिज्यते इतिव्युत्पत्त्या होत्रा पठ्यमाना याज्यामन्त्राः अनुयाजाः।

१४. जुह्वाः प्राच्याम्, उपभृतः प्रतीच्यामपसारणं व्यूहनम्।

१५. 'इदं द्यावापृथिवी' ( का० हौ० प० १।१३ ) इत्यनुवाकप्रतिपाद्यो मन्त्रविशेषः सूक्तवाकः।

१६. तच्छंयोरावृणीमहे ( का० हौ० प० १।६ ) इति मन्त्रस्य संयुनामबहस्पतिपुत्रस्तुतिरूपत्वात् शंयुपदघटितत्वाच्च संयुवाक इति नाम।

१७. पत्नीदेवताका दर्शपूर्णमासाङ्गभूताश्चत्वारो यागविशेषाः पत्नीयाजाः।

१८. विष्णुपादबुध्या भूमौ स्वपादप्रक्षेपा विष्णुक्रमाः।

**स्मार्ते सप्तपाकयज्ञसंस्थाः**

गृह्यकल्पसूत्रे स्मार्ताग्निमतानुष्ठेयाः सप्तपाकयज्ञसंस्थाः सन्ति। यद्यपि तासामग्निहोत्रिपुरुषवैरल्यादनुष्ठानमप्रचलितमिव वर्तते, अथापि भारतीयकर्मकाण्डस्य तादृशस्यान्तर्हितस्य परिचयोपस्थापनं युक्ततरमिति तासां विषये उच्यते।

**१—औपासनहोमः**

विवाहसंस्कारे संस्काराङ्गहवनक्रियानिष्पत्तये योऽग्निः स्थाप्यते तमेवाग्नि नित्यतया धृत्वा तत्र यः सायंप्रातर्दध्ना तण्डुलैरक्षतैः पय आदिद्रव्येण वा होमः स औपासनहोमः। वैवाहिकाग्निविकल्पत्वेन निर्मंथ्याग्निरपि विहितः। अस्य च औपासनहोमस्य प्रारम्भ्यकालः दारग्रहणकालः दाधाद्य( मित्र्यधनविभाग )कालो वेति सर्वत्र स्पष्टम्। अयं होमः यावज्जीवं सायंप्रातः करणीयः। वानप्रस्थाद्याश्रमान्तरे अग्नेः स्वस्मिन्नारोपोऽपि भवति।

**२—वैश्वदेवम्**

एतदपि पंचमहायज्ञापरपर्यायं प्रात्याहिकानुष्ठेयकर्म। अन्नशुद्ध्यर्थं जीवदयया चैतत् क्रियते। एतस्य विधिः प्रतिशाखं भिद्यते इति तत एवावगन्तव्यः। पंचमहायज्ञ-विषयश्चात्र स्वतन्त्रतया श्रुतिप्रामाण्येनोक्तः।

**३—पार्वणम्**

अमावास्या तिथिः पर्व। तत्र क्रियमाणं पितृश्राद्धं पार्वणम्। अथवा पित्रा मृतव्यक्तित्रिकं पर्व। मातामहादिमृतव्यक्तित्रिकमपरं पर्व। एवं पर्वणोः पर्वणां वार्थे क्रियमाणं श्राद्धात्मकं कर्म पार्वणमिति सर्वे। सम्प्रदायविदस्तु-पाकयज्ञसंस्थासु पार्वणशब्देन श्राद्धं नाभिप्रयन्ति। तस्य मासिश्राद्धपदेन पृथगभिधानात्। अतः अमावस्या पूर्णिमा चेति द्वितयमपि पर्व तत्सम्बन्धेन पक्षादौ क्रियमाणं स्मार्तमतो यत् स्थालीपाकविधानम् ( पा० गृ० १।१२ ) तदेव पार्वणमिति। एवं च हविर्यज्ञेषु दर्शपौर्णमासविधानमप्यनुगतं भवति इति।

**४—अष्टकाः**

हेमन्तशिशिरर्तुसंबन्धिनीषु चतसृषु कृष्णपक्षाष्टमीषु क्रियमाणं तत्तच्छा-खीयगृह्यसूत्रानुसृतविधया क्रियमाणं कर्म अष्टकाः। नित्यत्वाच्च स्वसामर्थ्य-विरहादनुष्ठाने तदनुकल्पत्वेन अनडुहां घासप्रदानमुक्तम्। एतेनेदं ज्ञायते यत् पशूनां संरक्षणाय संबर्द्धनाय चैतदष्टकाकर्मकाण्डं महत्त्वमास्कन्दते।

**५—मासिश्राद्धम्**

येषां वात्सल्येन कृपया चैतन्मानवं जन्म लब्ध्वा कार्यक्षमत्वमासादितं तेषां साक्षादुपकृतवतां पित्रादित्रितयानां मात्रादित्रयाणां मातामहादित्रयाणां च जीवतां

मनःप्रसादनं कर्त्तुं शक्यते। परं तेषां प्राणोत्क्रमणानन्तरं स्वस्वकर्मवशेन यथायथं फलभोगसम्बन्धे सति शास्त्रीयविधया तत्तद्योनिसम्बद्धजीवेन तेषामुपकार-सम्पादनाय प्रतिमासं एकस्यां तिथौ अमावस्यायां श्राद्धक्रियाकरणं मासिश्राद्ध-मित्यभिधीयते। तस्य च विधिः शास्त्रग्रन्थेषु स्पष्ट एव।

**६—श्रवणाकर्म**

ये किल सरीसृपाः सर्पप्रमुखाः मनुष्यशब्दम् ( मनुष्य की आहट पाकर ) श्रुत्वा वेपन्ते, अवेपिताश्च ते मानवजातिमपकुर्वन्ति ते श्रावणाः। तेषामुपकाराय तदीयापकारप्रवृत्तिनिरसनाय च क्रियमाणं कर्म श्रवणाकर्म इति यथाशाखश्रावण-पौर्णमासीतः आरभ्य मार्गशीर्षपौर्णमासीपर्यन्तसम्प्रदायविदः। एतच्च प्रत्यहं सायं सर्पाद्युद्देश्येन वलिप्रधानविधया क्रियते।

**७—शूलगवः**

शूलम्—हानिकृद्रोगजातम्। तस्य यो गौः शब्दः तस्य अर्थात् पशुघातक-रोगोद्घोषस्य निरसनं मुख्यतया प्रवृत्तं कर्म शूलगवः इति सम्प्रदायविदः। अत्र हि ईशानाय स्थालीपाकः आपस्तम्बगृह्यसूत्रे ( ६।१३ उक्तः )। शाखान्तरे पशुद्रव्येणापि अयमनुष्ठीयते इत्येवं सप्त पाकयज्ञसंस्थाः परिचायिताः।

**हविर्यज्ञसंस्था**

श्रौतकर्मकाण्डे सप्त हविर्यज्ञसंस्थाः सप्त च सोमयज्ञसंस्थाः प्रामुख्यं भजन्ते। तत्र सप्तानां हविर्यज्ञसंस्थानां परिचय एवं ज्ञातव्यः।

**१—अग्निहोत्रम्**

आहवनीयः, गार्हपत्यम्, दक्षिणाग्निः इति संज्ञाभिः व्यवहृताः त्रयोऽग्नयः वैतानाग्नय इत्युच्यते। इमे एव श्रौता अग्नयः। एतेषु च क्रियमाणं कर्म विशुद्धं श्रौतं कर्माभिधीयते। एतेषु त्रिषु अग्निषु प्रत्यहं सायंप्रातःकालयोः क्रियमाणो होमोऽग्निहोत्रहोम इति कथ्यते।

यद्यपि स्मार्त्ताग्निमानपि सायंप्रातःकालयोरग्नौ होमं करोति। परं तस्य औपासनहोम इति संज्ञावर्त्तते नाग्निहोत्रम्। औपासनाग्निरत्र लौकिकशब्देनापि कीर्त्यते। अत एव तस्य नाग्निहोत्रव्यवहारो याज्ञिकेषु मीमांसकेषु च।

एतस्य च स्वरूपमत्रैव पृथगुक्तमिति न द्विरावर्त्यते।

**२—दर्शपौर्णमासौ**

दर्शोऽमावस्या, पूर्णमासी पूर्णिमा अनयोः तिथ्योरुपक्रम्य उत्तरदिने क्रियमाणं इष्टिशब्दाभिधेयं कर्म दर्शपूर्णमासौ। अनयोः स्वरूपमत्रैव प्रबन्धे पृथगुक्तम्।

## ३—आग्रयणम्

अग्ने भवान्नोत्पत्त्यनन्तरमयनमाचरणं यस्य तत्कर्म आग्रयणम्। एतच्च कर्मेष्टिरूपम्। अत इयमाग्रयेणेष्टिः अन्नानामुत्पत्तिसमये शरदि वसन्ते च कर्तव्या। अत्र द्रव्यं पुरोडाशश्चरुश्च। चरुरयं पयसि श्रपणीयः। नवान्नीह्यो यवा वा प्रधानद्रव्यम्। दक्षिणा चात्र मग्नः सन्युतः संस्कृतो रथः क्षोमं वर्षाघृतं वासः। इयमिष्टिर्नित्या।

## ४—चातुर्मास्यानि

यद्यपि याज्ञिकसम्प्रदाये अनुष्ठानविधायां, कल्पसूत्रेषु चोपदेशविधायां सोमयागात्पूर्वमेव चातुर्मास्ययागानामवसरः, परमस्माभिः चातुर्मास्यानां ऐष्टिक-पाशुक-सौमिकरूपेण त्रिविधत्वात् सोमानन्तरं परिचयो दीयते। चातुर्मास्य यज्ञे इति तत्र भव इत्यर्थे चतुर्षु मासेषु भवन्ति इति चातुर्मास्यानि यज्ञकर्माणीति पाणिनीयैः (पा० ५।१।९४) साधुत्वमुत्पाद्यते शब्दस्य। एकस्मिन् वत्सरे चतुर्षु चतुर्षु मासेषु एकैकं पर्व कृत्वा अयं यज्ञः समाप्यते। नित्यानामपि चातुर्मास्यानां पक्षद्वय-मस्ति। उत्सर्गपक्षः, अनुत्सर्गपक्षश्चेति। सकृत्कृत्वोपरम उत्सर्गपक्षः। प्रथमप्रयोगं परिसमाप्य पुनस्तान्यारभ्य पूर्ववदनुष्ठानं पञ्च संवत्सरं यावत् ततोऽप्यधिकं वेति सोऽयमनुत्सर्गपक्षः। सोमेन यक्ष्यमाण उत्सर्गपक्षमेव आश्रयेत्।

इमानि चातुर्मास्यानि त्रिप्रकाराणि भवन्ति-ऐष्टिकानि, पाशुकानि, सौमिकानि चेति। अन्नहविष्काणि। ऐष्टिकानि, पाशुकानि पशुद्रव्यकाणि। देवतास्तु ता एव। तेषामनुष्ठानं परं पशुयागविधानेन। एवं सौमिकेषु सोमरस एव द्रव्यम् देवतास्तु ता एव। सोमयागविधिना च दीक्षोपसत्प्रवर्ग्याद्यनुष्ठानपूर्वकमनुष्ठेयानि।

तत्र ऐष्टिकेषु संवत्सरानुष्ठानपक्षेण सह पञ्चाहानुष्ठानपक्ष एकदिनानुष्ठान-पक्षश्च बौधायनादिभिरुक्तः। स यथा—प्रथमदिने वैश्वदेवपर्व। द्वितीयदिने वरुण-प्रघासपर्व। तृतीयचतुर्थदिनयोः द्वयोः साकमेधपर्व। पञ्चमदिने शुनासीरीयमिति। अयं पञ्चाहः पक्षः। चत्वार्यप्येतानि पर्वाण्येकस्मिन्नेव दिने यदानुष्ठीयन्ते स एकाहपक्षः। तत्रापि तान्येव हवींषि। ता एव च देवताः। परं तु सर्वेषां प्रधानानां पौर्णमासीकालानुष्ठेयत्वात् तत्तदङ्गानां सम्भवतां तन्त्रेण अनुष्ठानम्। असम्भवता त्वावृत्तिः। अङ्गानां परस्परविरोधे वारुणप्राघासिकान्यायेन तान्यनुष्ठेयानि।

पाशुकचातुर्मास्येषु नैकैकस्य प्रधानहविषः स्थाने एकैकं पशुद्रव्यम्, किं तु त्वेकैकस्मिन् पर्वण्येकैकः। तत्र वैश्वदेवपर्वणि विश्वदेवदेवताक एकः पशुः। वरुणप्रघासे वरुणदेवताक एकः। साकमेधे महेन्द्रदेवताक एकः पशुः। शुनासीरीये शुनासीरदेवताक एकः। इतराणि हवींषि तेषु पर्वसु तानि तान्येव। तत्र पशुयागं

पर्वणोऽन्ते आदौ वा पृथक्साङ्गमनुष्ठाय ततस्समानतन्त्रेणेष्टीनाम् अनुष्ठानमित्येकः पक्षः। पशुतन्त्रमध्य एवेष्टीनामप्येकतन्त्रेण अनुष्ठानमित्यपरः पक्षः। अस्मिन् पक्षे पश्वङ्गानामेवैकादशप्रयाजादीनामनुष्ठानम्, नैष्टिकाङ्गानां नवप्रयाजादीनाम्।

सौमिकचातुर्मास्येषु वैश्वदेवपर्वस्थाने अग्निष्टोमसंस्थाकस्सोमयागः वरुणप्रघासपर्व दिनद्वयानुष्ठेयम्। तत्र प्रथमदिनेऽग्निष्टोमसंस्थाक उक्थ्यसंस्थाको वा सोमयागः। द्वितीयदिने उक्थ्यसंस्थाकः। साकमेधपर्व दिनत्रयानुष्ठेयम्। तत्र प्रथममहरग्निष्टोमसंस्थाकम्। द्वितीयदिने उक्थ्यसंस्थस्सोमयागः। तृतीयदिनेऽतिरात्रसंस्थाकः। शुनासीरीये पर्वणि ज्योतिष्टोम इति विवेकः। सप्तसु दिनेषु सवनीयपशुयागा अप्यङ्गतया अनुष्ठेयाः। तेषु विश्वेदेवाः वरुणः, मरुतः, अग्निः, इन्द्राग्नी, ऐकादशिन देवताः, वायुरिति क्रमेण देवताः। एकैकस्य पर्वणस्समाप्ताववभृथेष्टिः पृथक् पृथगिति।

५—निरूढपशुबन्धः

पूतस्य पशुयागप्रकरणेनैवात्रोक्तेन परिचयो ज्ञेयः।

६—सौत्रामणीयागः

सौत्रामणी नाम पशुयागः। स द्विविधः प्रोक्तस्तैत्तिरीये बोधायनापस्तम्बादिभिश्च-चरकसौत्रामणी कौकिलसौत्रामणी चेति। तत्र चरकसौत्रामणी स्वतन्त्रा, चयनाङ्गभूता च। अस्यां त्रयः पशवः-अजो धूम्रवर्णोऽश्विदेवताकः। मेषः सरस्वतीदेवताकः। मेष एव चेन्द्रदेवताकः। निरूढपशुबन्धकल्पेन त्रयाणां सहैव अनुष्ठानम्। अत्र वपायागानन्तरं सुराग्रहग्रहणं यद्यपि ब्राह्मणश्रौतसूत्रादावुक्तं तथापि तस्य कलौ निषिद्धत्वात् तद्विकल्पतया आपस्तम्बादिभिः पयोग्रहाणां विधानात् तैरेव यागोऽनुष्ठीयते। तत्र त्रयो ग्रहाः। पशुयागीया देवता एव अत्रापि देवताः। तैर्हुत्वा पितॄनुपस्थाय पशुपुरोडाशयागमनुतिष्ठेत्। त्रयः पुरोडाशाः। इन्द्रः, सविता, वरुण इति क्रमेण तत्र देवताः। ततोऽङ्गयागाद्यनुष्ठानपूर्वकं सौत्रामणीं समाप्य, वारुणेनैककपालेन अवभृथेष्टिं कृत्वा स्नात्वा अग्नीन् समारोप्य गृहमागच्छेत्। इयं चरकसौत्रामणी। कौकिलसौत्रामण्याम् ऐन्द्रः, आश्विनः, सारस्वतः, ऐन्द्रः, ऐन्द्रो वायोधसश्चेति पञ्च पशव इतीयान् विशेष इति सौत्रामणी।

# पिण्डपितृयज्ञः

पिण्डयुक्तः पितृयज्ञः पिण्डपितृयज्ञः। शाकपार्थिवादित्वात् युक्तपदलोपः। अत्र होमानन्तरं पितॄनुद्दिश्य पिण्डदानमस्तीति पिण्डयुक्तत्वात् पिण्डपितृयज्ञत्वम्।

एतस्यानुष्ठानं यस्मिन् दिने चन्द्रमा सर्वथा न दृश्येत तस्मिन्नमावास्यादिने अपराह्णकालो[1] भवति।

यदि अग्निहोत्री जीवत्पितृको भवति तदा होमान्तं कर्मकरणीयमित्येकः पक्षः। जीवतः पितॄन् परित्यज्य त्रयाणां पितॄणां पिण्डदानं कार्यमिति द्वितीयः पक्षः। जीवत्पितृकः पिण्डपितृयज्ञं नैव कुर्यादिति तृतीयः पक्षः। तत्र तृतीयपक्ष एव कात्यायनस्य विशेषोऽनुरोधः, व्यवहारोऽप्येवमेव। मृतपितृकः जीवत्पितामहः जीवत्प्रपितामहो वा पिण्डपितृयज्ञेऽधिक्रियत एव। तत्र द्वितीयपक्षमादाय पिण्डदाने जीवतां पितॄणामुपरितनपुरुषानादाय त्रित्वसंख्यापूर्तिः कर्तव्या। सोऽयं पिण्डपितृयज्ञः दर्शाङ्गमिति कात्यायनीया भाष्यकृतः[2]। अनङ्गमिति जैमिनीयाः सम्प्रदायविदश्च।

अत्र सङ्कलनीयानि द्रव्याणि च यथा—

१—सकृदाच्छिन्नं बर्हिः (कुशोत्पाटनसमय एव मूलस्य अधस्तात् सकृदेव नैव शस्त्रप्रहारेण यदुत्पाटितं बर्हिः तत्, मूलविरहितं बर्हिः सकृदाच्छिन्नमिति तु न। मूलादूर्ध्वं सकृत्प्रहारेण कृतानि बर्हीषि सकृदाच्छिन्नानि आपस्तंत्रीयेषु भवति न कार्तीयेषु)

---

१. सायं तैत्तिरीयाणां ( प्र० य० त० प्र० पृ० ३६ ) दिनमानस्य त्रेधा विभागे पूर्वाह्णः मध्याह्नः, अपराह्ण इति त्रयाणां भागानां संज्ञा।

२. मम तु प्रतिभाति यत् कात्यायनेनापि पिण्डपितृयज्ञस्य दर्शाङ्गत्वं न साधितम् अन्यथा— "अनारम्भो वा। न व्यवेते जातूकर्ण्यः। न जीवन्तमतीत्य ददातीति श्रुतेः" इत्येषां ( का० श्रौ० ४।१।२५-२७) सूत्राणां विचारो संगतः स्यात्। न ह्यङ्गविकलः दर्शयागःफलं साधयितुं प्रभवेत्। तस्मात् अवत्तनाशे हविरन्तरोत्पादननिर्णये यथा सिद्धान्तसूत्रयोर्मध्ये पूर्वपक्षः तथा अङ्गं वा समभिव्याहारादिति ( ४।१।३० ) पूर्वपक्षसूत्रम्। अनङ्गत्व एव कातीये चन्द्रादर्शने ( का० श्रौ० ४।१।१ ) इति पदं सार्थकं भवितुमर्हतीति सुधीभिरनुसन्धेयम्। विशेषविचारस्तु श्रौतसूत्रविवरणे मदीये द्रष्टव्यः।

२—व्रीहय:—चरोः कृते

३—उदकम्—श्रयणार्थम्

४—चरुपात्रम् ,, महत् । चतुर्मुष्टि तण्डुलपाकेन यथा न पूर्येत

आज्यम्—होमार्थम् ।

आज्यस्थाली

५—मेक्षणम्—स्रुक् स्थानीयम्

६—अवनेजनपात्रम्

७—सूत्राणि—नव पिण्डोपरि दानार्थम्

अथवा—ऊर्णा

अथवा—दशा ( या प्रायः स्त्रीवासः सु पृथगुपरिष्टाद्योज्यते )

८—स्फ्यः—रेखाकरणार्थः

९—कृष्णाजिनम्—भूमावास्तीर्य हविरवहननार्थम्

१०—उलूखलं } अवघाताय
११—मुसलम् }

१२—शूर्पम्—परावमनार्थम्

अत्रायं पदार्थक्रमः ।

अत्र दक्षिणाग्नौ पाकः होमः तत्सन्निधावेव पिण्डदानम् । अमायाम् अपराह्णे सङ्कल्पः, नीवीबन्धनम्, दक्षिणाग्नेः परिस्तरणमप्रदक्षिणम् एकैकशः पात्रसादनम् गार्हपत्यस्य पश्चिमत उपविश्य पर्वरातात् ( परात ) तूष्णीं चतुर्मुष्टिहविर्ग्रहणम् । कृष्णाजिनास्तरणम् । ऊलूखलमुसलावधानम् । व्रीह्या वापः, दक्षिणाग्नेरुत्तरतस्थितयोः दक्षिणामुखायाः पत्न्या व्रीह्यवघातस्तूष्णीं यावत्तण्डुलनिष्पत्तिः सकृत्फलीकरणम् । सकृत्प्रक्षालनम् । दक्षिणाग्नौ पाकः । सारतण्डुलश्रपणम्[1] दक्षिणाग्नेराग्नेय्याम् ? वेदिकल्पनम्, स्फ्ये रेखाकरणम्, हविष आज्येनाभिघारणम् । सकृदाच्छिन्नकुशैः स्तरणम् ।

चरोरुद्वासनम् । वेद्यामासादनम् । अपसव्यम्[2] । मेक्षणेन सकृदवद्यादक्षिणाग्नौ होमः—

१—अग्नये कव्यवाहनाय स्वाहा ।

२—सोमाय पितृमते स्वाहा ।।

दक्षिणाग्नेः दक्षिणतः ( स्थूलमानेन पश्चिमतः । पश्चिमतः ( उच्चारणम् )

१. पक्वेषु यथा तण्डुलांशः शिष्येत ।

२. होमस्यास्य पैतृककर्माङ्गकत्वावश्यंभावात् प्राचीनावीतित्वम् । युक्तं चैतत् जीवत्पितृकस्य होमान्तकर्मानुष्ठाने प्राचीनावीतित्वम् । एवं पितृयज्ञोपपत्तेः ।

पिण्डदानार्थं स्फ्येन दक्षिणा रेखाकरणम्

दक्षिणाग्न्युल्मुकस्य रेखा पूर्वाग्रे निधानम्

रेखाया मूलमध्यान्तेषु क्रमशः पितृपितामहप्रपितामहेभ्यः पितृतीर्थेन अवनेजनदानम् । रेखायां सकृदाच्छिन्नकुशास्तरणम् ।

अवनेजनस्थाने स्वेभ्यः पिण्डदानम्

अप्रदक्षिणं मुखमाहृत्योदङ्मुखस्य जपः ।

आवृत्तस्य जपः

पुनरवनेजनम्

नीवीविस्रंसः

षण्नमस्काराः

गृहान्न इति जपः

पिण्डोपरि सूत्राणां, ऊर्णानां, दशान्यां, उत्तरे (५० उर्ध्वं) यजमानस्य उरोलोमानि वा ।

दानम् ।

पिण्डमूले जलसेकः

स्थाल्यां पिण्डस्थापनम्

अवघ्राणं यजमानस्य (पुत्रकामनायां पत्न्याः मध्यमपिण्डप्राशनम्)

उत्सुकसकृदाच्छिन्नकुशानामग्नौ प्रक्षेपः

यात्राणां प्रत्यासः

प्रोक्षणम्

कर्मार्पणम् ।

इति पिण्डपितृयज्ञः ।

## सप्तसोमसंस्थाः

श्रीमद्भिर्याज्ञिकतल्लजैः स्वनामधन्यैः कात्यायनाचार्यैः स्वश्रौतसूत्रग्रन्थैर्यज्ञं व्याख्यास्यामः" ( का० श्रौ० सू० अ० १ कं० २ सू० १ ) इति प्रतिज्ञाय यज्ञलक्षण-मवश्यं वक्तव्यमितिकृत्वा तदनन्तरमेव "द्रव्यं देवता त्यागः" इति सूत्रयित्वा यज्ञलक्षणं सुस्पष्टमकारि। तत्र द्रव्यं नाम हविः घृतादि। तद्धि देवानां कृते जीवनं चामृतं च, तेनैव दत्तेन देवा जीवन्ति ( अमृताहुतिराज्याहुतिः ( ऐ० ब्रा० २।१४ ) 'व्रीहियवान् वा हविषि' ( का० श्रौ० १।६।१ ) "तिलाः कृष्णाः घृताभ्यक्ताः किञ्चिद्यवसमन्विताः" ( शा० र० )। 'होमं समारभेत् सर्पिर्यवव्रीहितिलादिना' ( शा० सा० ) अन्यत्रापि दधिसोमादि "जीवं वै देवानां हविरमृतममृतानाम्, ( श० बा० १।२।१२० ) 'इतः प्रदानाद्धि देवा उपजीवन्ति' ( श० ब्रा० १।२।५।२ ) इत्यादिश्रुतेः। यथा लक्षलक्षावधिमणतैलप्रदानसमर्थोऽपि तैलयन्त्रः ( तेल पेरने की मशीन ) विन्दुमात्रमपि तैलं परदत्तमेवापेक्षते तद्विना मृत इव भवति। तेन स जीवो भूत्वो वेलति तथैव हविषा देवा अपि। देवाः देवता च इन्द्रादयः प्रसिद्धा एव।

छन्दस्य प्रजापतिः, त्यागश्च यज्ञे अध्वर्युः, जुह्वादिपात्रे हविर्गृहीत्वा होतारमवलोक्य तमाज्ञापयति—'अग्नेये अनुवाक्यां पठ' "अग्नयेऽनु ब्रूहि" इति। तदा तेन होत्रा तद्देवतायामृचि पठितायाम् आग्नीध्रनामकमृत्विजं कथयति-मया हविः प्रदातुमिष्यते। तदग्नये श्रावय "ओ श्रावय" इति। एतच्छ्रुत्वा स चाग्नीध्रो ब्रवीति "अस्तु श्रौषट्" अस्तु अर्थात् मयाङ्गीकृतं श्रावयामि। श्रौषट् इति श्रावणप्रकारः। तदनन्तरमध्वर्युः "यज" इति होतारं प्रति वदति। हे होतः प्रकृतदेवताकां याज्यां पठ इति तदर्थः। ततो होता तामृचं पठित्वा वषट्कारं "श्रौषट् वौषट्" इत्यादिकमपि पठति। ततः, अध्वर्युः स्वहस्तस्थितं हविरग्नौ प्रक्षिपति, यजमानश्च तत्समकालमेव तत्तद्देवतोद्देश्यकत्यागप्रतिपादकं ( स्वत्वत्व-निवृत्तिबोधकम् ) 'इदं.........न मम' ( इदमग्नये न मम इत्यादि ) इदं चाग्नौ प्रक्षिप्यमाणं हविः अस्मै ( अग्न्यादिभ्यः भवतु "न मम", मदीयसम्बन्धो योत्रासीत् स इतः परं नेत्यर्थकं वाक्यं पठति। अयमेव त्यागप्रकारः सर्वत्र यागेषु, किन्तु पशुसोमयागेषु तु मैत्रावरुण इति होतुरनन्तरं ऋत्विक्पुरोनुवाक्यां पठति अनन्तरं च होता याज्यां पठति, इति दधिसोमव्रीहियवादिद्रव्यं यत्राग्न्यादिदेवतोद्देशेन स्वस्वत्वनिवृत्यनुकूलव्यापारेण सह त्यज्यते स एव यज्ञ इति पूर्वोक्तसूत्र-निर्गलितार्थः।

एतादृशानि यावन्ति यज्ञकर्माणि सन्ति तानि सर्वाणि वेदेषु पञ्चधा विभक्तानि। यथा चैतरेयब्राह्मणे 'स एष यज्ञः पञ्चधोऽग्निहोत्रं दर्शपूर्णमासो चातुर्मास्यानि पशु सोम' इति। किन्तु गौतमधर्मसूत्रादिषु स्मृतिग्रन्थेषु, औपासनहोमः, वैश्वदेवम्, पार्वणम्, अष्टका, मासिश्राद्धम् श्रवणशूलगव, इति सप्तपाकयज्ञसंस्थाः। अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रायणम् चातुर्मास्यानि, निरूढपशुबन्धः सौत्रामणी पिण्डपितृयज्ञादयो दर्विहोमाः, सप्त हविर्यज्ञसंस्थाः। अग्निष्टोम अत्यग्निष्टोम उक्त्थः षोडशीवाजपेयातिरात्राप्तोर्याम इति सप्तसोमसंस्था एवं श्रौतस्मार्तान्याहृत्य एकविंशतिविधानि अभिहितानि। एतेषु कानिचन होमपदवाच्यानि कानिचन यज्ञपदवाच्यानि। यत्र कर्मणि तिष्ठता होमः वषट्कारेण प्रदानं क्रियते। याज्या-पुरोऽनुवाक्या च पठ्यते तत्कर्म यज्ञः इत्युच्यते। एवं च यत्र उपविष्टेन होमः स्वाहाकारेण च प्रदानं क्रियते तत् कर्म होम इत्युच्यते। "तिष्ठद्धोमा वषट्कार-प्रदानायाज्यापुरोनुवाक्यावन्तो यजतय" ( का० श्रौ० १।२।६ ) "उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः" ( १।२।७ ) इति कात्यायनादिभिरुक्तत्वात्। अत एव ऐतरेयब्राह्मणोक्तेषु यज्ञपदवाच्येषु पूर्वोक्तेष्वपि अग्निहोत्रं होममेव कथयन्ति। अग्निहोत्रं यज्ञं कथयन्ति, तत्तु तत्र गौणवृत्या एव यज्ञशब्दे तत्र प्रयुज्जेत इति याज्ञिका मन्यन्ते, अग्निहोत्रमिव अन्येऽपि केचन होमविशेषा दर्विहोमपदवाच्यास्तेऽपि होमपदेनैव व्यपदेशमर्हन्ति न चेष्टिपदेन नापि यज्ञपदेन।

यद्यपि यज्ञहोमयोर्द्वयोरपि उद्देशांशः, त्यागांशः प्रक्षेपांशः, इति अंशत्रयं वर्तत एव तथापि प्रक्षेपांशस्य अङ्गत्वम्, उद्देशांशत्यागांशयोः प्राधान्यं यत्रास्ति स यज्ञपदार्थः। उद्देशांशत्यागांशप्रक्षेपांशानां यत्र समं प्राधान्यं स होमपदार्थः। अयं हि विभागो याज्ञिकैः, जैमिन्यादिभिः ( ४।२।२७ २८ ) सूत्रकारैश्च स्वीकृत एव। व्याख्यातारश्च क्रियाद्वयवृत्तिजातिर्यागत्वम्, क्रियात्रयवृत्तिजातिश्च होमत्वमिति सुस्पष्टमूचुः। ( मा० दी० ३।४।१८ )। अत एव शतरुद्रियादौ जुहोतिचोदना-चोदित्वात् होमत्वं स्वीकृत्य सङ्कल्पादौ होमपदस्यैवोल्लेखः क्रियते, अग्निहोत्रेऽपि होष्यामीत्येवोच्यते। उक्त यज्ञलक्षणरहितानां येषामपि कर्मणां नाम्ना सह यज्ञ-शब्दस्य प्रयोगो दृश्यते क्रियते वा तत्र सर्वत्र गौण एव प्रयोगः। अस्त्वल-मतिविस्तरेण विवेचनेन।

प्रकृतमनुसरामः, उक्तेषु एकविंशतिविधेषु कर्मसु अग्निष्टोमो नाम सोमयज्ञः त्रिभिरपि वेदैरनुष्ठीयते, उक्तं चापस्तम्बेन "यज्ञं व्याख्यास्यामः। स त्रिभिर्वेदै-र्विधीयते ऋग्वेदयजुर्वेदसामवेदैः। ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ। यजुर्वेदेनाग्नि-होत्रम्। सर्वैरग्निष्टोमः ( आ० प० १।१।७ ) इति। अग्न्याधानं कृत्वैवायं यज्ञः

कर्तुं शक्यते, अग्निमत एव तत्राधिकारप्रतिपादनात्। वसन्त एवायं भवति। यज्ञेऽस्मिन् षोडश ऋत्विजो भवन्ति। १–ब्रह्मा २–उद्गाता ३–होता ४–अध्वर्युः ५–ब्राह्मणाच्छंसी ६–प्रस्तोता ७–मैत्रावरुण। ८–नेष्टा ९–प्रतिप्रस्थाता १०–पोता ११–प्रतिहर्ता १२–अच्छावाकः १३–अग्नीत् १४–सुब्रह्मण्यः १५–ग्रावस्तुत् १६–उन्नेता। इमे यथावेदं गणचतुष्टयेन विभक्ता भवति। १–अध्वर्युगणः, अयं यजुर्वेदी भवति। स च यजुर्वेदेन विधीयमानानि दीक्षा-सोमक्रयण-वेदीनि मणि-दीक्षणीया-प्रायणीयादीष्टि-प्रवर्ग्योपसदग्नीषोमीयादि-पशुयाग-सोमाभिषव-ग्रह-चमसादिग्रहण -तदङ्गमन्त्रपाठ-होमादीनि कर्माणि सम्पादयति। याज्या-पुरोनुवाक्यादीनि प्रउग-निष्केवल्य-मरुत्वतीयप्रभृतीनि शस्त्राणि तदङ्गभूतानि प्रतिगरादीनि च ऋग्वेदेन विधीयमानानि कर्माणि ऋग्वेदीहोतृगणः २–करोति ३ -उद्गातृगणो हि यथावसरम् ऋचि गेयत्वेन विहितानि सामानि गायति, गणोऽयं सामवेदी भवति ४–ब्रह्मगणः कर्मस्वेतेषु बह्वङ्गकलापविस्तृतेषु न्यूनातिरेकतायाः सम्भावितया तदभावाय निरीक्षितारो भवन्ति। केचित् वेदत्रयमर्मज्ञा विद्वांसो ब्राह्मणात् एव ब्रह्मगण इत्युच्यन्ते।

एभिः षोडशभिः ऋत्विग्भिः मिलितैः यज्ञोऽयमेकदिनसाध्यस्तथापि अङ्गैः सह पञ्चभिर्दिनैः सोमयज्ञः सम्पाद्यते। सोमो नाम लताविशेषः, तां लतां कस्माच्चित् पुरुषात् क्रीत्वा, ततो रसं निष्काश्य, तेन च होमः क्रियते। तएव सोमयज्ञः ( सोमयागः ) इति नाम्नास्य यज्ञस्य प्रसिद्धिः।

सामवेदे "यज्ञा यज्ञा वो अग्नये" इति ऋषिगेयत्वेन विहितं साम अग्निष्टोम इत्युच्यते। एतदेवात्र क्रतावान्तिमं साम, न ततः सामान्तरमस्ति। अनेनैव साम्ना क्रतुरयं समाप्तिं गच्छति तेन अग्निष्टोमसंस्थाकः सोमयागोऽयं च अग्निष्टोम इति नाम्ना प्रख्यातः। सोमयज्ञस्य येन साम्ना समाप्तिर्भवति। तेनैव नाम्ना तस्य प्रसिद्धिरपि शास्त्रेषु दृश्यते। सोमयागस्य अग्निष्टोमः, उक्थः, षोडशी, अतिरात्रश्चेति चतस्रः संस्थाः भवन्ति ( संस्थाशब्दो च समाप्तिवचनः )। एतत्संख्या-चतुष्टयविशिष्टस्य सोमयागस्य ज्योतिष्टोम इति संज्ञा भवति एतासामेव संस्थानां क्वचिदावापोद्धापादिना अपरा अपि तिस्रः संस्थाः सम्पाद्यन्ते। १–अत्यग्निष्टोमः २–वाजपेयः ३–आप्तोर्यामश्चेति शम्। तदेवम्—

अग्निष्टोमः, अत्यग्निष्टोमः उक्थ्यः षोडशी, अतिरात्र-
वाजपेयः, आप्तोर्याम इति सप्त सोमसंस्थाः प्रसिध्यन्ति।

**अहीनादिभेदाः—**

विशेषधर्माननुसृत्य सोमयागः चतुष्प्रकारः—एकाहः, अहीनः, साद्यस्क्रः, सत्रं चेति। तत्र दीक्षोपसदामनेकदिनानुष्ठेयत्वेऽपि एकस्मिन्नेव दिने सोमयागानुष्ठानं

च स एकाहः। सोमयागस्य द्वित्रादिषु दिनेषु पुनःपुनरावृत्य अनुष्ठानं यत्र स अहीनः। तत्र द्विरात्रप्रभृतिदशरात्रपर्यन्ता अहीनाः। एकादशद्वादशरात्रावुभावहीन-सत्रोभयात्मकौ। द्वादशरात्रस्यैव उभयात्मकता केचिदभिप्रयन्ति। त्रयोदशरात्रप्रभृतयः सहस्रसंवत्सरपर्यन्ताः सोमयागाः सत्राण्युच्यन्ते। एकस्मिन्नेव दिने सङ्कल्पप्रभृत्य-वभृथान्तमनुष्ठानं यस्य स साद्यस्क्र इत्युच्यते।

सत्राण्यपि द्विविधानि—रात्रिसत्राणि, अयनसत्राणि चेति। तत्र द्वादशरात्र-प्रभृतिशतरात्रपर्यन्तानि रात्रिसत्राणि। ततः प्रभृत्ययनसत्राणि इति।

**सवनिरूपणम्**

एतदतिरिक्ताः सवा नाम केचन एकाहविशेषाः सोमयागाः तैत्तिरीयब्राह्मणे विहिताः। एकदिनसाध्यास्त इति कृत्वा ते एकाहपदव्यपदेशभाजो भवन्ति। ते च १–बृहस्पतिसवः २–वैश्यसवः ३–ब्राह्मणसवः ४–सोमसवः ५–पृथिविसवः ६–गोसवः ७–ओदनसवः ८–मरुत्स्तोमः ( पञ्चशारदीयः ) ९–अग्निष्टुत् १०–इन्द्र-स्तुत् ११–आप्तोर्यामः १२–विघन इति द्वादश। सूयते ईश्वरत्वेन ( यजमानः ) अभिषिच्यत एष्विति सवा इति आचार्यसायणः।

**चयनम्**

इष्टकाभिः सम्पाद्यमानो स्थण्डिलविशेषश्चयनम्, चयनं चितिः इति पर्यायः। एकस्याः इष्टकायाः उच्चतामनुलक्ष्य सर्वा अपीष्टकाः परस्परसंलग्नाः यावत् क्षेत्रं स्थाप्यते। एवं उच्चतायां समं क्षेत्रं यावत् प्रसृतं एकैकेष्टकाभिनिर्वृतम् चयनं एकः प्रस्तार इति कथ्यते। पञ्चभिः प्रस्तारे एकैकस्योपरि सञ्चितैः सिद्धं स्थण्डिलं अग्निस्थापनार्हं क्षेत्रतया ख्याप्यते। एतदेव पञ्चप्रस्तारात्मकं चयनमित्युच्यते।

**चयनभेदाः—**

चितिसमानार्थकं चयनं यथाकृति भवति तथैव तस्य नाम व्यपदिशन्ति। सुपर्णा ( गरुडा )कृतित्वे सुपर्णचितिः। द्रोणाकृतित्वे द्रोणचितिः। एवं तत्तदाकृति-वशेन नामानि भवन्ति। काश्चन स्वतन्त्रा अपि, सम्भूय च एताश्चितयः प्रसिद्ध्यन्ति। श्येनचितिः। कङ्कचितिः। अलजचितिः। प्रउगचितिः। उभयतः प्रउगचितिः। रथ्यचितिः। द्रोणचितिः। समूह्यपुरीष्यः। छन्दश्चितिः। परिचाय्य। श्मशानचितिः। तापश्चितिः।

अन्या क्षुद्रचितयो तैत्तिरीयशाखासु ज्ञेयाः।

**अग्न्याधेयम्**

अग्न्याधेयशब्दोऽयं व्याकरणदृष्ट्या आधानमेवाधेयमिति विग्रहे आङ्पूर्वकात् 'डुधाञ् धारणपोषणयोः' इति जुहोत्याद्युभयपदि धाधातोः "कृत्यल्युटो बहुलम्" ( ३।३।११३ ) इति सूत्रेण भावे यतिप्रत्यये कृते "ईद्यति ( ६।४।६५ )" इत्यनेन धाधातोराकारस्य ईकारे ततो गुणे सुबाद्युत्पत्तौ च सिद्ध्यति। ततः अग्नीनामाधेयामिति विग्रहे षष्ठीतत्पुरुषे अग्न्याधेयमिति पदं निष्पद्यते।

तथा च आधातुमर्हः ( योग्यः ) इत्यर्थे 'अर्हे कृत्यतृचश्च' ( ३।३।६९ )। इत्यनेन यत् प्रत्यये अथवा आधातुं शक्यः, इत्यर्थे "शकि लिङ्०[१] च" (३।३।१७२) सूत्रेण शक्यार्थे यत्प्रत्यये कृते आङ्० पूर्वकात् पूर्वोक्तात् धाधातोः, आधेय इति शब्दो निष्पद्यते, ततः, अग्निः आधेयः, यस्मिन् कर्मणि इति बहुव्रीहिसमासे यणादिकार्ये सुबुत्पत्तौ च अग्न्याधेयम् इति। अथ च—

अग्निः, आधीयते अनेन ( कर्मणा ) इति विग्रहे अग्न्युपपदात् धाधातोः 'कृत्यल्युटो बहुलम्' ( ३।३।११३ ) इत्यनेन करणे यत्प्रत्ययं विधाय अग्न्याधेयमिति पदं निष्पाद्यते।

अग्न्याधेयम् ( अग्न्याधानम्, आधानम्। वेति अनर्थान्तरवचनम् )
अग्न्याधेयममावास्यायाम् ( का० श्रौ० सू० ४।७।१ पृ० १५६ )
कृत्तिका—रोहिणी-मृगशिरः फलमीषु ( ४।७।२ )
हस्तो लाभकामस्य ( ४।७।३ )
चित्रा च क्षत्रियस्य ( ५।७।४ )
वसन्तो ब्राह्मण-ब्रह्मवर्चसकामयोः ( ४।७।५ )
ग्रीष्मः क्षत्रियश्रीकामयोः ( ४।७।६ )
वर्षा प्रजा-पशुकाम-वैश्यरथकृताम् ( ४।७।७ )
अग्न्यागमे कुर्वन्ति— ( ४।७।८ )
गार्हपत्यागारे निर्मथ्याभ्यादधाति ( ४।७।१४ )
वैश्याकुलाम्बरीषमहानसाद् वा ( ४।७।१५ )
उत्सृप्तेऽग्निमन्थनमनुत्सृप्तो एके ( ४।८।१९ )
उदिते तूच्छ्रम् ( ४।८।२० )

---

१. अर्हतीत्यर्हः, तद्योग्यः अर्हे कर्त्तारं वाच्ये गम्यमाने वा धातोः कृत्यतृचः प्रत्यया भवन्ति। चकारात्लिङ्० च। भवता खलु कन्या वोढा वह्या वहनीया। भवान् खलु कन्याया वोढा। भवान् खलु कन्यां वहेत्। भवान् एतदर्हेदिति, ( काशिका पृ० २५२। )

अपरेण गार्हपत्यायतनम् (४।८।२१)
स्थिते स्रुवे पुरस्तात् (४।८।२३)
नाते वरदानम् (४।८।२४)
दारुभिर्ज्वलन्तमादधाति० (४।९।१)

इत्यादिशास्त्रैर्विहिते विशिष्टे काले विशिष्टे देशे विशिष्टपुरुषेण विशिष्टैर्मन्त्रैर्विशिष्टेतिकर्तव्यतया च गार्हपत्याद्युत्पत्त्यर्थं यदरण्युत्पादितादीनामङ्गाराणां निधानं तदेव अग्न्याधेयमग्न्याधानमाधानं[1] वेति कथ्यते। इदं हि गार्हपत्याहवनीयदक्षिणाग्नीनां त्रयाणां सभ्यसहितानां चतुर्णां वा सभ्यावसथ्यसहितानां पञ्चानां वाग्नीनां सम्पादकम् एकं स्वतन्त्रं श्रौतं कर्मास्ति। नहि, अग्न्याधानम् कस्यचित् कर्मणोऽङ्गभूतः कश्चित् कर्मविशेषोस्ति।

सर्वेष्टिप्रकृतित्वेन प्राक्प्रतिपादिताया दर्शपूर्णमाष्टेः, विधास्यमानानामग्निहोत्रादिकर्मणां च चिताग्निसाध्यत्वाद् तद्धेतुभूतस्याग्न्यधेयस्य (अग्न्याधानस्य वा) स्वतन्त्रकर्मत्वं (स्वतन्त्रकर्मता) स्वयंसिद्धास्ति। अनेनैव चाधानेन श्रौतानामग्नीनां सिद्धिः सञ्जायते। जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति श्रुतिवचनाद्धि पञ्चविंशतेरुपरि चत्वारिंशतो वर्षेभ्यः पूर्वं यः पुरुषो भवेत् तेनैवाग्नयो धारणीया नान्यैरिति प्रथमः कल्पः। अग्न्याधाने सपत्नीकस्यैवाधिकारो नान्यस्य मृतपत्नीकस्य। अग्नयो हि यावज्जीवं धार्यन्ते। यदि केनचित् कारणेनात्र विच्छेदो भवति तदा पुनराधान (का० श्रौ० ४।११।) विधिनाग्नीनाधाय पूर्ववत् दर्शपूर्णमासादयोऽनुष्ठीयन्ते। यस्य पिता जीवति स चेदग्निमान् तदैव पुत्रः अग्न्याधानेऽधिकृतो भवति नान्यथेति शास्त्रस्य राद्धान्तः।

आधाने पूर्वाङ्गत्वेन सर्वप्रथममग्न्यागारनिर्माणादिकमेव भवति। अग्न्यगारं कुर्वन्ति (का० श्रौ० ४।७।८) इति शास्त्रात् गार्हपत्यगृहम् आवहनीयगृहमित्यगारद्वयं विहितं वर्तते। किन्त्वधुना तु एकस्मिन्नेव गृहे अग्निद्वयं स्थापयन्ति नाग्न्यगारद्वयं कुर्वन्ति स्थानाद्यसौकर्यात्। अगरद्वये कर्त्तव्ये आहवनीयगृहं तु प्राग्वंशमेव किन्त्वपरं गार्हपत्यागारं प्राग्वंशं वा विधातुं शक्यते शास्त्रात्। अग्नीनामुत्पत्तिक्रमेण गार्हपत्यागारस्य दक्षिणे, आहवनीयस्य पूर्वदिश्येव द्वारं विहितं वर्तते। “दक्षिण पूर्वे द्वारे” इति (का० श्रौ० ४।७।१०) वचनात् किन्तु गार्हपत्यागारे पूर्वद्वारं विना, आहवनीयागारे च पश्चिमद्वारं विना” आहवनीयं पर्युक्ष्योदधारां

१. इदमग्न्याधेयम् (अग्न्याधानं वा) (शतपथ० का० अ० ग० २।२।२ याव त् कात्यायन श्रौ० सू० ४।७-१२ काण्डिकायावत् विवृतमासी।

निनयत्यागार्हपत्यात् ( का० श्रौ० ४।१३।१६ तं च ४।१३।१७ ) ततो दक्षिणाग्निम् ( ४।१३।१८ ) इति धारानिनयनस्य "कूर्चे निधाय गार्हपत्यमवेक्षते होष्यन्नस्मिन् ( ४।१४।१६ ) इत्याहवनीयगृहात् गार्हपत्यावेक्षणस्य असम्भवात् गार्हपत्यागारे पूर्वद्वारम् आहवनीयागारे पश्चिमद्वारं चापि प्रयोजनवशाद् भवत्येव। अतो हि प्रत्येकमगारे द्वारद्वयं क्रियते। आहनीयगृहमध्ये वेदिराहवनीयखरं संयुक्ता भवति। गार्हपत्यगृहमध्ये गार्हपत्यखरो दक्षिणाग्निखरश्चेति खरद्वये भवति। एतत्साधनोपायः देवयाज्ञिकपद्धत्यादौ विवृतो द्रष्टव्यः। अगारनिर्माणं च सर्वे ऋत्विग्यजमानाः सम्भूयैव कुर्वन्ति सूत्रे ( अग्न्यागारे कुर्वन्ति ४।७।८ इत्यत्र ) बहुवचनादर्शनात्। ततो यजमानः, अशिखंवपनं विधाय स्नानान्तरं क्षौमयुगलं परिधत्ते पत्नी चापि। एतद् वस्त्रं च आधाने परिसमाप्ते, अध्वर्यवे देयं भवति" संस्थिते ध्वर्यवे देयो ( ४।७।१३ ) इति कात्यायनवचनात्।

तदनन्तरमध्यर्युपत्यागारे अथोक्षितकाष्ठाभ्यां—( प्रकृताभ्यामरणिभ्याम् ) अग्नि निर्मथ्य गार्हपत्यागारमध्ये गार्हपत्यखरे पञ्चभूसंस्कारपूर्वकं स्थापयति, अथवा वैश्यकुलात् अम्बरीषाद् भ्राष्ट्रात् ) महानसात् वा ( नित्यया कार्यं यद् गृहं भवति तस्माद् ) अग्निमाहृत्य स्थापयति शास्त्रे तथैव विहितत्वात् ( का० श्रौ० ४।७।१४-१५ )।

एतस्मिन् दिने यजमानो दिवा[1]श्नाति रात्रावपि यदि चेदिच्छा तदा अश्नाति। सूर्यास्तसमयसमीपे आहवनीयागारात् पूर्वस्यां दिश्युपविश्य उपग्रहो भूत्वा मन्त्रेण देवान् पितृंश्चाह्वयति –

देवाः पितरः पितरो देवा योहमस्मि स सन्यजे।
यस्याहमस्मि न तमन्तरयामि स्वं म इष्टं—स्वं श्रान्तं स्वं हुतमस्तु।

( का० श्रौ० सूत्रे ४।७।१७ )

देवानां पितृणां चैषामावाहनकाले तत्र पत्नी अपि सन्निधावुपविशति। तत उत्थाय

---

१ यदहरस्य श्वोग्न्याधेयं स्यात् दिवैवाश्नोयात्।
मनोह्वे देवामनुष्यस्याजानन्ति। ते स्येतच्छ्वोग्न्याधेयं विदुः तेस्य विश्वेदेवा गृहानागच्छन्ति। तेस्य गृहेष्ववसन्ति–स उपवसथः। ( शतप० २।१।४।१ पृ० १८ ) तन्नैवानवकल्पम्–यो मनुष्येष्वनश्नत्सु पूर्वोश्नीयात्, अथ किमु यो देवेष्वनश्नत्सु पूर्वोश्नीयात्। तस्मादुदिवैवाश्नीयात्।

२. नह्यनाहिताग्नेर्व्रतचर्यास्ति, मानुषे ह्येवेष भवति-यावदनाहिताग्निः तस्मादपि काममेव नक्तमश्नीयात्।
( शतप० २।१।४।२ पृ० १०८ )।

यजमानः, आहवनीयागारस्य पूर्वद्वारेण चोभावपि गार्हपत्यागारस्य दक्षिणद्वारेण प्रविशति प्रविश्य चोभावपि गार्हपत्यागारमध्ये स्थापितस्य अग्नेः पश्चात् प्राङ्मुखावुपविशतः । तयोर्मध्ये स्थापितस्य अग्नेः पश्चात् प्राङ्मुखावुपविशतः । तयोर्मध्ये पत्नी दक्षिणत उपविशति ।

उभयोरुपवेशनानन्तरमध्वर्युः, अरणी[1] आचारात् अहतवस्त्राच्छादिते विधाय यजमानाय समर्पयति । पत्नी तु यजमानहस्ताद् अधरारणिं गृहीत्वाऽङ्के निदधाति । यजमानोप्यऽङ्के उत्तरारणिं निदधाति । उभावप्यरण्यो पूजां कुरुतः । ततस्तिलकादिमाङ्गल्यमाशीर्वादाश्च भवन्ति । ततो आचम्य देवान् ब्राह्मणांश्च नमस्कृत्य पीठद्युपर्यरणीं निधत्तः ।

ततोस्तमयाद् आरभ्य सकलां रात्रिं स्वकीयं परकीयं वाजं गार्हपत्यागारे बध्नाति नवा बध्नाति । यदि बद्धौजः स्वकीयो भवति तदा प्रातःकर्मणि संस्थिते देयो भवति अग्नीध्रे । स्वकीयाभावे दानाभावः ।

ततोऽस्तमिते सूर्ये ध्वर्युः, रक्ते आनडुहे चर्माणि चत्वारि तण्डुलपात्राणि प्रक्षिपति तेषु प्रत्येकं प्रसृतित्रयपरिमिततण्डुलवद् भवति । तांस्तण्डुलान् स्थाल्यामारोप्य द्विःप्रक्षाल्य पूर्वतः स्थापितेग्नावधिश्रित्य चातुष्प्राश्यसंज्ञकमोदनं[2] पचति अध्वर्युः । पक्वं विधायोद्वास्य तस्य पक्वस्यौदनस्य मध्ये गर्तं विधाय गर्तैघृतमासिच्य तेन घृतेन अक्त आश्वत्थीः तिस्रः समिधः प्रादेशमात्रीर्हस्ते कृत्वोत्थाय तस्मिन्नग्नौ समिधाग्निम् ( ३।१ ) मन्त्रेण तासां समिधां मध्यादेकां समिधमादधाति तत उपविश्य 'सुसमिद्धाय०' (३।२) इति स्वरेण जयति तत उत्थाय 'तन्वासभिद्भि०' ( ३।३ ) मन्त्रेण द्वितीयां समिधमादधाति 'तत उपत्वाग्न०' इति ( ३।४ ) मन्त्रेण तृतीयां समिधमादधाति । ततो यजमानश्चतुर्णामप्यृत्विजां ब्रह्मादिक्रमेण पादौ तान् गन्धमाल्यादिभिरभ्यर्च्यान्नं संकल्प्य भोजयति । ततो यजमानः

१. अरणी च अश्वत्थशमीगर्भे भवतः अश्वत्थशमीगमरिणी प्रयच्छति ( ४।७।२० ) इतिकात्यायनवचनात् । शमीवृक्षमध्ये, उत्पन्नोश्वत्थः शमीगर्भ इत्युच्यते । शम्या गर्भः शमीगर्भः । अश्वत्थश्चासौ शमीगर्भश्चेत्यश्वत्थशमीगर्भ । तादृशस्य शमीगर्भस्य अश्वत्थस्य सम्बन्धिन्यो अरणीयजमानाय अध्वर्युः प्रयच्छति ।

२. चतुर्भिर्ऋत्विग्भिः प्राशितुं योग्यमोदनं चातुष्प्राश्यम् । इदमोदनं यत्र भवति तत्कर्मणोपि संज्ञा चातुष्प्राश्यमिति ।

ऋत्विग्भ्यो वरं[1] च ददाति ( एतावत्कृतस्य कर्मणो नाम चातुष्प्राश्यम्[2] इति चातुष्प्राश्यमिति संज्ञा, व्यवहारार्थं कर्मव्यापारव्यूहस्य संक्षेपेण ज्ञानार्थम्, वरदानानन्तरं यजमानो यावद्रात्रि जागरणं स्थापितस्याग्नेः सकलायां रात्रौ शकलैरवधारणम् ( गोमयपिण्डैर्वा ) करोति। किन्तु शकलैर्गोमयपिण्डैश्च समुच्चितैर्नाग्निधारणमुचितम्, कैश्चिदेकैरेवाग्निधारणमुचितम् । अस्यां रात्रौ दिवसपरिधृतवाससी क्षालयित्वा शोषणार्थं तद्विस्तारणं विधाय विरमेत् । तत उषसि स्नात्वा परिदधीत तद् वस्त्रम् । अथ चाध्वर्युर्विगतायां रात्रौ अरुणोदयकाले स्नात्वा तं स्थापितमग्निं स्वप्रयत्नेन उपशमयति, अथवा इममेवाग्निमन्वाहार्यवचनं करिष्यन् भवति तदैनमग्निं तत उत्सार्य दक्षिणाग्निस्थापनावसरं यावद् दक्षिणस्यां दिशि क्वचित् सुगुप्ते स्थाने धारयति नोपशमयति । ततो यजमानः पूर्णाहुतिहोमपर्यन्तं वाग्यतो भवति । अध्वर्युश्च गार्हपत्यस्वरे पञ्चभूसंस्कारान् विधाय पुनस्त्रिरुल्लिख्य यजमानेऽन्वारब्धे पुनरभ्युक्ष्य हिरण्यशकलं मध्ये निधाय ऊषान् मध्ये निपतति । तैरूषैर्वृत्तं खरं करोति । ऊषा नाम (क्षारमृत्तिका) तासां क्षारमृत्तिकानां मध्ये आखूत्कराणाम् ( आखुभिर्मूषिकैरुत्खातानाम् ) पांसूनामपि निवापं विधाय वृत्तं सम्पादनीयं भवति । खरस्य परितः पञ्चशतं शर्करा संलग्ना निधीयन्ते । एकेषां मतेन सम्भाराणामुपरि हिरण्यनिधानं क्रियते । गार्हपत्यखरमध्यादष्टासु प्रक्रमेषु पदप्रमाणेषु एकादशसु द्वादशसु वा मत्या वा आहवनीयस्य खरस्य मध्यं भवति । तत्रापि पूर्ववदेव पञ्चभूसंस्कारान् कृत्वा पुनरुल्लिख्य पूर्ववत् सर्वं विधीयते । एवमेव सर्वेषु खरेषु कार्यं क्रियते । गार्हपत्यखरो वृत्तः आहवनीयश्चतुरस्रो दक्षिणाग्निखरश्चार्धचन्द्राकारो भवति ।

खरसंस्कारानन्तरमुदितेऽनुदिते वा सूर्ये अग्निमन्थनं भवति । मन्थनकाले अश्वमपि प्राङ्मुखम् अग्नीन् स्थापयति ।

---

१. वरशब्देनात्र येभ्यो दीयते तदभीष्टं यजमानेन दातुं शक्यते हिरण्यवस्त्रधानादि तदुच्यते ।

२. चातुष्प्राश्यनामकमिदमवान्तरं कर्म, अग्न्याधानदिनात् पूर्वं संवत्सरम् अथवा यावत्प्रतिदिनमुक्तविधिना विधाय संवत्सरे पूर्णे, वर्षं यावत् समिधाधानसंस्कृतात्तस्मादग्नेः सकाशात् सर्वान् गार्हपत्याहवनीयदक्षिणाग्निसभ्यान् अग्नीन् आदध्यात् । अस्मिन् पक्षे संवत्सरस्यान्त्यरात्रौ अशनम् अजबन्धनं जागरणं वाग्बन्धनप्रैष इत्येतानि भवन्ति पूर्वेद्युर्विधानात् । अयं श्रौताग्नीनामरणीं विनैवोत्पादनप्रकारः । अस्मिन् पक्षे यदा गार्हपत्योऽनुगच्छति, तदा लौकिकाग्निमाहृत्य चातुष्प्राश्यं पक्त्वा चतुर्भ्यो दत्त्वा ततोऽग्निहोत्रार्थं विहरणं क्रियते, पुनः स्वयोनेराहरणमिति सम्प्रदायः ।

अरण्यो मन्थनेन जातमग्निं शुष्कगोमयचूर्णाकीर्णे कर्परे निधाय तं जातमग्निमभिलक्ष्य यजमानो मुखेन श्वासं प्रेरयति, फूत्करोति 'प्राणममृते दधे' इति मन्त्रेण।

ततः सुसमिद्धेऽग्नौ जातेऽग्नेर्ज्वालामूर्ध्वंश्वासेन मुखमध्ये गृह्णाति 'अमृतं प्राण आदधे' इति मन्त्रेण। ततोऽग्निं यज्ञीयदारुभिर्ज्वलन्तं कृत्वा गार्हपत्यखरे—'ॐ भूर्भुवः स्वः, आदित्यानां त्वा देवानां व्रतपते व्रतेनादधे' इति मन्त्रेण स्थापयति। अग्निस्थापने यजमानस्य प्रवरादिभेदेन मन्त्राभेदोऽपि भवति। उक्तो मन्त्रः सर्वसाधारणयजमानानां कृतेऽस्ति किन्तु, येषामङ्गिराः प्रवरो भवति तेषां कृते मन्त्रे आदित्यानां स्थाने 'अङ्गिरसं त्वा देवानाम्', येषां भृगुः प्रवरः तेषां कृते······ भृगूणां त्वा देवानाम् इत्येवमूहोऽपेक्षितो भवति। भृग्वङ्गिरो-व्यतिरिक्तानां कृते आदित्यानां त्वा देवानामित्येवमेव भवति।

वरुणस्य त्वेति क्षत्रियमात्रस्य मन्त्राः। 'इन्द्रस्य त्वा व्रतपते' इति राज्ञः क्षत्रियस्य। 'मनोष्ट्वा ग्रामण्यो व्रतपते०' इति वैश्यस्य। 'ऋभूणां त्वा देवानां व्रतपते०' इति रथकर्तो मन्त्रो भवति।

ततो ब्रह्मा रथन्तरनामकं साम गायति। यद्यपि सामगानमध्वर्योरेव युक्तम्, किन्तु अध्वर्योः कार्यान्तरे युक्तत्वाद् ब्रह्मा एवात्र साम गायति।

**गार्हपत्याधानानन्तरमाहवनीयाधानम्**

पूर्वोक्तं गार्हपत्याधानं विधाय, अपरिमितकाष्टकं त्र्यूनमिध्मं गृहीत्वा तस्य मूलं गार्हपत्ये प्रदीप्य प्रदीप्तस्येध्मस्याग्रं कर्परस्थासु बालुकासु आरोप्य तेनेध्मेन, आहवनीयस्योद्धरणं क्रियते (इध्मेनाहवनीयस्योद्धारणं तथा क्रियते यथा धूमो यजमानं गच्छेत्। व्यजनादिकस्यापि तदर्थमुपयोगः क्रियते)। कर्परस्थासु बालुकासु स्थापितस्य प्रदीप्तस्येध्मस्याहवनीयं प्रति नयनकाले अश्वश्च[1] पुरस्तादग्रतो नीयते यजमानश्च धूममनुगच्छति, गमनप्रारम्भे एव ब्रह्मा वामदेव्यं साम गायति। तत आहवनीयखरसमीपे गत्वा उपविश्य अश्वस्याग्रतः प्राङ्मुखं नीयमानस्य

१. देवान् ह वा अग्नी आधास्यमानास्तानसुररक्षसानि ररक्षुः, नाग्निर्जनिष्यते, नाग्नी आधास्यध्व इति। तद् यदरक्षंस्तस्माद्रक्षांसि॥ (शतप० २।१।४।१५ पृ० २४)
ततो देवा एतं वज्रं ददृशुर्यदश्वम्। तं पुरस्तादुदश्रयन्। तस्याभये नाष्ट्रे निवातेऽग्निरजायत। तस्माद्यत्राग्निं मन्थिष्यन्त्स्यात्—तदश्वमानेतवै ब्रूयात्। स पूर्वेणोपतिष्ठते, वज्रमेवैतदुच्छ्रयति, तस्याभये नाष्ट्रे निवाते ऽग्निर्जायते॥ (शतप० २।१।४।१६ पृ० २५)

आहवनीयस्थानाद् उत्तरतोऽवस्थितस्य प्राङ्मुखस्यैवाश्वस्य दक्षिणपूर्वपादेन अग्रिमदक्षिणपादेन ( खुरणेति घोटकविषये लोके टापेति ख्यातेन ) अग्निकोणस्थेन आहवनीयखरस्थान् हिरण्यादिसम्भारान् आक्रम्य तमश्वं प्राञ्चं नीत्वा प्रदक्षिणमावृत्य सम्मुखं स्थापयति, ब्रह्मा तदा बृहत्साम गायति। ततोऽध्वर्युः अग्निनाश्वस्य पदं[1] वारद्वयमुपस्पृश्य तृतीयेन उपस्पर्शनेनाग्निं स्थापयति, द्वितीयेन वा, प्रथमेन वा।

तत्रमन्त्रः—ॐ भूर्भुवः स्वः, आदित्यानां त्वा व्रतपते व्रतेनादधे।

तत्सन्निधावेवोपयमनीरुपनिवपति। ततोऽध्वर्युर्गार्हपत्यात् कर्परेणाग्निमादाय ज्वलन्तं दक्षिणाग्निखरे स्थापयति पूर्ववत् मन्त्रेण। ततो गार्हपत्यवदेव सभ्यस्य मन्थनं विधाय सभास्थाने ( शिष्याध्यापनस्थाने ) स्थापनं भवति। तथा सभ्याङ्गत्वाद् गां पणं कृत्वा द्यूतं च ऋत्विजः कुर्वन्ति। ततः प्रभृति सभ्यस्य धारणमुपस्थापनं च सदा भवति। पणीकृतां गां समविभागेन संकल्प्य ब्रह्मणे होत्रे अध्वर्यवे आग्नीध्रे च ददाति। ततः पूर्णाहुतिहोमः। अध्वर्युकर्तृकस्तूष्णीमग्निहोत्रहोमः।

पवमानादय इष्टयः। कर्मापवर्गान्ते च शतसंख्याकानां ब्राह्मणानां भोजनं च भवति।

इदमेव सङ्ग्रहेण अग्न्याधानस्याध्ययनम्।

**कारीरीष्टिः**

'कारीर्या वृष्टिकामो यजेत' इति शास्त्रविधेर्वृष्टिकामानां कारीरी नाम काचन इष्टिर्विधीयते। सेयमिष्टिः अग्निहोत्रिणा एव कर्तुं शक्यते। इयमिष्टिर्दिनद्वयेन साध्यते। यदि वृष्टिकामनया इयमिष्टिः प्रारब्धा, कर्मणः समाप्तेः पूर्वमेव च वृष्टिरायाति, तदेयमिष्टिः तस्मिन्नेव काले परिसमाप्यते। एवं चैतद् दृष्टान्तेन विगुणमपि काम्यं फलवद् भवतीति संभावनायामन्यकर्मसु तन्निरासः कर्काचार्येण कातीयश्रौतसूत्रे एवमुपस्थापितः—तथा च दृष्टम्। दृश्यते च विगुणेऽपि काम्ये फलम्। वृष्टिकामेष्टिः कारीरी द्व्यहकालतो या समाम्नाता शाखान्तरे, तां प्रकृत्य

---

स वै पूर्ववाट् स्यात्, सह्यरिमितं वीर्यमभिवर्द्धते। यदि पूर्ववाहं न विन्देत्, अपि य एव कश्चाश्वः स्यात्। यदश्वं न विन्देत्, अप्यनड्वानेव स्यात्। एष ह्येवानुडुहो बन्धुः॥ ( शतप० २।१।४।१७ )।

तं यत्र प्राञ्चं हरन्ति तत्पुरस्तादश्वं नयन्ति। तत्पुरस्तादेवैतन्नाष्टारक्षांस्यपघ्नन्नेति अथाभयेनानाष्ट्रेण हरन्ति॥ ( २।१।४।१८ शतप० )।

१. पदं ( पदमुद्राम् )।

श्रूयते—'यदि वर्षेत् तावत्येव जुहुयति' इति। यद्यपरिसमाप्तायामेवेष्ट्यां वृष्टिर्भवति, तस्मिन्नेव काले परिसमापयेत्। न द्व्यहकालतामाद्रियेत। यदि हि विगुणमपि काम्यं फलं न साधयेत्, कथं वृष्टिर्दृश्यते ? तस्माद्विगुणेऽपि काम्येऽस्ति फलमित्येवं प्राप्ते आह—

काम्यं कर्म सगुणमेवानुष्ठेयम्। 'न श्रुतिलक्षणत्वात्'। नैतदेवं विगुणेऽपि काम्ये फलमिति। सगुणं हि श्रुत्या लक्षितम्। 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति। ब्रह्मवर्चसं साध्यम्, यागश्च साधनम्। सेतिकर्त्तव्यताकं च साधनं साध्ये व्याप्रियते। तेनेतिकर्त्तव्यतासम्बन्धः। तस्मात् सगुणमेव काम्यं फलं साधयतीति नित्ये पुनः सर्वदा कर्त्तव्यत्वादवश्यम्भाविनि वैगुण्ये उपपदार्थः परिकल्प्यते—'यथा शक्नुयात्' इति। काम्येषु पुनरवश्यंकर्त्तव्यत्वाभावान्नैतत् परिकल्प्यते। प्रायश्चित्त-विधानं तर्हि किमर्थम् ? 'प्रायश्चित्तं तत्फलम्'। काम्यमपि कर्म प्रक्रान्तं परिसमा-पनीयमेव। फलाभावेऽपि प्रायश्चित्तानुष्ठानमर्थवत्। तत्रापि अन्यत्फलं दोष-परिहारः। तेनार्थवादवत् प्रायश्चितम्।

दृष्टे तत्परिमाणम्' अथ यद् वृष्टिदर्शनमुक्तम्, न तद्वृष्टिफलम्। ऋतुस्वभाव-जनितायाः वृष्टेस्तद्दर्शनम्, तत्र तावत्प्रमाणता ( तावत्कालप्रमाणता ) कर्मण उच्यत इति।

सेयं कारीरिष्टिः प्रयोगक्रमेण द्विधा वर्तते। एका सवितैषा कारीरी, द्वितीया च "अञ्जः सवपूर्वपदा कारीरी" "अञ्जः सवकारीरी" इति। तयोरनयोर्द्वयोरपि प्रयोगक्रमो बौधायनश्रौतसूत्रे स्पष्टमुक्तः। सम्प्रति जनाः वृष्ट्यर्थमेनां जिज्ञासन्ते। अप्रसिद्धा कात्यायनश्रौतसूत्रे अनुक्ता चेयमिष्टिरिति बौधायनश्रौतसूत्रवचनैः परिज्ञायते।

**सविशेषा कारीरिष्टिः**

कारीर्या यक्ष्यमाणो भवति स उपकल्पयते कृष्णं वासः कृष्णतूषं[1] कृष्णमश्वं कृष्णसंदानं[2] कृष्णाजिनं कृष्णमधु करीरसक्तून् कृष्णां[3] कुम्भीमामपक्वां कृष्णमन-स्त्रिगधं[4] कृष्णामविं कृष्णं वर्षाहूस्तम्बं[5] वैतसमिध्मार्बर्हिरिति अथ यजमानायतने कृष्णं वासः कृष्णतुषं निदधात्यथाग्रेणाहवनीयं कृष्णमश्वं कृष्णेन संदानेन संदित्यान्तर्वेदि कृष्णाजिने कृष्णमधु करीरसक्तून्निवपत्युत्करे कुम्भीं निमिनोत्यथाग्रेणोत्करं[6]

१. तुषम्–प्रावरणमुत्तरीयं वस्त्रम्।
२. सन्दानम्—रज्जुः।
३. करीरं वंशाङ्कुरः।
४. त्रिगधं = लम्बकाष्ठत्रयेणाधृतं शकटम्।
५. वर्षाहूस्तम्बम् = दूर्वा।
६. प्रतिष्ठापयति।

प्रागीषमनः स्थापयित्वा तस्याग्रेणोपस्तम्भनं[1] कृष्णामर्वि निग्रथ्नात्युत्तरेणाहवनीयं[2] कृष्णं वर्षाहुस्तम्बं वैतसमिध्मार्वाहिरिति निदधात्यथ यजमानः कृष्णं वासः कृष्णतूषं परिधत्ते ॥ ३७ ॥

मारुतमसि मरुतामोजो यां धारां भिन्धीति रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रति मीवति पुरोवातमेव जनयति वर्षस्यावरुद्ध्या इति ब्राह्मणमथैतमश्वम्-

संदानात्प्रमुच्योत्तरवर्ग्येणामिविक्षिपत्यमिक्रन्दस्तनय गर्भमाधा इति। स यदि विधुनुते, यदि मेहति, यदि शकृत्करोति वर्षिष्यतीत्येव वेद। अथ वातनामानि जुहोति पुरोवातो वर्षञ्जिन्वरावृत्स्वाहेत्यष्टौ। अथान्तर्वेदि कृष्णाजिने मधुषा करीरसक्तून् सयौति मान्दा वाशाः शुन्ध्यूरजिशः। ज्योतिष्मतीस्तमस्वरीरुन्दतीः सुफेनाः। मित्रभृतः क्षत्रभृतः सुराष्ट्र इह मावतेति। तिस्रः पिण्डीः कृत्वा समुच्चित्य कृष्णाजिनस्यान्तान्संदानेनोपनह्यति कृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोपनह्यामीति अथैना अनसः प्रथमायां गथायामाबध्नाति ॥ ३८ ॥

देवा वसव्या अग्ने सोम सूर्येति।

अहोरात्रे उपरमति द्वितीयस्यामाबध्नाति देवाः शर्मण्या मित्रावरुणार्यमन्निति अहोरात्रे एवोपरमति। तृतीयस्यामाबध्नाति देवाः सपीतयो यां नपादाशुहेमन्निति अहोरात्रे एवोपरमति।

अथ वै भवति यदि वर्षेत्तावत्येव होतव्यमिति, यदि नैव वर्षति यदि नोभयेनैव पिण्डीर्जुहोति सुचोपस्तीर्णाभिधारिता दिवा चित्तमः कृण्वन्त्या यं नरम् उदीरयथा मरुतः समुद्रत इति।

अथासां धूममन्वीक्षते सितवर्णा हरयः सुपर्णा इति यदि न वर्षेच्छ्वो भूते हविर्निर्वपेदग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेन्मारुत्त सप्तकपालं सौर्यमेककपालमिति तस्या एता भवन्ति त्वं त्या चिदच्युताग्ने भूरीणि तव जातवेदो दिवो त्तौ वृष्टिं मरुतोररीध्वं पिन्वन्त्ययो मरुतः सुदानव उदुत्यं चित्रमिति।

अथ पुरस्तात्स्विष्टकृतः सुवाहुतीरुप जुहोत्योर्वभृगुवच्छुचिमप्नवानवदाऽऽह्वय इति तिस्रोऽथैतां कुम्भीमद्भिः पूरयति-सृजा वृष्टिं दिव अद्भिः समुद्रं पृणेति सा यदि दीर्यते यदि भिद्यते वर्षिष्यतीत्येव वेद। अथाविमभिजुहोत्यब्जा असि प्रथमजा बलमसि समुद्रियमिति सा यदि विधूनुते यदि मेहति यदि शकृत्करोति वर्षिष्यतीत्येव वेद अथ वर्षाहूस्तम्बमभि जुहोति ॥ ३९ ॥

उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नमः। उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिमिति।

---

१. अवरोधनकाष्ठं लम्बमानम्।  २. 'लपेटना—हिन्दी।

अथैनमाहवनीयेऽनुप्रहरति हिरण्यकेशो रजसो विसार इति। अथास्य धूममन्वीक्षत आते सुपर्णा अभिनन्त एवैरिति। अथान्तर्वेदि तिष्ठन्कृष्णाजिनमवधूनोति ये देवा दिविभागा इत्यान्तादनुवाकस्य संतिष्ठते कारीरी।

**अयातोऽञ्जः सवकारीरी**

आग्नेयमष्टाकपालं निर्वपति तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागौ त। अथ हविषोऽग्निर्मूर्धा भुव इति त्रिष्टुभौ संयाज्ये याभिश्चैव पिण्डीरावध्नाति याभिश्च जुहोति याभ्यां च धूममन्वीक्षते ता स सिध्यन्ति संतिष्ठतेऽञ्जः सवकारीरी॥

एवं च वृष्टिकामनया इयं कारीरीष्टिः पूर्वं कृताभवद् भारतीयैः। परमधुना श्रौताग्निहोत्रियजमानानामभावात् प्रयोगज्ञानवतां वैरल्यान्नानुष्ठीयते।

**दर्शपूर्णमसेष्ट्या वृष्टिसिद्धिः**

यथा हि—वृष्टिकामनया कारीरी तथा नित्यायां दर्शपौर्णमासेष्ट्यामपि गुणविशेषेण वृष्टिः फलत्वेन निर्दिश्यते। तथा हि शतपथब्राह्मणे—(१।५।२।१८) स यदि वृष्टिकामः स्यात्। यदीष्ट्या वा यजेत दर्शपूर्णमासयोर्वै ब्रूयाद् वृष्टिकामो वा अस्मीति। ततोऽध्वर्युंर्ब्रूयात् तत्तरो वातं विद्युतं च मनसा ध्यायेत्त्वभ्राणि मनसा ध्यायेत्यग्नीध्मं स्तनयित्नुं च वर्षं च मनसा ध्यायेति होतारं सर्वाण्येतानि मनसा ध्यायेति ब्रह्माणं वर्षति हैव तत्र यत्रैवमृत्विजः संविदाना यज्ञेन चरन्ति॥ इति॥

**सत्रम्**

'सत्रम्' इति श्रौतयागीया कश्चनास्ति भेदः। स च श्रुतिप्रतिपादितपञ्चविधयज्ञविधासु सोमात्मकयज्ञविधायामन्तर्भवति। द्वादशसुत्याकः सोमयागो द्वादशाहः। सोऽपि सत्रात्मको हीनात्मकश्च भवति, द्वादशाहः सत्रमहीनश्चेति (का० १२।१।८) वचनात्। द्विरात्रप्रभृत्येकादशरात्रपर्यन्ताः सोमयागा अहीना उच्यन्ते। त्रयोदशरात्रप्रभृतिसहस्रसंवत्सरपर्यन्ताः सोमयागाः सत्राणि। द्वादशाहस्तूभयात्मको भवति। यस्य उत्पत्तिवाक्ये आस्धातुः उपोपसृष्ट इण्धातुर्वा श्रूयते तत् सत्रम्। यथा—द्वादशाहमृद्धिकामा उपेयुः, देवाह वै सत्रमासत इति। यजधातुघटितवाक्यविहितत्वमहीनत्वम्, द्वादशाहेन प्रजाकामं याजयेदिति। लक्षणान्तरमप्यस्त्यस्य 'उभयतोऽतिरात्रं सत्रमुपरिष्टादहीनस्य' इति (का० श्रौ० १२।१।६)। अर्थाद् यस्य समुदायस्य आदौ अन्ते च अतिरात्रसंस्थाकः सोमयागो भवति तत् सत्रम्। यस्य अन्ते स अहीन इति। सत्रेषु ये यजमानास्त एवर्त्विजो भवन्ति, यजमानाः सर्वे सत्रेषु (का० श्रौ० १२।१।७) इति वचनात्। तस्मात् 'षोडशर्त्विजो ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृपोतृप्रतिहर्त्रच्छावाकनेष्टाग्नीत् सुब्रह्मण्यग्रावस्तुदुन्नेतॄन्

वृणीते' ( का० श्रौ० ७।१।७ ) इति सोमयज्ञे विहितं ऋत्विग्वरणं सत्रात्मकेऽस्मिन् सोमयागे भौतिकं न भवति, सर्वेषामेव यजमानत्वात्।

'व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते।
देवानां द्रव्यहविषामृक्सामयजुषां तथा।
ऋत्विजां दक्षिणानां च संयोगो यज्ञ उच्यते॥

इत्यादिषु शास्त्रेषु यज्ञस्य पूर्णस्वरूपसम्पादकं विशिष्टमङ्गं दक्षिणा, किन्तु वचनबलात् सत्रेषु दक्षिणादानं न भवति। दक्षिणाया परिक्रयणार्थत्वेन स्वेनैव स्वस्य परिक्रयायोगात्। उक्तं च यथा—'अदक्षिणानि च स्वामियोगात्' ( का० श्रौ० १२।१।८ ) इति। सत्रजन्यं फलं सर्वेषामेव भवति, अतो दक्षिणा न दीयते। सत्राख्यो यागोऽयं समानकल्पनां सर्वेषामेकं फलं कामयमानानां पृथक् पृथक् फलं कामयमानानां वा सप्तदशप्रभृतिचतुर्विंशतिसंख्यानामाहिताग्नीनामिष्टप्रथमयज्ञानां यजमानानां भवति। न सप्तदशभ्यो न्यूनसंख्यानाम् नापि चतुर्विंशत्यधिकसंख्यानाम्। अत्र ऋत्विक्कर्तृकाद् ब्रह्मत्वादीन् षोडशपदार्थान् यजमाना एव स्वयं कुर्वन्ति, न ऋत्विजः। सप्तदशयजमानपक्षे एको गृहपतिर्भवति। इतरे षोडश ब्रह्मत्यादिकर्मकर्त्तारो भवन्ति। अष्टादशादिपक्षे षोडशभ्योऽतिरिक्ता गृहपतय एव भवन्ति, 'गृहपतिर्याजमानमयुक्तत्वात्' ( का० श्रौ० १२।१।९ ) इति निर्देशात्। अत्र यजमानं कर्म गृहपतिरेव करोति कर्मान्तरे तस्यायुक्तत्वात्। 'तस्माद्यदि बह्वो दीक्षेरन् गृहपतय एव व्रतमभ्युत्सिच्य प्रयच्छेयुः' ( ३।४।२।१५ ) अत्र यजमानदेयस्य व्रतस्य गृहपतिं प्रति दानदर्शनादपि गृहपतिरेव यजमानं करोतीति सिद्धं भवति। अत्र ( सत्रे ) सर्वे हि स्वं स्वं द्रव्यं समानभागम् एकीकृत्य तैर्द्रव्यैः यजन्ते दीक्षादियाजमानकार्यं सर्वेषां भवति। सत्राणि सहस्रसंवत्सरपर्यन्तान्यपि भवन्ति। द्वादशसंवत्सरं षट्त्रिंशत्संवत्सरं शतसंवत्सरं सहस्रसंवत्सरमिति चत्वारि सत्राणि महासत्राणि। तत्र द्वादशवत्सरं यत् क्रियते तत् प्रजापतिनामकं सत्रं षट्त्रिंशत्संवत्सरं शाक्यानामयननामकं सत्रं शतसंवत्सरं साध्यानामयननामकं सत्रम्, सहस्रसंवत्सरं विश्वसृजामयननामकं सत्रम्। महान् विस्तारोऽस्य सत्राख्ययागस्य। एतत् सत्रं स्वर्गलोककामनया शौनकादय ऋषय अनिमिषं क्षेत्रे नैमिषे नैमिषारण्ये कृतवन्तः। तस्योल्लेखो भागवते ( १।१।४ ) यथा—

नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः।
सत्रं स्वर्गाय लोकाय सहस्रसममासत॥ ( भा० १।१।४ )

अन्यत्रापि—

निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम् ।
आरभ्य सत्रं सोऽप्याह शक्रेण प्राग्वृतोऽस्मि भोः ॥ (भा० ९।१३।१)

इत्येवं सत्रचर्चा पुराणेषु अपि बहुत्र दृश्यते ।

**कुण्डपायिनामयनम्**

कुण्डपायिनामयननामकं संवत्सरसाध्यं सत्रम् । अत्र मासं यावद्दीक्षाः, ततो मासं यावदग्निहोत्रम्, ततो मासं यावद्दर्शपूर्णमासौ, ततो मासं यावद्वैश्वदेवं पर्व, ततो मासं वरुणप्रघासाः, ततो मासं साकमेधाः, ततो मासं शुनासीरीयम् । एवं मासषट्केऽतीते उत्तरान् षण्मासान् दृतिवातवतोरयनस्य पूर्वेण पक्षेणानुतिष्ठेत् । अत्र होत्रुद्गातृमैत्रावरुणप्रस्तोतृप्रतिप्रस्थातारः पञ्चर्त्विजो, नान्ये । तत्र होता अध्वर्यव–पोत्रीयहोत्राणि कुर्यात् । एवमुद्गाता नेष्टृच्छावाकीये, मैत्रावरुणो ब्रह्मत्वप्रतिहर्त्रे, प्रस्तोता ब्राह्मणाच्छंसिग्रावस्तोत्रीये, प्रतिप्रस्थाताग्नीध्रान्नेत्रे कुर्यात् । एवं पञ्चैव ऋत्विजो मिलित्वा षोडशानामृत्विजां कर्माणि सम्पादयन्ति ।

**राजसूय ज्ञः**

अथ राजसूयः–अत्राभिषिक्तक्षत्रियमात्रस्याधिकारः, नेतरयोर्ब्राह्मण-वैश्ययोः । अत्रानुमत्याद्या इष्टयः, मल्हाद्याः-पशुयागाः, पवित्राद्याः-सोमयागाश्च भवन्ति । ते च समप्रधाना एव, न परस्परमङ्गाङ्गिभावः । फाल्गुनशुक्लप्रतिपदि तस्यारम्भः । तत्र प्रथमं पवित्राख्यः सोमयागः । तत्र चतस्रो दीक्षास्तिस्र उपसद, एका सुत्या । अष्टदिनसाध्योऽयं यागः फाल्गुनशुक्लाष्टम्यां परिसमाप्यते । अस्य राजकर्तृकत्वात्तस्य सोमभक्षणनिषेधात् । न्यग्रोधस्य सफलाङ्कुरानादाय तस्य सोमेन साकं क्रयणादीन् संस्काराननुष्ठाय दध्ना सह सम्मेलय चमसोन्नयनकाले यजमान-चमसे तमेव रसं गृह्णीयात् । होमकाले च तं हुत्वा तमेव भक्षयेत् । इतरेषु चमसेषु सोमरसग्रहणं तस्यैव होमो भक्षणं च । अतोऽत्र फलचमस ( न्यग्रोधस्तन् ) निर्मितो रसो यजमानस्यैव, नेतरेषाम् । अवभृथान्ते तिस्रोऽनूबन्ध्याः । उदवसानीया स्थाने वैधातवीया ।

ततो दशम्यामनुमतीष्टिः, तत्राष्टाकपालः पुरोडाशो द्रव्यम् । एकादश्यामाग्ना-वैष्णवो द्वादशकपालः, द्वादश्यामग्नीषोमीय एकादशकपालः । त्रयोदश्यामैन्द्राग्नो द्वादशकपालः । चतुर्दश्यां यवाग्रयणं व्रीह्याग्रयणं चेति पञ्चेष्टयः । ततः फाल्गुन्यां पूर्णिमायां राजसूयान्तर्गतचातुर्मास्यप्रयोगः । तत्र प्रथमं पूर्णिमायां वैश्वदेवपर्व । ततश्चैत्रकृष्णप्रतिपत्प्रभृति चैत्रामान्तं प्रत्यहं पौर्णमासेष्टिप्रकृतिवत् । ततश्चैत्र-शुक्लप्रतिपत्प्रभृति चैत्रशुक्लपौर्णमासीपर्यन्तं प्रत्यहं दर्शेष्टिः प्रकृतिवत् पिण्डपितृयज्ञं

वर्जयित्वा। प्रतिपदि तु राजसूयेष्ट्यनन्तरं नित्यदर्शपूर्णमासेष्टिः, नित्यः पिण्डपितृयज्ञश्च। ततो वैशाख-ज्येष्ठाषाढ-मासेषु एवमेव कृष्णपक्षेषु पौर्णमासेष्टिः, शुक्लपक्षेषु दर्शेष्टिः। तत्र प्रतिपत्सु नित्येष्टयोऽपि कर्त्तव्याः। प्रतिवर्षं चातुर्मास्यान्ननुतिष्ठतो यजमानस्य तत्तत्पर्वकाले तानि-तानि नित्यानि पर्वाणि पूर्वमनुष्ठायैव अनन्तरं राजसूयिकानि पर्वाण्यनुष्ठेयानि।

आषाढ्यां पूर्णिमायां वरुणप्रघासाः। ततः प्रभृति कार्तिकीपर्यन्तं प्रतिदिनं पूर्ववदेव दर्शपूर्णमासेष्टीनामनुष्ठानम्। ततः कार्त्तिक्यां साकमेधाः। तेषां द्व्यहकालत्वात् चतुर्दश्यां राजसूयिकं दर्शं समाप्य अनीकवत्याद्यनुष्ठानम्। पूर्णिमायां त्र्यम्बकान्तं कृत्वा दर्शेष्ट्यारम्भः। ततो मार्गशीर्षकृष्णप्रतिपत्प्रभृति फाल्गुनामान्तं दर्शपौर्णमासेष्टीनामनुष्ठानं प्रतिदिनं पूर्ववत्।

ततः फाल्गुनकृष्णामायामेव शुनासीरीयं राजसूयिकम्। ततस्तस्मिन्नेव दिने पञ्चवातीयसंज्ञको होमः, इन्द्रतुरीयास्था इष्टिश्च। तत्र आग्नेयोऽष्टाकपालः, वारुणो यवमयश्चरुः, रौद्रो गावेधुकश्चरुः, वहिन्या दधि ऐन्द्रम् इति चत्वारि हवींषि। या गौः शकटेनोह्यते सा वहिनीत्युच्यते ततस्तस्मिन्नेव दिनेऽपामार्गहोमः।

ततः फाल्गुनशुक्लप्रतिपदि त्रिषंयुक्ताख्यषु त्रिषु कर्मसु प्रथमेष्टिस्त्रिषं युक्ता। तत्र वैष्णवस्त्रिकपालः प्रथमं हविः, ऐन्द्रावैष्णवश्चरुर्द्वितीयं हविः, वैष्णवश्चरुस्तृतीयम्।

ततश्चतुर्थ्यां द्विहविष्केष्टिः— तत्र वैश्वानरो द्वादशकपालः, वारुणो यावश्चरुः। ततस्तस्मिन्नेव दिने द्वादश रत्नहविःसंज्ञिका इष्टीः प्रारभेत्। चतुर्थीप्रभृति फाल्गुनशुक्लपूर्णिमान्तमेकैकस्मिन्दिवसे राजसम्बन्धिन एकैकस्य पुरुषस्य गृहे एकैकेष्टिरनुष्ठेया। तत्र सेनान्यो गृहे प्रथमा। तत्राग्नयेऽनीकतेऽष्टाकपालः पुरोडाशः। पुरोहितगृहे द्वितीया, तत्र बार्हस्पत्यश्चरुः। यजमानगृहे तृतीया, तत्र ऐन्द्रश्चरुः। महिष्यागृहे चतुर्थी, तत्रादित्यश्चरुः। अश्वसारथेर्गृहे पञ्चमी, तत्र वारुणो यावश्चरुः। ग्रामनेतुर्गृहे षष्ठी, तत्र मारुतः सप्तकपालः। मन्त्रिणो दूतस्य वा गृहे सप्तमी, तत्र सावित्रोऽष्टाकपालः। रथयोजयितुर्गृहे नवमी, तत्राश्विनौ द्विकपालः। परिवेषणकर्तुर्गृहे दशमी, तत्र पौष्णश्चरुः। द्यूतपतेर्हालिकस्य वा गृहात्तैरारण्यगोधूमै रौद्रश्चरुः, यजमानगृहे, इयमेकादशी। पतिपुत्ररहितायाः कस्याश्चित् स्त्रिया गृहे द्वादशी, तत्र निर्ऋतिदेवताको नखनिर्भिन्नः कृष्णव्रीहिश्चरुः।

ततस्तस्मिन्नेवाहनि सोमारौद्रश्चरुर्मैत्राबार्हस्पत्यश्चरुश्च। चैत्रकृष्णपक्षे किमपि कर्म न भवति। चैत्रशुक्लप्रतिपदि अभिषेचनीयदशपेयाख्योः सोमयागयोर्युगपदारम्भसङ्कल्पः। अत्र सोमयागः अष्टौ पवित्रः, अभिषेचनीयः, दशपेयः,

केशवपनीयः, व्युष्टिद्विरात्रः, क्षत्रस्य धृतिः, त्रिष्टोमः, अग्निष्टोम इति । तत्रारम्भे पवित्राख्यसोमयागः कृतः, अत्र च द्वौ, अवशिष्टा अग्रे भविष्यन्ति ।

अत्र सोमक्रयणम्, सोमेन सह न्यग्रोधस्तिमिक्रयणं च । देवयजनद्वयम् । पञ्चदिनसाध्यो पत्राभिषेचनीयः प्रकृतिवत् ।

तत्र विशेषः—अग्नीषोमीयपशुसन्निधौ देवसूहवींषि । तानि–द्वौ पुरोडाशौ, षट् चरव इत्यष्टी, तत्र विरूढव्रीहिसम्पाद्यः सवितृसत्यप्रसवदेवताकोऽष्टाकपालः आशुव्रीहि ( पक्षत्रयपक्वव्रीहि ) सम्पाद्योऽग्नये गृहपतयेऽष्टाकपालः, श्यामाकश्चरुः, सोमाय वनस्पतये, बृहस्पतये वाचे नैवारश्चरुः, इन्द्राय ज्येष्ठाय रक्तशालिचरुः, रुद्राय पशुपतये गावेधुकश्चरुः, मित्राय सत्याय स्वयं जातव्रीहिचरुः, वरुणाय धर्मपतये यावश्चरुरिति । ततो राज्ञोऽभिषेकाय सप्तदशप्रकाराणामुदकानामानयनम् । ततः सपरिकरो राजाभिषेकः । ततः शौनःशेपकथाश्रवणम् । ततो वाजपेयवद्रथाव-रोहणादि । तत औदुम्बर्यामासन्यामक्षदेवनार्थमुपवेशिताय यजमानायाक्षदानम् । ततो दैवतम् । देवनकर्तारश्च यजमानाः, ( राजा ) राजभ्राता, सूत्रः, ग्रामणीः, तद्भ्राता चेति पञ्च । ततः संसृपा हवींषि । तानि च षष्ठीमारभ्य षट्सु दिनेषु षट्, द्वादश्यामवशिष्टानि चत्वारि । ततो द्वादश्यामेव दशपेयस्य द्वितीयदिनादारभ्य चैत्र्यां सुत्या ( प्रथमदिनकर्म दीक्षादिकमभिषेचनीये कृतम् ) ।

**तत्र विशेषः—**

यजमानचमसेऽन्यग्रोधस्तिमिरसः, इतरत्र तु सोमः । एकैकं चमसं दश दश ब्राह्मणा भक्षयेयुः । तत्रैकैक ऋत्विक्, इतरे नवा प्रकृताः । यजमानचमसेऽपि ब्राह्मणा एव भक्षकर्तारः । ततो वैशाखे किमपि कर्म न भवति । वैशाखशुक्लपूर्णिमायां पञ्चबिलसंज्ञश्चरुः । तत्र पञ्च हवींषि । ततो द्वादश प्रयुत्रींषि इष्टयः । तानि मासान्तरालानीत्येकः पक्षः । अथवा प्रथमेष्टिमनुष्ठाय ततः शम्यां यावत्स्ववलं प्रास्येत्, यत्र सापतति तस्मिन्नेव स्थाने तदहरेव द्वितीया । एवमेव द्वादशापि इति द्वितीयः पक्षः ।

अथवा वैशाखपूर्णिमायामेव समानतन्त्रेण प्रातः षट्, अपराह्णे च षडिष्टय इति तृतीयः पक्षः । यज्ञद्वयेप्येकदिनसाध्यानीमानि । ततो ज्येष्ठामायां पशुबन्ध-द्वयम् । ततो ज्येष्ठशुक्लैकादशीमारभ्य पञ्चसु दिनेषु अतिरात्रसंस्थस्य केशवपनीया-ख्यसोमस्यानुष्ठानं प्रकृतिवत् । तत् आषाढकृष्णप्रतिपदि व्युष्टिद्विरात्रस्य सङ्कल्पः, तस्य चाहीनत्वात् षोडश दीक्षाः, द्वादशोपसदः, द्वे सुत्ये इति मासेन समाप्योऽयं क्रतुः । ततः श्रावणकृष्णप्रतिपदि क्षत्रस्य धृतिरारभ्यते सोऽपि मासापवर्गः पूर्ववत् । एवं भाद्रपदि त्रिष्टोमो मासापवर्गः पूर्ववत् । आश्विनकृष्णप्रतिपदि अग्निष्टोमो

मासापवर्गः पूर्ववत्। कार्तिक्यां राजसूयाङ्गभूता चरकसौत्रामणी त्रिपशुका। एवं राजसूयः परिसमाप्यते।

अत्र राजसूये यजमानपत्नी चण्डातकं वासः परिधत्ते। "अर्द्धोरुकं विलासिन्यां वासश्चण्डातकं विदुः" (२ अम० २।६।११६) इति। अत्र मिलित्वा ४४६ इष्टयः, द्वौ पशुयागौ, अष्टौ सोमयागा, सप्त दर्विहोमाः एते मिलित्वा राजसूयशब्दवाच्या भवन्ति। एते चात्र प्रधानयागाः, एतदतिरिक्तास्तत-स्सोमाङ्गभूता इष्टयः पशवः सौत्रामणी चानुष्ठेयाः। कालश्चास्य एकविंशतिर्मासाः। प्रयुग्घविषां मासानुष्ठानपक्षे त्रयस्त्रिंशन्मासा भवन्तीति राजसूयः।

**वाजपेययज्ञः**

अथ वाजपेयस्वरूपमुच्यते—स च ब्राह्मण-क्षत्रियमात्रकर्तृको न वैश्याधि-कारिकः। एतदतिरिक्ते सप्तसंस्थान्तर्गते वाजपेये तु वैश्योऽप्यधिकारी। कालश्चास्य शरदृतुः। स चायमुभयतो बृहस्पतिसवः। एवं च अश्विन्यां वाजपेयसुत्यानुष्ठानं, ततः पूर्वस्यां भाद्रपद्यां परस्यां कार्तिक्यां च एवं बृहस्पतिसवद्वयं कार्यम्। अयमेकः पक्षः।

(२) बृहस्पतिसवस्थानेऽग्निष्टोमसंस्थो ज्योतिष्टोमो भवतीति द्वितीयः पक्षः।

(३) अथवा वाजपेयस्य पूर्वं द्वादशसु शुक्लपक्षेषु द्वादशानां यागानामनुष्ठानम्, तत्रायुग्मेषु षट्सु शुक्लपक्षेषु अग्निष्टोमसंस्थो ज्योतिष्टोमः। युग्मेषु तु षट्सु क्रमशः पृष्ठ्यषडहसम्बन्धीन्यहानि क्रमात् रथन्तर-बृहत्-वैरूप-वैराज-शाक्वर-रैवताख्यसा-मषट्कसाध्यानि स्तोत्राणि एकैकस्मिन्नहनि। स्तोमश्च त्रिवृत्-पञ्चदश-सप्तदशै-कविंश-त्रिणव-त्रयस्त्रिंशरूपाः क्रमात् एकैकस्मिन्दिवसे। वाजपेयानन्तरं च युग्मेषु शुक्लपक्षेषु ज्योतिष्टोम एव। अयुग्मेषु षट्सु पूर्वानुष्ठानवैपरीत्येन पृष्ठ्यस्तोत्राणा-मनुष्ठानमिति तृतीयः पक्षः।

(४) अथवा वाजपेयस्य पुरस्तात् नवसु शुक्लपक्षेषु पौषीप्रभृतिषु भाद्रपद्यन्तेषु राजसूयान्तर्गतानां पवित्राभिषेचनीय-दशपेय-केशवपनीय-व्युष्टिद्विरात्रक्षत्रधृतित्रिष्टोम-ज्योतिष्टोमानां क्रमशोऽनुष्ठानम्। उपरि च तेषामेव प्रातिलोम्येनानुष्ठानमिति तुरीयः पक्षः।

एतेषां पश्वादिकं ग्रहग्रहणादिकं सर्वमपि स्वस्वप्रकरणाधीतं द्रष्टव्यम्।

कार्तिक्यामाश्वयुज्यां वामायां वाजपेयराजसूयस्य सुत्या कार्या। कार्तिकामायां सुत्यापक्षे आश्विनशुक्लदशम्यां मातृपूजादि। तदारभ्य सप्तदश-दीक्षाः। कार्तिककृष्णद्वादश्यां प्रायणीयेष्टिः, तस्मिन्नेव दिने सोमस्य क्रयः,

सुराद्रव्यस्यापि। सुरासाधनीभूतानि द्रव्याणि तत्साधनप्रकारश्च सौत्रामण्यामुक्तः सूत्रे। ततस्तिसृषु दिनेषु सायंप्रातःप्रवर्ग्योपसदौ। चतुदश्यामग्नीषोमीयः पशु, सप्तदशारत्निरेको यूपः। तस्य सप्तदशभिर्वासोभिर्वेष्टनम्। पूर्णिमायां पात्रयोजने षोडशिपात्रमधिकम्। सुराग्रहार्थानि सप्तदश पात्राणि। द्वाविंशतिः सवनीयाः पशवः। तत्र प्रथम आग्नेयः, द्वितीय ऐन्द्राग्नः, तृतीय ऐन्द्रः, चतुर्थी मेषी सारस्वती, पञ्चमी वशा गौः, तत्स्थाने अजा। ततः सप्तदशसंख्याकाः प्राजापत्याः पशवः श्यामाः शृङ्गहीनाः प्रजननसमर्थाः। आग्नेयादीनां पञ्चानां पशूनां वपायाः पृथक् पृथग्घोमो देवताभेदात्। प्राजापत्यानां तु सप्तदशानामपि सकृदेव वपाहोमः। सवनीयहविर्निर्वापकाले धानादिभिः पञ्चभिर्हविभिः सह सप्तदशशरावपरिमितस्य बार्हस्पत्यचरोरपि निर्वापः कर्त्तव्यः। दक्षिणादानान्ते मरुत्वतीयहोमानन्तरं माहेन्द्रग्रहात्पूर्वमाग्नीध्रीयसमीपेऽध्वर्यू रथस्योपरि द्वितीयं रथं स्थापयित्वा मन्त्रेण तमवतार्य तं धुरि गृहीत्वा वेदिसमीपमानीय तत्र चतुरोऽश्वान्नियोज्य, एवं षोडशसु रथेषु चतुरश्चतुरो श्वान्नियोजयेत्। तत आग्नीध्रस्य पश्चात् स्तम्भद्वयं पूर्वापरं निखाय तयोरुपरि सप्तदशशङ्कुसंयुक्तकाष्ठमेकं प्रागग्रं निधाय तेषु शङ्कुषु सप्तदशदुन्दुभीन् क्रमेणासजेत्। ततः सर्वान् दण्डेन वादयेत्। तत एकः क्षत्रियश्चात्वालोत्करयोरन्तरालादारभ्योदीच्यां दिशि सप्तदशसंख्यानिषून् निरस्येत्। तत्र प्रथममेकमिषुं बलात्प्रास्य यावति दूरे स पतितस्तत्र गत्वा तत्र स्थित्वा द्वितीयमिषुं प्रास्येत्। एवं रीत्या सप्तदशानामिषूणां प्रासनम्। सप्तदशस्येषोः पतनस्थानेऽवधिभूतामौदुम्बरीं शाखां निखनेत्। ततो यजमानो रथानारोहेत्। अन्ये च स्वं स्वं रथमारोहेयुः। ततः पूर्वनिखातामौदुम्बरीं शाखामुद्दिश्य सर्वे स्वान् स्वान् रथान् प्रधावयेयु। इदमेवाजिधावनमित्युच्यते। तेषां गमनसमये ब्रह्मा रथचक्रोपरि उपविश्य साम गायन्नास्ते। तत्र यथा यजमानोऽग्रतो गच्छेत्तथा गन्तव्यम्। ततः सर्वे तामौदुम्बरीं प्रदक्षिणीकृत्य देवयजनं प्रत्यागच्छेयुः। आगतेषु सर्वेषु ब्रह्मा रथचक्रादवरोहेत्। ततो दुन्दुभीमवतारयेत्। ततो यजमानः स्वीयं रथमध्वर्यवे दत्वाऽवशिष्टेषु यो यो यस्य रथस्तं तं तस्मै दद्यात्।

ततो मधुग्रह-सौरग्रहयोः प्रचारः। ततो यजमानः पत्नी च पूर्वं निष्पादितायां यूपोपरि शायितायामार्द्रकाष्ठनिर्मितैकविंशतिसंख्याकः सोपानयुक्तायां निःश्रेण्यामारोहतः। ततोऽधःस्थिता यजमानस्य पुत्रपौत्रादयः सप्तदशसंख्याकैरश्वत्थपर्णबद्धक्षारमृत्तिकापुटैर्यजमानं विध्येयुः। इदमेव स्वर्गारोहणमुच्यते।

तत एकमन्नं वर्जयित्वा ग्राम्याणामारण्यानां सर्वेषामन्नानां होमः सप्तभिर्मन्त्रैः सप्तवारम्। होमावशिष्टेनान्नेनासन्द्यामुपविष्टस्य यजमानस्याभिषेकः। ततः आज्याहुतयः। ततो वशाप्रचारादिः। अत्रोदयनीयास्थाने त्रैधातवीया भवति, इति वाजपेयः।

**अश्वमेधः**

अत्र विशेषावधेयमेतदस्ति—

मुख्या प्रारम्भतिथिः—फाल्गुनशुक्लाष्टमी नवमी वा।

अथवा ज्येष्ठस्य आषाढस्य वा शुक्लाष्टमी नवमी वा।

यज्ञस्य सहयोगिनः कार्यकर्तारः—

राजसिंहासनासीनानां राज्ञां शतं पुत्राः, शतं वीराः, क्षत्रियाः शतं शतं सूतपुत्राः शतं क्षत्तारः—४००।

प्रधानः पशुः—अश्वः

सहायकाः पशवः—मुख्याश्वस्य भ्रमणसहयोगिनः।

वृद्धाः शतमश्वाः अग्नीषोमीयाः एकविंशतिः पशवः। अन्येऽपि सौत्याः उत्तरपशवोऽष्टचत्वारिंशत् पशवः। अवभृथे एकविंशतिः।

अश्वस्य पर्यटनकालः—एकः संवत्सरः

दीक्षाः—सप्त। उपसदः द्वादश। सुत्याः तिस्रः।

फलम्—सर्वाभिलाषपूर्तिः, मोक्षो वा

विशेषः—चत्वारि अक्षीणि भवन्ति तादृशः सारमेयः (वृपा) तथा शूद्रपुरुषात् वैश्यायामुत्पन्नः पुत्रश्च अश्वसंस्कारेऽपेक्ष्येते। ब्राह्मणगायकद्वारा वीणायां यजमानस्य धर्मसम्बन्धिगुणगानं क्रियते। क्षत्रियगायकद्वारा च वीणायां तस्यैव शौर्यवर्णनं विधीयते। विभिन्नाभ्यो दिग्भ्यः विजयाहृतं धनं यदस्ति तस्य तृतीयोंऽशः सुत्यादिवसेषु दक्षिणात्वेन दातव्यः। अत्र रात्रौ स अखण्डहवनमपि भवति। यज्ञाङ्गत्वेन ब्रह्मतत्त्वचर्चापि क्रियते।

विशेषः—अश्वमेधयज्ञस्य विधानं ये न जानन्ति तादृशेभ्यो ब्राह्मणेभ्यः चतुःशतसंख्यकानामश्वरक्षकानां व्ययः पूर्णः सङ्ग्राह्य इत्यस्ति विधानम्। वर्द्धकेः (तक्ष्णः) गृहेऽपि पर्यटनेऽश्वस्तिष्ठति। एते विशेषाः जनसामान्यस्य परिचायनाय दत्ताः। विशेषविधिपरिचयस्त्वेवमस्ति।

यो नामैकच्छत्राधिपतिः सार्वभौमः, अर्थात्—समग्रस्य भूमण्डलस्य शासिता, यस्य वशेऽन्ये सामन्ता राजानो वर्तन्ते तेनैवायमनुष्ठेयो यज्ञः। न साधारणक्षत्रियस्य ब्राह्मणवैश्ययोर्वा तत्र अधिकारः। अयं मुख्यः कल्पः। असार्वभौमस्याप्यत्राधिकारं गौणतया मन्यन्ते सूत्रकाराः आपस्तम्बप्रभृतयः।

कात्यायनस्तु—राजसामान्याधिकारं राजसूयवदिमं यज्ञं कथयति। अतः "राजयज्ञः" इत्यप्यस्य व्यपदेशं पश्यामो ग्रन्थेषु। श्रौतकर्ममध्ये यागोऽयं प्रधानतममलभत स्थानम्। यद्यप्ययं सोमयागस्तथापि अत्र सवनीयपशुरश्वः। स च महोपकारेषु परिगणित इति कृत्वा तस्यैव नाम्ना यागोऽयं "अश्वमेधः" इति व्यवहारं भजते।

सर्वफलप्रदोऽयं क्रतुः। ब्रह्महत्यादिमहापातकनाशकः नैतादृशं कर्मान्तरमस्ति श्रेष्ठतमं श्रुतिस्मृतिपुराणादिषु इत्युक्तं सर्वत्र। ब्रह्महत्यादीनि महापातकानि कृत्वा यस्तदपनोदकं श्रुतिस्मृत्यादिविहितं न शक्नोति प्रायश्चितमनुष्ठातुं सोऽवभृथे अश्वमेधिके स्नात्वा तस्मान्महापापाद्विमुक्तो भवेत्। राज्ञस्तु सर्वलाभप्रदः, सर्वराजाजयचिह्नभूतोऽयमिति "सर्वस्याप्त्यै, सर्वस्यजित्यै, सर्वमेव तेनाप्नोति सर्वं जयति" इति श्रुतेरुद्घोषः।

यागस्यास्याङ्गभूता बहवो ग्राम्या आरण्याश्च पशवः। तेष्वश्व एव प्रथमः प्रधानभूतश्च। सोऽपि न साधारणः। किन्तु–यच्छरीरे पूर्वभागे कृष्णवर्णः, पश्चार्द्धे श्वेतः, ललाटे शकटाकारपुण्ड्रयुतः, गभीराकृतिश्च भवितुमर्हति। किं पूर्वमसकृत् पायितसोमरसाभ्यां मातापितृभ्यामश्वाभ्यां जातः जातमात्र एव जलान्तरपानात् पूर्वं पायितसोमरसो योऽश्वः तं यथावत् वर्धयित्वा रक्षेत्। सति समये तेनैव यागं कुर्यात्। तत्र कस्याश्चिददुष्टायां चैत्र्यां पौर्णमास्यां साग्रहणीं नामेष्टिं कृत्वा, तदनन्तरवैशाख्यां प्रजापतिदेवताकं पशुयागमनुष्ठाय, अनन्तरामावश्यायाम् ऋत्विज आहूय, अमावास्येष्टिमनुष्ठाय यत्राश्वमेधयागः कर्तव्यतया निर्धारितः स्थानं तद्गत्वा, वपनं कारयित्वा, अहतं नूत्नं वासः परिधाय तद् दिनं समग्रं मौनव्रतं धारयन्नासीत्। मध्ये प्राप्तं सायंप्रातःकालिकमग्निहोत्रं तु मन्त्रेण कुर्वीत्। ततो द्वितीयेऽहनि प्रातरुद्यन्तमादित्यं मन्त्रैरुपस्थाय, प्राग्वंशाख्यं यज्ञमण्डपं प्रविश्य, एकादशपूर्णाहुतीः अन्याश्च काञ्चनाहुतीः यजमानो जुहुयात्। ततः चतसृभ्यो दिग्भ्य आहृतासु अप्सु ब्रह्मौदनं पक्त्वा तत् महर्त्विग्भ्यः अध्वर्युब्रह्महोतुद्गातृभ्यो दत्वा तेन तानाशयित्वा समुचिते काले यागार्थं संकल्प्य, तं यज्ञियाश्वमानीय, तेन सह चतुरक्षं श्वानं च आनीय तडागह्रदादिमहाजले तावुभौ प्रवेश्य नीत्वा, यत्र शुनःपादा भूमिं न स्पृशन्ति तत्र सैध्रकेण ? मुसलेन श्वानं हत्वा तमश्वस्य पादानामधस्तात् प्रास्येत्। तत्रैव स्थितमश्वं चतसृषु दिक्षु अश्वस्य परितोऽवस्थिता महर्त्विजो राजपुरुषान्विताः प्रोक्षयेयुः।

प्रोक्षणप्रकारश्चैत्थम्–अश्वस्य पूर्वदेशे राजपुत्रशतेन परिवृतोऽध्वर्युः प्रोक्षेत्। राजपुत्राः ये अभिषिक्तक्षत्रियाणां पुत्राः स्वयमनभिषिक्ताः राज्यार्हाश्च तेषां शतेन सह प्रोक्षणं विहितम्। क्षत्रियाः सन्तोऽपि ये राज्यार्हाः शूराश्च तैः सहितो ब्रह्मा अश्वस्य दक्षिणभागे उत्तराभिमुखस्तिष्ठन् अश्वं प्रोक्षेत्। सारथीनां ग्रामनेतृणां मिलितानां शतेन ब्रह्मा अश्वस्य पश्चिमभागे प्राङ्मुखस्तिष्ठन् प्रोक्षेदश्वम्। क्षतृणां काशाभिकारिणां च मिलितानां शतेन सहोद्गाता उत्तरस्यां दिशि दक्षिणाभिमुखस्तिष्ठन् प्रोक्षेत्। प्रोक्षणकाले भूमौ पतितान् जलबिन्दूनभिमन्त्रयेत्।

ततोऽध्वर्युरेक एव सर्वदेवतासम्बन्धितया तमश्वं चतुर्षु दिग्विभागेषु उपरिष्टाच्च प्रोक्ष्य अश्वमुत्सृजेत् भूपरिभ्रमणार्थम्। तेन अश्वेन सह तद्रक्षणार्थं

चतुश्शता इषुधन्विनी वीरपुरुषा गच्छेयुः। स यावद् भूमिं यथेष्टं परिभ्रम्य एकस्मिन् वर्षे आगच्छेत् तावत् ते तं रक्षेयुः। यदि कश्चिद्राज्ञः शत्रुरश्वं स्पर्धया मध्ये पथं गृह्णीयात् तदा रक्षिणस्तेन सह युध्वा अश्वं परावर्त्यानयेयुः। यदि न शक्यते। पुनः पूर्ववत् तादृशमेव अश्वमेकमानीय पुनः प्रोक्ष्य रक्षिभिः सह विसृजेत्। यावदश्वः पुनः स्वस्थानं न परावर्तते तावद् यागो नानुष्ठातुं शक्यते। अतोऽयमश्वमेधो महाधनिनाऽपि सता नानतिबलेन अनुष्ठातुं शक्यते। किन्तु यस्सर्वान् स्वबलेनाभिभवितुं शक्नोति तेनैवायमनुष्ठेयः। श्रिया, यशसा, जयेन च य आत्मनः श्रेयं प्रेप्सति। स एवात्र अधिकारीति श्रुतयः स्मृतयश्च। एवं शतमश्वमेधान् यो राजा यथावदनुतिष्ठति स देवानां राजा "इन्द्रः" भवतीति पुराणान्युद्घोषयन्ति।

स यावत् परिभ्रम्य पुनः स्वस्थानमागच्छति तावत् यजमानः प्रतिदिनं विष्णुक्रमणसंज्ञकान् कांश्चन होमान् कुर्वन् सायंप्रातश्च वीणागाथिनौ ब्राह्मणराजन्यावाहूय ताभ्यां स्वयशो गापयेत्। तत्र प्रातः ( दिवा ) ब्राह्मणः राज्ञा कृतं दानयज्ञादिपुण्यकर्मवीणायां गायेत्। रात्रौ राजन्यस्तदीयशौर्यवीर्यबलपराक्रमादिकं गायेत् वीणायामेव। तदुभयं शृण्वन्नासीत् राजा। ततो हिरण्मय आसने आसीनो होत्रा शरभयानं पारिप्लवं शृणुयात्।

एवं प्रतिदिनं यावद्वत्सरं कुर्वन् यज्ञियाश्वस्य प्रत्यागमनं प्रतीक्षमाण आसीत्। तत्र अश्वभ्रमणकाले विविधा विचित्रतमाश्च होमा आहवनीयाग्निषु मध्येपथम् अश्वपदनिक्षेपस्थलादौ च कर्तव्यतया विहिताः। एवमश्वाङ्गानि मुखदन्तहनूरूपादीनि गमन-धावन क्रन्दन-ह्रेषण-शयना-वघ्राण-प्रभृतीन्यश्वचरितानि च देवतीकृत्य तेभ्यो होमाः कर्तव्याः।

अत्र सुत्यात्रयमित्युक्तम्। तत्र प्रथमदिनकर्तव्यायां सुत्यायां न कोऽपि विशेषोऽनुष्ठाने। द्वितीयदिने प्रातस्सवने बहिष्पवमानस्तोत्रार्थं गत्वा तत्रोद्गातारम् उद्गीथाख्यद्वितीयभक्तिगातारं निवार्य तस्य स्थाने अश्वमेव प्रकृतिमुद्गीथाय वृणुयात्। ता दृष्ट्वा स यज्ञियोऽश्वः यं शब्दं कुर्यात् स एव उद्गीथः। ततस्तस्मिन्नेव दिने प्रातस्सवनिकग्रहणाद्यनन्तरमश्वप्रभृतीनां पशूनां यागोऽनुष्ठेयः।

तत्र यूपा एकविंशतिसंख्याकाः भवेयुः। ते वेदेरुत्तरकोणादारभ्य दक्षिणकोणपर्यन्तं निखातव्याः, तत्र आहवनीयाग्नेः साक्षात् पूर्वभागे यो निखातव्यः स मध्यमः। स च राज्जुदालवृक्षनिर्मित एकविंशत्यरत्निपरिमाणो भवेत्। स एवाग्निष्ठशब्देनोच्यते। तत्रैवाश्वो नियोक्तव्यः। तस्य यूपस्य दक्षिणोत्तरयोः द्वयोः पार्श्वयोः पौतुद्रवः ( देवदारुः ) वृक्षनिर्मितौ द्वौ यूपौ भवतः। तदनन्तराः उत्तरभागे त्रयः दक्षिणभागे च त्रयः इत्याहत्य षड् विल्ववृक्षा निर्मिता यूपा भवन्ति। तदनन्तराः एकस्मिन् भागे त्रयः इति कृत्वा द्वयोः पार्श्वयोः षट् खादिरा भवन्ति। तेषामप्य-

नन्तरं एकैकस्य भागस्य त्रय इति षट्पलाशवृक्षनिर्मिता भवन्ति। एवमाहत्य एकविंशतिर्यूपा निखातव्याः। ततोऽश्वशरीरं समन्ततो रशनया आवेष्ट्य, तस्यां तत्स्थानमास्थितायां रज्ज्वां बन्धनीयाः तूपरादयः पशवस्त्रयोदश। तेऽश्वाङ्गे बध्यमानत्वात् पर्यङ्ग्या इत्युच्यन्ते।

तद्बन्धनप्रकारश्चेत्थम् - १—अश्वस्य ललाटे आग्नेयम्। २— तस्य पश्चाद्भागे पौष्णम्। ३—अश्वस्योपरिभागे ऐन्द्रापौष्णम्। ४—बाह्वोः दक्षिणोत्तरयोः आग्नेयौ कृष्णग्रीवौ। ५—त्वाष्ट्रौ सक्थ्योः ( ऊर्वाः )। ६—बार्हस्पत्यौ श्वेतपृष्ठौ पार्श्वे। ७—श्वेतवर्णोदरयुक्तं धातृदेवताकमश्वस्य अधोभागे। ८—श्वेतमजं पुच्छे। ९—सूर्यदेवताकं कृष्णवर्णमजं दक्षिणपार्श्वे। १०-यमदेवताकं कृष्णवर्णं वामपार्श्वे। विचित्रोऽयं प्रकारो नान्येषु यागेषु दृश्यते। अश्वमेधे सुपर्णचितिं निर्माय तदुपर्यग्निं प्रतिष्ठाप्यापि यागोऽनुष्ठातुं शक्यते। एकविंशतिसंख्याकेषु यूपेषु नियोज्यमानायां पशूनाम् आहत्य संख्या नवत्युतरं शतत्रयम् ( ३९० )। एते ग्राम्याः पशव उच्यन्ते। ग्रामेष्वेव वसन्तीति। तत्तद्यूपान्तरालेषु धारयितव्याः आरण्याः पशवः। अरण्यमात्रवासिनस्त आरण्या उच्यन्ते। संख्येयं पशूनां तैत्तिरीयशाखानुसारेण तु एकोनपञ्चाशदुत्तरशतत्रयं (३४९) ग्राम्याः पशवः। षष्ट्युत्तरं शतत्रयं ( ३६० ) आरण्याः पशवः। अत्र ग्राम्या पशवः तत्तद्गुणाकृतिविशिष्टा अजा एवोपदिष्टा बहुलमेया। जात्यान्तरस्यापि क्वचित्कल्पशो विधानमस्ति। ते यूपेष्वेव बन्धनीयाः। आरण्येषु पशुषु सिंहगजव्याघ्रश्वापदायः, नैके च पक्षविशेषाः, मीनमण्डूकसरीसृपादयश्च संगृहीताः। ते च तैस्तैः शाकुनिकैर्मृगयुभिश्च जालवागुरादिभिर्ग्राहयित्वा यूपान्तरालेष्ववस्थाप्याः। सर्वेषु पशुषु तिष्ठत्सु प्रत्येकं तेषामुपाकरणपर्यग्निकरणे कृत्वा आरण्यान् ततोऽपसार्य अरण्यं नीत्वा सिंहव्याघ्रादीन् तत्रोत्सृजेदुपायेन। ग्राम्याणां पशूनां तु संज्ञपनादि सर्वं पाशुकं कर्मानुष्ठाय तदनन्तरमेव तद्दिनीयसौमिकव्यापारानुष्ठानं कर्त्तव्यम्।

तत्र, अश्वसंज्ञपनार्थं घृताक्तं भूमौ प्रथममास्तीर्य, तदुपरिचर्ममयाच्छादनपटमास्तीर्य, तदुपरि सुवर्णफलकमास्तीर्य, तदुपर्यश्वं प्राक्शिरसम् उदीच्यपादं शाययित्वा संज्ञपयेत्। संज्ञपनं प्राणैर्वियोजनम्। ततः राज्ञः पत्न्यः महिषी, वावाता, परिवृक्ती इति तिस्रोऽपि अश्वं परियन्ति। ततो महिषी मृतस्याश्वस्य पार्श्वे शयानां तं गर्हेत ग्राम्यवचनैः। अनन्तरं तस्य विशसनं कृत्वा चन्द्राख्यं भेद उद्धरेत्, यतोऽश्वस्य वपा न विद्यते। ततः तूपरगोमृगयोर्वपे उद्धृत्य तत् त्रयमपि श्रपयित्वा प्रजापतये आश्रवणप्रत्याश्रवणे कृत्वा तद्धविस्त्रयमपि युगपत् प्रजापतये जुहुयात्। ततोऽश्वलोहितं स्विष्टकृदर्थं क्वचित् पात्रे निक्षिप्य, प्रजापतिदेवताकान् षड्ढोमान् हुत्वा, यजमानं व्याघ्रचर्मणि सिंहचर्मणि वा उपवेश्य ऋषभस्य चर्मणि निक्षिप्य

यजमानमभिषिञ्चेम्। ततो यजमानो मुखं विमृज्य, अध्वर्युणा प्राजापत्यासु षट्सु आहुतिषु क्रियमाणासु विष्णुक्रमान् क्रामेत्। ततो वैतसेकोऽश्वं निपात्य प्राक्शिरसं तदङ्गान्यवद्येत्। एवमश्वस्य पुरोमार्गे पश्चिमशिरसं तूपरं पश्चाद्भागे प्राक्शिरसं गोमृगं च प्राशयित्वा तत्तदङ्गानामवदानं कुर्यात्। अश्वस्य दक्षिणतः प्लक्षशाखा वितत्य तत्रेतरान् पशून् शाययित्वा हृद्याद्यङ्गानामुद्धरणं कृत्वा वेद्यामासाद्य, अश्वतूपरगोमृगानां निरवशेष होमं कृत्वा यत्र ते शायितास्तमपि कटमग्नौ प्रक्षिपेत्। तत आहवनीये आज्येन शरीरहोमान् हुत्वा, अश्वस्य लोहितेन स्विष्टकृतं हुत्वा, गोमृगस्य कण्ठेन अश्वशफेन आयस्मयेन कमण्डलुना च क्रमश आहुतित्रयं हुत्वा ततो यथाप्रकृति पत्नीसंयाजान्तमनुष्ठाय तदहर्विरमेत्।

तदनन्तरदिवसे सर्वस्तोममतिरात्रसंख्याकं सोमयागमनुतिष्ठेत्। इदं तृतीयं सुत्यादिनम्। तस्मिन् दिने सौमिकान् व्यापारान् यथा प्रकृत्यनुष्ठाय सवनीयपशू-पाकरणकाले एकादश पशून् प्राजापत्यान् वैश्वदेवान् वा पशुयागान् अन्ते प्राजापत्येमेकमेकं पशुयागं च कृत्वा ततो यथाप्रकृति कर्त्तव्यानि सर्वाणि कर्माण्यनुष्ठाय, अश्वभृथेष्ट्यनुष्ठानपूर्वकमवभृथस्नानं विधाय, अत्रिगोत्रोद्भवं, क्लेशरहितमस्तकं, सर्वदा स्वेदनशीलं, श्वेतकुष्ठं, पिंगलवर्णाक्षियुतं कंचन पुरुषमानीय तस्य शिरसि होमविशेषत्रयमनुष्ठाय तस्मै शतं सुवर्णानि अनोयुक्तानि दत्वा ग्रामं गच्छेत्। ग्रामीणा अपि पुरुषा सहैव गच्छेयुः। ततस्त्रैधातवीयेष्टिमुदवसानीयास्थाने कृत्वा तदनन्तरम् ऋतुपशुभिः संवत्सरं यावद् यजेत्। तत्तद्देवतानुष्ठीयग्रन्था ये विहिताः पशवस्ते ऋतुपशव उच्यन्ते।

**द्वादशाहक्रतुः**

अथेदानीं द्वादशाहक्रतोः स्वरूपं निरूप्यते। द्वादशाहो द्विविधः—अहीनात्मकः सत्रात्मकश्चेति। अहीनलक्षणस्य सत्रलक्षणस्य च सत्त्वात्। तथा हि—एकादियजमानकता, यजिधातुना विधानम्, दक्षिणाविधिः इत्यादीनि अहीनलक्षणानि। बहुकर्तृकत्वम्, आसते, उपयन्ति, आसीरन्, उपेयुर् इत्यासोपायिचोदनाचोदितत्वम्, सत्ररूपेण संस्तवः, उभयतोऽतिरात्रत्वम् इत्यादीनि सत्रलक्षणानि। तदुभयान्यप्यत्र दृश्यन्ते। अतोऽयं त्रयात्मकः। एकाहानामग्निष्टोमो यथा प्रकृतिभूतः एवमहीनानां सत्राणां चायं प्रकृतिभूतः संवत्सरादर्वाक्तनानाम्। तदुपरितनानां तु तेषां गवानयनं प्रकृतिभूतम्।

अत्र द्वादशाहे द्वादशदिनानि दीक्षाः। ततो द्वादशसु दिवसेषूपसदामनुष्ठानम्। अन्तिमोपसद्दिने आरम्भतश्चतुर्विंशे दिने उपसदनुष्ठानानन्तरम् अग्नीषोमीयपशुयागानुष्ठानम्। तस्मिन्नेव दिने महारात्रे बुद्ध्वा सोमाभिषवार्थक्रियाकलापानुष्ठानम्,

श्वोभूते बहिष्पवमानादिः तृतीयसवनसमाप्त्यन्तो व्यापारः, पुनर्यथावद्रात्रावभिषवक्रियानुबद्धकर्मकलाप इत्यादिद्वादशदिनपर्यन्तावर्तनीयक्रियाजातरूपाः द्वादश सुत्याः।

एवं षट्त्रिंशद्दिनानुष्ठेयोऽयं द्वादशाहाख्यः क्रतुः। सर्वान्ते एवावमृथेष्टिः, नैकैकसुत्यासमाप्तौ। तत्र द्वादशानामप्यह्नां संस्थाविशेषाः विशेषेण विहिताः। ते यथा—प्रथमदिनमतिरात्रसंस्थाकम्। द्वितीयमग्निष्टोमसंस्थाकम्। तत्र बहिष्पवमानाद्येषु द्वादशसु स्तोत्रेषु त्रिवृदेव स्तोमः। तृतीयदिनमुक्थ्यसंस्थाकं पञ्चदशस्तोमकम्। चतुर्थदिनमुक्थ्यसंस्थाकं सप्तदशस्तोमकम्। पञ्चमदिनं षोडशिसंस्थकमेकविंशस्तोमकम्। षष्ठदिनमुक्थ्यसंस्थाकं त्रिणव (सप्तविंशति) स्तोत्रकम्। सप्तमदिनमप्युक्थ्यसंस्थाकं त्रयस्त्रिंशस्तोमकम्। अष्टममहरुक्थ्यसंस्थाकं चतुर्विंशस्तोमकम्। नवममहरुक्थ्यसंस्थाकं चतुश्चत्वारिंशस्तोमकम्। दशममहरग्निष्टोमसंस्थाकं चतुर्विंशस्तोमकमितरेषु स्तोत्रेषु, अग्निष्टोमस्तोत्रे परं त्रयस्त्रिंशस्तोमकम्। एकादशदिनमग्निष्टोमसंस्थाकमष्टाचत्वारिंशस्तोमकम्। द्वादशमहरतिरात्रसंस्थाकम्। दशमदिनस्यातिरात्रसंस्थाकत्वं क्वचिच्छ्रुतम्। एवं रथन्तरम्, बृहत्, वैरूपम्, वैराजम्, शाक्वम्, रैवतम्, रथन्तरम्, बृहत्, रथन्तरम्, बृहत्, रथन्तरमिति क्रमेण होतुः पृष्ठे समानि। अत्र रथन्तर-बृहत्-वैरूप-वैराज-शाक्वर-रैवताख्यानां षण्णां साम्नां पृष्ठसामानीति व्यवहारः। द्वादशाहेऽस्मिन् द्वितीयादिसप्तमान्तानि दिनानि पृथगेकसङ्घीकृत्य तस्य च सङ्घस्य "षडहः" इति संज्ञा कृता श्रुत्यैव। तत्र षडहे पूर्वोक्तानि सामानि क्रमश एकैकस्मिन् दिने एकैकतया पृष्ठस्तोत्रे (होतुः पृष्ठे) गीयन्ते स्तोत्रसम्पादकतया। अत एवास्य षडहस्य "पृष्ठ्यः षडहः" इति संज्ञा।

**पुरुषमेधयज्ञः**

बहवो ह्येवं विदन्ति यत्—यथा अश्वमेधे यज्ञे अश्वस्य पशोः संज्ञपनं[1] विधाय तदीयानां जिह्वादीनामङ्गानां[2] होमैः स यज्ञः सम्पाद्यते, तथैव पुरुषमेध-

---

१. शस्त्राघातं विनैव प्राणवियोगानुकूलव्यापारविशेषैर्यज्ञार्थं पशोर्जीवोत्क्रामणं = पशुमारणमिति यावत्। संज्ञपनं नाम।

२. "हृदयं जिह्वां क्रोडम्" सव्यसक्थिपूर्वनडकं पार्श्वे यकृद् वृक्कौ गुदमध्यं दक्षिणा श्रौणिरिति जौहवानि"। (का० श्रौ० सू० ६।७।६ पृ० २२९॥

हृदयादीनि जुह्वामवदानयोग्यानि प्रधानयागसाधनानि। तत्र क्रोडं = वक्षभुजान्तरम्। सव्यस्य बाहोः प्रथमं नडकमंसादधो वर्तमानम्। पार्श्वे द्वे = सव्यं दक्षिणं चैकैकं त्रयोदश त्रयोदशवङ्क्रयात्मकम्। वङ्क्रयो = वक्राणि पार्श्वास्थीनि। वृक्कौ = कुक्षिस्थौ गोलकौ। एतानि जुह्वामवदेयानि। (सरला वृत्तिः)

'दक्षिणा सक्थिपूर्वनडकं गुदतृतीयाणिष्ठ सव्या श्रौणिरित्यौपभृतानि" (का० श्रौ० सू० ६।७।६ पृ० २०९)

यज्ञेऽपि पुरुषं पुरुषान् वा संज्ञाप्य ( मनुष्यान् प्राणवियोगानुकूलव्यापारविशेषैः शस्त्रघातं विनैव मारयित्वा ) तदीयैरङ्गैः पुरुषमेधयज्ञोऽयं सम्पाद्यत इति। एतद्धि बहवो ब्रुवते लिखन्ति च। पुरा वैदिकसभ्यतायां पुरुषमेधयज्ञे नरमेधयज्ञेति नाम्नापि लोके ख्याते यागेऽस्मिन् मनुष्या मार्यन्ते स्म, तदीयैरङ्गैर्होमोऽपि तत्र क्रियते स्म, इत्यनेके समुद्घोषयन्ति। कालवशाद् देशे तादृशानां वैदिककर्मणां वर्तमानायां ह्रासदशायामस्यां प्रयोगरूपेण तेषां दर्शनावसरस्यानुपलब्धेः, उद्घोषोऽयं भूयोभूयो जनचर्चाया विषयीभूय प्रायः प्रामाणिकतां भजमान इवास्ते। किन्तु भ्रममूलकोऽप्रामाणिकोऽयमुद्घोषः। यतो हि कस्मिंश्चिदपि वेदे कस्याञ्चिदपि वेदशाखायां कस्मिश्चिदपि श्रौतसूत्रे वा तथोक्ते पुरुषमेधयज्ञे पुरुषसंज्ञपनस्य ( मनुष्यमारणव्यापारविशेषस्य ) उल्लेखो नास्ति।

पुरुषमेधो हि—

'स एष यज्ञः पञ्चविधोऽग्नि[१]होत्रं, दर्शपूर्णमासौ[२] चातुर्मास्यानि[३] पशुः[४]

दक्षिणबाहोः प्रथमनडकमंसादधो वर्तमानं गुदस्य आन्त्रस्य योऽतिकृशस्तृतीयो भगः, सव्या कटिः, इति त्रीण्युपभृत्सम्बन्धीनि स्विष्टकृदवदानानि। एतानि अभञ्जन् पशुदेहात् पृथक् कृत्वा गृह्णीयात्। ( सरला वृत्तिः )।

"वर्षिष्ठमुपयड्भ्यः" ( का० श्रौ० सु० ६।७।८ पृ० २२९ )

यदतिस्थूलं गुदतृतीयं तदुपयड्ढौमार्थमवद्येत्। ( सरला वृत्तिः )॥

१. अग्न्युद्देश्येन सायंप्रातः क्रियमाणो होमविशेषोऽग्निहोत्रं नाम। तत्र पय एवात्र मुख्य होमद्रव्यमस्ति, आज्यादीनि, तु गौणानि सन्ति। अग्निहोत्रशब्दोऽयं तत्प्रख्यन्यायेन कर्मनामधेयमस्तीति पूर्वमीमांसायाम् ( १ ४।४ ) निर्णीतम्।

२. इमौ च यागविशेषौ यथाक्रमममायां पूर्णिमायां चोभौ भवतः। अमायां पूर्णिमायां चानुष्ठेयत्वात् कर्मणोरनयोर्दर्शपूर्णमासाविति संज्ञा। अत्रामायां त्रयः पूर्णिमायां च त्रयः, उभयत्र मिलित्वा षड्यागा भवन्ति। उभयत्र मिलित्वा यागषट्कर्माणि। इदमेकमेव कर्म दर्शपूर्णमासपदवाच्यमिति तत्त्वम्। अस्य दर्शपूर्णमासकर्मणः पूर्णं स्वरूपं ( का० श्रौ० सु० २–३ अध्याययोः ) विवृतमस्ति।

३. चतुर्षु मासेष्वनुष्ठेयत्वाच्चातुर्मास्यानीति कर्मविशेषाणां संज्ञा। अत्र वैश्वदेवम्, वरुणप्रघासाः, साकमेधाः, शुनासीरीयम् चेति चत्वारि पर्वाणि भवन्ति। अस्य पूर्णो विधिः का० श्रौ० सू० पञ्चमाध्याये द्रष्टव्यः।

४. पशोर्वपाहृदयजिह्वादीनां होमविशेषैः सम्पाद्यः यागविशेषः पशुयागः। पशुयागस्य सर्वेऽपि धर्मा निरूढपशुबन्धाख्ये पशुयागे ( का० श्रौ० सू० षष्ठेऽध्याये ) निर्दिष्टाः विकृताश्च सन्ति। तत्र प्रतिसंवत्सरं वर्षातो नित्यकर्तव्यत्वेनायं निरूढपशुयागो विहितोऽस्ति। किन्तु नायं यागः पशुयागानां प्रकृतिभूतः। श्रुत्यनुसारेण ज्योतिष्टोमाङ्गभूताग्नीषोमीयपशुयाग एव सर्वेषां पशुयागानां प्रकृतिरस्ति।

सोमः' इत्यत्र निर्दिष्टस्य सोमस्य ( सोमयज्ञस्य )[1] यानि विविधानि रूपाणि सन्ति, तेष्वेव रूपेष्वेको रूपविशेषोऽस्ति। यागोऽयं ( पुरुषमेधः ) अतिष्ठाकामनया क्रियते। भूतान्यतिक्रम्य यत् स्थानं तदेव अतिष्ठा, तस्या अतिष्ठायाः कामनायां सत्यां पुरुषमेधयज्ञोऽयमनुष्ठीयते, किन्तु तत्र सर्वे नाधिकृताः सन्ति। अस्य पुरुषमेधयागस्य ब्राह्मणराजन्या एवाधिकारिणौ नान्य इति। अतिष्ठाकामाभ्यां[2] ब्राह्मणराजन्याभ्यामेवानुष्ठातुं शक्यते। अत्र यागे त्रयोविंशतिदिनानि यावत् प्रतिदिनं दीक्षा[3] भवति, ततो द्वादशदिनानि यावत् प्रतिदिनमुपसदिष्टिः[4]। ततः परं पञ्चदिनानि यावत् प्रत्यहं सुत्या[5] भवति। एवं हि २३।१२।५=आहत्य चत्वारिंशद्दिनैरयं

---

१. अत्र कस्माच्चित् पुरुषात् सोमलतां क्रीत्वा ततो रसं निष्कास्य तेन रसेन होमः क्रियते, विभिन्नक्रियाकलापसहितोऽयं यागविशेषः सोमयज्ञेति नाम्ना समाख्यायते। अस्य ( सौमयागस्य ) १–अग्निष्टोमः, २–अत्यग्निष्टोमः, ३–उक्थः, ४–षेडशी, ५–वाजपेयः, ६–अतिरात्रः, ७–अप्तोर्याम इति सप्त संस्था मुख्याः सन्ति। एवमेव विभिन्ननामभिः ख्यताः सहस्रशः सोमयज्ञाः शास्त्रनिर्दिष्टा विराजन्तेतमाम्। तेषां सर्वेषां सोमयागानां प्रकृतिरग्निष्टोमसोमयाग एवास्ति।

२. "पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्य" ( का० श्रौ० सू० ३१।१।१ ) "ब्राह्मणराजन्योः" ( का० श्रौ० सू० २१।१।२, शतपथ १३।६।१ पृ० १२६ ) चापि द्रष्टव्यम्।

३. एकस्मिन् दिने कर्त्तव्यतया विहितो नियमविशेषो दीक्षाशब्देनोच्यन्ते। दीक्षास्वरूपविज्ञानार्थं ( का० श्रौ० सू० ) ७।२।५ तः ७।५।११ सू० पृ० २४७ तः २६० ) यावद् द्रष्टव्यम्।

४. "प्रणीताद्युपसत्" ( का० श्रौ० सू० ८।२।१६ ) इत्यत्र निर्दिष्टं प्रणीतादीति शब्दोपलक्षितवाचस्पतिसम्प्रैषमारभ्य क्रियमाण आज्यद्रव्यकाग्निसोमविष्णुप्रधानदेवताहोमप्रभृतिधर्मवदिष्टिविशेष उपसदिष्टिः। अस्याः स्वरूपं ( का० श्रौ० सूत्रे ८।१।१६–३६ पृ० २८०–२८३ ) स्थले द्रष्टव्यम्॥

५. यस्यां क्रियायां सोमलताऽभिषूयते सा सुत्या। अस्याः स्वरूपं ( का० श्रौ० सू० ९।१-५ ) कण्डिकासु विवृतमस्ति। सोमलता सम्प्रति भारतदेशे नोपलभ्यते। अतः तत्स्थाने सूतिकासंज्ञकं लतान्तरमेवाभिषूय कार्यं चाल्यते। सोमलतास्वरूपम्—

श्यामलाम्ला च निष्पत्रा क्षीरिणी त्वचि मांसला।
श्लेष्मला वमनी वल्ली सोमाख्या छागभोजनम्॥

इत्यादि आयुर्वेदशास्त्रेणावगन्तव्यं भवति। नेदानीमस्माकमक्षिगोचरेयं लता।

पुरुषमेधयज्ञः सम्पन्नो भवति। अत्र सर्वत्र सुत्यासु नियमेन यूपैकादशिनी[1], पत्नीयूपः[2], उपशययूपश्च[3] भवति। एकादशिनाः पशवोऽपि नियमत एव विहिताः सन्ति। उक्तानि पञ्च सुत्यादिनान्येव पुरुषमेधयज्ञस्य प्रधानदिनानि सन्ति। एषु पञ्चसु सुत्यादिनेसु प्रथमे पञ्चमे च दिनेऽग्निष्टोमसंस्थाकः सोमयागः, द्वितीये चतुर्थे च दिने उक्थसंस्थाकः सोमयागः, तृतीये दिनेऽतिरात्रसंस्थाकः सोमयागश्चानुष्ठीयते। यथाह-भगवान् कात्यायनाचार्यः—

"अग्निष्टोमावन्तरेणातिरात्रः[4]" उक्थपक्षः ( का० श्रौ० सू० २१।१।३ )।

एवं हि प्रथमदिने अग्निष्टोम[5]नामकः सोमयागः, द्वितीयदिने उक्थ[6]नामकः

---

१. विशेषविधिना सम्पादितः काष्ठस्तम्भविशेषो यूपो नाम। अस्य स्वरूपादिज्ञानार्थं ( का० श्रौ० सू० ६।१।३–३२ तथा ६।२।७–२१ एवं ६।३।१–१६ पृ० २१२–२२० तथा का० श्रौ० सू० ८।८।१–२७ पृ० ३०८–३१२ ) द्रष्टव्यम्। प्रधानपशूनां बन्धनार्थं य एकादश यूपा भवन्ति ते सम्भूय "यूपैकादशिनी" इतिनाम्ना व्यपदिश्यन्ते। तत्र प्रतियूपमेकैकः पशुर्बद्धो भवति, एवं सम्भूय पशवोऽप्येकादशिन्यां भवन्ति। ते चापि "ऐकादशिनाः" इत्युच्यन्ते।

२. शालाद्वार्येव निखातः पञ्चहस्तः पात्नीवतपशुबन्धनार्थो यूपः पत्नीयूप इत्युच्यते ( का० श्रौ० सू० ८।८।३७ पृ० ३१४ स्थले द्रष्टव्यं स्वरूपम् )। अत्र पत्नीयूपे त्वाष्ट्रः पशुर्बध्यते, "त्वाष्ट्रः पशुः पत्नीयूपे" ( का० श्रौ० सू० ८।६।१ पृ० ११४ ) इति वचनात्।

३. यूपैकादशिन्या सह द्वादशो यूपः सकलो तष्टः, अतिशयेन महतो दक्षिणयूपाद्दक्षिणं भूमौ स्थाप्यते न च निखन्यते, स एव यूप उपशययूप इत्युच्यते। अस्य प्रयोजनं च आपस्तम्बश्रौतसूत्रे—"आरण्यं पशुमाखुं वोपशये निर्दिशेत्" ( आप० श्रौ० सू० १४।७ ) इत्युक्तम्। ( का० श्रौ० सू० ८।८।२२ टीका पृ० ३१२ )।

४. ( अग्निष्टोमो, अन्तरेण ) अग्निष्टोमयोर्मध्ये ( उक्थपक्षः ) उक्थ्यौ पक्षाविवोभयतो वर्तमानौ भवतो यस्यातिरात्रस्य स उक्थ्यपक्षः ( अतिरात्रः ) अतिरात्रसंज्ञको यागो विधेय इति सूत्रार्थः ( का० श्रौ० सू० २१।१।३ ) ( सरलावृत्तिः )।

५. प्रगीत्यधिकरणीभूतकं संख्यावाची स्तोमशब्दः। स चात्र लक्षणया तत्सम्बद्धयज्ञायज्ञियाख्यस्तोत्रविशेषकरणकस्तुतिपरो ज्ञेयः। अग्नेः स्तोमः स्तुतिर्यस्मिन् सोऽग्निष्टोमः। अग्निस्तुतिसम्पादकेन यज्ञायज्ञियनामकेन स्तोत्रेण संस्था ( समाप्तिः ) यस्य सोग्निष्टोमः। अयं च यज्ञः 'स प्रथमः सोमानाम्' ( सत्याषाढ श्री ७।१ ) इति सत्रात् प्रथमः सोमयागः सर्वसोमयागप्रकृतिः।

६. उत्थाप्यते सोमोऽनेनेत्युक्थ्यः। उक्थ्यनामकानि ( अग्निष्टोमेभ्यो द्वादशउपरितनानि त्रीणि ) स्तोत्राणि यस्मिन् यज्ञे स उक्थ्यः। तेनोक्थ्संस्थाके सोमयागेऽत्र पञ्चदशस्तोत्राणि तावन्त्येव शस्त्राणि भवन्ति।

[सोमयागः, तृतीयदिनेऽतिरात्र[1]नामकः सोमयागः, चतुर्थदिने पुनरुक्थनामकः सोमयागः, पञ्चमदिने च पुनरग्निष्टोमनामकः सोमयागो भवति। पशवोऽप्येकादशैकादश[2] प्रतिदिनं भवन्ति, ते चैकैकरूपेण प्रतियूपं यथा स्युस्तथा नियुज्यन्ते। क्षत्रियकर्तृके पुरुषमेधयागे दक्षिणा चाश्वमेधवद् भवति। अश्वमेधयागे दक्षिणात्वेन पूर्वदिग्विजयसमये प्राचीदिक्तो यद् धनवाप्तं भवति, तत् त्रेधा विभज्यते। एको भागो होत्रे दीयते। तथैव याम्यदिग्लब्धधनस्य तृतीयांशो ब्रह्मणे, प्रतीचीदिगवाप्तधनस्य तृतीयांशोऽध्वर्यवे, उत्तरादिग् लब्धधनस्य तृतीयांश उद्गात्रे च प्रदीयते। अवशिष्टं च यद् अंशद्वयं तत् तथैवानन्तरयोः सुत्यादिवसयोस्तेभ्य एव होत्रादिभ्यो यथापूर्वं प्रदीयते। तत्र ( अश्वमेधे ) अह्नां त्रिसंख्यत्वात् प्रतिदिनं तृतीयस्तृतीयोंशो दक्षिणात्वेनोक्तोऽस्ति, किन्त्वत्र ( पुरुषमेधयज्ञे ) सुत्यादिनानां संख्या पञ्च अस्ति, अतः ( अह्नां पञ्चसंख्याकत्वात् ) प्राच्यादिदिगुत्पन्नस्य द्रव्यस्य पञ्चभागान् विधाय प्रतिदिनं पञ्चम एव भागो दक्षिणात्वेन तथैव यथाक्रमं प्रदीयते, तथा तत्र ( अश्वमेधे ) भूमिपुरुषब्राह्मणस्वदक्षिणा न दीयते। तादृशी दक्षिणा तत्र निषिद्धास्ति[3]। परमत्र ( पुरुषमेधे ) तु दक्षिणात्वेन पुरुषा अपि प्रदीयन्ते।

"सपुरुषमश्वमेधवद्दक्षिणा' ( का० श्रौ० सू० २१।१।१४ पृ० १९६ ) इति वचनात्। ब्राह्मणकर्तृके पुरुषमेधे तु सर्वस्वमेव दक्षिणा भवति। पुरुषमेधस्य कर्त्रा ब्राह्मणेन सर्वस्वमेव दक्षिणात्वेन दातव्यमित्येवं विधिरस्ति। अतः पुरुषमेधे ब्राह्मणेन सर्वस्वं तथैव विभज्य प्रदीयते। 'सर्वस्वं ब्राह्मणस्य' ( का० श्रौ० सू० २१।१।१५ ) इति वचनात्। अत्र ( पुरुषमेधे ) सुत्यायास्तृतीये दिने।

**अतिरात्रसंस्थे दिवसे**

यूपैकादशिन्यां प्रतियूपं त्वेकैकम् ऐकादशिनं पशुं, मध्यमे च पुनर्यूपे ब्राह्मणादीन् ( ब्रह्मणे ब्राह्मणं० वा सं० ३०।५ तः। प्रकामोद्यायोपसदनम्० ३०।९ इत्यन्तान्

१. उक्तोक्थ्यस्तोत्रानन्तरं यत्र षोडश्याख्यं स्तोत्रं क्रियते, स षोडशिसंस्थाकः सोमयागः, यत्र च षोडशिस्तोत्रानन्तरमतिरात्रसंज्ञकानि सामानि गीयन्तेऽसोऽतिरात्रसंस्थाकः सोमयागः कथ्यते।

२. 'ऐकादशिनाः सुत्यासु पशवो भवन्ति' ( शत० ३।९।१ पृ० १२८ ) इति श्रुतेः।

३. विजयमध्याद्धोतुः प्राची दिग् दक्षिणा ब्रह्मणोऽध्वर्योः प्रतीच्युद्गातुरुदीची तृतीयतृतीयमन्वहं ददाति, भूमिपुरुषब्राह्मणस्ववर्जम्' ( का० श्रौ० सू० २०।४।२७पृ० १८७ ) अश्वमेधे यथा भगवान् रामोऽपि—

होत्रेऽददात् दिशं प्राचीं ब्रह्मणे दक्षिणां प्रभुः।
अध्वर्यवे प्रतीचीं च उदीचीं सामगाय सः॥ ( भा० ९।११।२ )

उक्तान्) अष्टाचत्वारिंशत्संख्याकान् पुरुषांश्च नियुज्य इतरेषु दशसु यूपेष्वपि एकादशैकादश पुरुषास्तथा पुनश्च द्वितीये यूपे षड्विंशतिः पुरुषा नियुज्यन्ते, तेन मिलित्वा सर्वे ४८। (११ १०=११०)। २६=१८४ चतुरशीत्युत्तरशतं पुरुषा यूपेषु निबद्धा भवन्ति। एते च यूपेषु निबद्धा चतुरशीत्युत्तरशतं पुरुषा एव 'पुरुषमेधः' इति यज्ञविशेषवाचकसंज्ञायाः प्रवृत्तिनिमित्तभूताः सन्तिः, किन्त्वेतेषां तत्र (पुरुषमेधयज्ञे) संज्ञपनं शस्त्राघातं विना प्राणवियोगानुकूलव्यापारविशेषैर्मारणमिति यावत्) न भवति, प्रत्युत यूपेषु निबद्धान् तान् पुरुषान् ब्रह्मा पुरुषेण नारायणेन[1] अर्थात् नारायणपुरुषदृष्टेन षोडशर्चेन सहस्रशीर्षा (शु० य० वा० सं० ३१।१-१६) इत्यनुवाकेन पुरुषसूक्तेतिनाम्ना ख्यातेन मन्त्रसमूहेन नारायणात्मना भावयित्वा स्तौति। परमपुरुषनारायणात्मनाध्यानसमय एवोक्तपुरुषसूक्तमन्त्रान् ब्रह्मा पठति। पुरुषसूक्तमिदं तदर्थमेव प्रवृत्तमस्ति। ब्रह्मणे ब्राह्मणं (वा० सं० ३०।५-२२) इत्यत्र प्रोक्ता ब्राह्मणादयो ये पशवः पुरुषमेधरूपस्य परमात्मनोऽवयवाः सन्ति, तेषामवयवी पुरुषो यो ह्यव्यक्तमहदादिविलक्षणश्चेतनः पुरुषान्न परं किञ्चित् इत्यादिश्रुतिषु प्रसिद्धः सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराजाख्योऽस्ति, स एव परमपुरुषो नारायणोऽत्र सूक्ते स्तूयते।

ततः सर्वान् पुरुषान् जीवत एव उत्सृजति - तत्पर्यग्निकृताः पशवो बभूवुरसंज्ञप्ताः" (शत० १३।६।२।१२ पृ० १३४) इति श्रुतेः। पुरुषोत्सर्गानन्तरं यासां देवतानां कृते पुरुषा निबद्धा भवन्ति, ताभ्यः सर्वाभ्यो देवताभ्य आज्यस्यैकैकाहुतिर्दीयते।[2]

---

१. आचार्याय ददौ शेषा यावती भूस्तदन्तरा।
मन्यमान इदं कृत्स्नं ब्राह्मणोर्हति निःस्पृहः॥ (भाग० ९।११।३)

नियुक्तान् पुरुषान् ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्येतेन षोडशर्चेन षोडशकलं वा इदं सर्वम्पुरुषमेध सर्वस्याप्त्यै सर्वस्यावरुद्धया इत्थमसीत्युपस्तौत्येवैनमेतन्महयत्येवाथो यथैव तथैनमेतदाह तत्पर्यग्निकृताः पशवो बभूवुरसंज्ञप्ताः ॥ (शत० १३।६।२।१२ पृ० १३४)। अस्य भाष्ये—नारायणार्थं सूक्तमेवेदं नारायणमिति सायणः (१३५ पृष्ठे)

२. "अथ हैनं वागभ्युवाद। पुरुष मा सन्तिष्ठिपो यदि स स्थापयिष्यति पुरुष एव पुरुषमत्स्यतीति तात्पर्यग्निकृतानेवोदसृजत्तद्दैवत्या आज्याहुतीरजुहोत्ताभिस्तादेवता अप्रीणात्ता एनम्प्रीता अप्रीणन्त्सर्वैः कामैः"। शत० १३।६।२।१३, पृ० १३४।

अन्ते च कर्त्ता आत्मनि (स्वशरीरे, आस्ये) अग्नी[1] समारोप्य' अद्भ्यः सम्भूतः (वा० सं० ३१।१७।२२) इत्युत्तरनारायणेनानुवाकेन[2] भगवन्तं भुवन-भास्करं सूर्यनारायणं समुपस्थाय पश्चादनवलोकन्नेवारण्यं गच्छति, यावज्जीवं तत्रैव वसति, पुनः कदाचिदपि ग्रामं नागच्छति ? वानप्रस्थो भवतीत्यर्थः।

अथवा यदि ग्रामवासस्येच्छा[3] भवति, तदा अरण्योरेवाग्नी (नात्मनि) समारोप्य सूर्यमुपस्थाय स्वगृहमागच्छति। इदमेव संग्रहेण पुरुषमेधयज्ञस्य स्वरूपमस्ति। पूर्णं स्वरूपं तु संहिताब्राह्मणकल्पसूत्रैरेव बोद्धुं शक्यते। पुरुषमेधयज्ञप्रतिपादकानां तत्तद्ग्रन्थानां परिशीलनेन सुस्पष्टं निर्विवादं चैतदवगतं भवति यत् पुरुषमेधयज्ञे पश्वतिरिक्तेषु पशुवद्यूपनियुक्तेषु पुरुषपशुषु कस्यचनैकस्यापि पुरुषस्य वधः, कस्यचन पुरुषावयवस्यावयवांशस्याप्युपघातो वा न भवति। अश्वमेधप्रभृतिपदघटकेन यज्ञशब्दापरपर्यायभूतेन मेधशब्देन पुरुषशब्दयोगः (पुरुषमेध इति यावत्) न पुरुषस्य साक्षाद् हवनादिकर्मनिर्देशकः, अपितु वस्तुतः पुरुषसंयोग प्राधान्यावेदक एव। अतो लोके नरमेध इति नाम्नापि प्रसिद्धे पुरुषमेधयज्ञे कथमपि पुरुषाहुतेः पुरुषसंज्ञपनस्य (पुरुषमारणस्य) शङ्का नोचिता। पुरुषेण साक्षात् नारायणेन दृष्टोऽयं पुरुषमेधयज्ञो ब्राह्मणेन राजन्येन चातिष्ठाकामेन तथा ब्राह्मणेन गृहं परित्यज्य वनगमनकामनायां गृहात् प्रव्रजनकालेऽपि समनुष्ठीयते एव. यथोक्तं भगवता श्रीमनुना—

प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्।
आत्मन्यग्नी[4] समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्॥ (मनु० ६।३८)

अत्र ब्राह्मणस्य गृहात् प्रव्रजनकाले या प्राजापत्या इष्टिरुक्तास्ति सा इयमेव पुरुषमेधाख्येष्टिः (यज्ञः) अस्ति। पुरुषमेधयज्ञे प्राजापत्याः पशवो भवन्त्यतस्त-दुपलक्षितत्वेन पुरुषमेधो हि प्राजापत्या इष्टिः प्राजापत्ययज्ञविशेषोऽस्ति। उक्तञ्च तत् (का० श्रौ०सू० २१।१।१७) कर्कभाष्ये।

---

१. गार्हपत्याहवनीयाग्न्यभिप्रायेणात्र द्विवचनं ज्ञेयम्।

२. नारायणार्थः "अद्भ्यः सम्भृतः" (वा० सं० ३१।१७–२२) इत्यनुवाको नारायणः। स पूर्वस्मात्, नारायणात् (सहस्रशीर्षेति० ३१।१–१६ वा० सं०) अनुवाकात् पुरुष-सूक्तेति नाम्ना प्रसिद्धात्) उत्तरः, अत एव उत्तरनारायण इति शतपथ–१३।६।२।२० सायणभाष्ये।

३. ग्रामे वा विवत्सन्नरण्योः' (का० श्रौ० सू० २१।१।१८॥)

४. गार्हपत्याहवनीयेत्यग्निद्वयाभिप्रायेणात्र द्विवचनम् 'अग्नी' इति ज्ञेयम्।

**एकानुष्ठेयकर्मणां स्वरूपम्**

यत्र कर्मणि एकाकी मानवः कुमारः स्त्री वा अन्यो निरपेक्षतया अधिक्रियते तानि कर्माणि अत्र एकानुष्ठेयतया गृहीतानि सन्ति। तेषामत्र कश्चन विचारः उपस्थाप्यते।

**वेदपारायणम्**

सन्ति श्रौतानि कर्माणि स्त्री सहभावसापेक्षानि इति सामान्यतयास्ति प्रसिद्धिः। परं कानिचनाङ्गुलिगणनीयानि कर्माणि स्त्रीसहभावनिरपेक्षाण्यपि सन्ति। प्रसिद्धं तेषु वेदपारायणं नाम मुख्यं कर्म। वेदो हि प्रत्यक्षश्रुतिः। तस्य वेदस्य प्रथमाक्षरमारभ्यान्तिमाक्षरपर्यन्तं साम्प्रदायिकविधया पठनमेव पारायणम्।

तच्च—

यः समिधा य आहुती यो वेदेन ददाश मतो अग्नये।
यो नमसा स्वध्वरः। ( ऋ० ८।१९।५ )
तस्वेदर्वन्तो रंहयन्त आशवस्तस्य द्युम्नितमं यशः।
न तमं हो देवकृतं कृतश्चन न मर्त्यकृतं नशत्॥ (ऋ० १९।६॥)

इति वैदिकैर्मन्त्रैः प्रतिपाद्यते। उक्तानां मन्त्राणां चायंभावः—यो मर्त्यः समिधा यज्ञीयकाष्ठेन, आहुतिभिः वेदपारायणेन वा अग्नये देवाय स्वीयां श्रद्धां ददाति। यश्च नमस्कारेणापि शोभनो यज्ञो देवताश्रद्धाप्रकाशनरूपः क्रियते॥ ५॥ तस्व मनुष्यस्य प्रगतिशीलाः वेगवन्तः विभवश्च देवाः प्रसीदन्ति। तस्य अतिशयितं तेजस्वि यशः प्रथते। तं श्रद्धया वेदादिपारायणकर्तारं देवतासम्बन्धेन मर्त्यप्राणि-संबन्धेन वा ज्ञानादज्ञानतो वा कृतं पापं न व्याप्नोति। निष्पापः स भवतीत्यर्थः। एतया प्रत्यक्षया श्रुत्या वेदपारायणं विहितं वर्तते। अत एवास्य वेदपारायणकर्मणः फलमेव स्मर्यते—पूर्णेन विधिना वेदमधीयीत, ततः स पूतो वेदो भवति, मनः शुद्धश्च भवति। द्वाभ्यां परायणाभ्यां ऋत्विग्भिश्च यो जन इहाधीते अनृतेभ्यः प्रमुच्यते। त्रिभिर्बहुभ्यः पातकोपपातकेभ्यः शूद्रायां रेतः सिक्त्वा गंगासु निमज्जनैश्च भवति। चतुर्भ्यः शूद्रान्नभोजनात्तत्सेवनात्तत्स्त्रीसेवनाच्च। पञ्चभिरयाज्ययाजनात्पूतो भवति, अग्राह्यग्रहणाद् ग्राहणादभ्यासोपासन्नाच्च। षड्भिर्ब्राह्मणस्य लोहितकरणा-त्पशुहननात्सुवर्णस्तेयात्ततिसम्प्रयोगाच्च। सप्तभिः प्राजापत्यानां हीनाचरणात्, यज्ञोपवेधनाच्च। अष्टभिश्चान्द्राणस्यान्तरानाचरणाद् गुरुतल्पगमनाद् रजस्वला-गमनाच्च। नवभिः सुरापानाच्च। दशभिरश्रोत्रिययाजनात् असोमपानात् अन्याय-तश्च। एकादशभिर्ब्राह्मणहननाद् गर्भहननाद्। द्वादशभिः पूर्वजन्मेहजन्मकृतैः सर्वैः पापैः प्रमुच्यते, स्वर्गलोकं गच्छति, पितॄन् स्वर्गलोकं गमयति, अग्निष्टोमादीन् क्रतून्यजति तैः क्रतुभिरिष्टं भवति।

वेदाध्यायी सदैव स्याद्यथाहि सत्यवाक् शुचिः।
यं यं कामयते कामं तं तं वेदेन साधयेत्॥
असाध्यं नास्ति यत्किंचिद् ब्रह्मणो हि फलं महत्॥ (वेदपारायणविधिः)।

अत्रेदं शङ्क्यते। तद्धि कर्म श्रौतमभिधीयते यस्य कर्मणः पूर्णो विधिः श्रुतौ (मन्त्रब्राह्मणात्मके वेदे) उपलभ्यते। न च वेदपारायणस्य विधिः पूर्णः श्रुतावुपलभ्यते इति कथमस्य श्रौतत्वमिति वेदब्रह्मयज्ञविधिबलादिति ब्रूमः। "ब्रह्मयज्ञप्रकरणे' स चेदपि प्रबलमिव (अधिकं पाठं कर्तुं) न शक्नुयादप्येकं वेदपदमर्धं तमेतावतैव' तथा भूतेभ्यो न हीयते। (श० ब्रा० ११।५।६।९) इत्येकस्यापि मन्त्रस्याध्ययनं श्रुत्या प्रतिपाद्यते। यं यं अंशमधीते तेन तेन स्पष्टं भवति, अग्नेर्वायोरादित्यस्य सायुज्यं गच्छति (तै० आ० २।१५) इति श्रुत्या यज्ञविधानपरकस्याप्यंशस्य पारायणे फलं श्रूयते।

न हि कश्चन ब्रह्मयज्ञस्य विधिरन्यतोऽभिप्रेयते। यदि हि प्रात्यहिकमन्त्रपाठोपि एकयज्ञमन्त्रपाठोपि च श्रौतस्तर्हि किमुत वेदपारायणस्य श्रौतत्वसन्देह इति कैमुतिकन्यायेन वेदपारायणस्य श्रौतत्वमव्याहतमेव। उक्तमन्त्राश्च पारायणस्य श्रौतकर्मत्वं बोधयन्ति, फलभूयस्त्वाय च तत्र स्मार्तो विधिरित्यलमतिविचारेण।

**पारायणपदार्थविमर्शः**

तदेवं वेदपारायणस्य श्रौतत्वे सिद्धे तस्य काश्चन विधा सम्प्रदायविद्भिः प्रतिपादिता अत्र विशेषपरिचयाय लिख्यन्ते। तत्र पूर्वं पारायणस्य विषये सामान्यविचारः—पारायणं नाम ग्रन्थस्याद्याक्षरमारभ्यान्त्याक्षरं यावत् प्रयोगविधिमनुसृत्य साम्प्रदायिकविधया पठनम्। तथा च—पारायणमिति पारिभाषिकः शब्दः। स च 'आवर्त्तनम्', 'पाठः' इत्यादिशब्देभ्यो साधारणं भावं बिभर्ति।

पारायणशब्दः प्राप्ताधिकारस्य विधिनाऽधीतग्रन्थस्य साम्प्रदायिकविधया कृत्स्नमावर्तनं बोधयति। ग्रन्थस्य याधीतिर्गुरुमुखोच्चारणानुच्चारणेन भवतीति मीमांसाशास्त्रे स्पष्टम्। ततश्च गुरुसम्प्रदायादधीतवेद एव पारायणेऽधिकारी सिद्ध्यति। परं वेदाध्ययने प्राप्ताधिकारोऽपि त्रैवर्णिको यदि १—अभिभावकप्रेरणानुपलब्धेः, २—गुर्वनुपलब्धेः, ३—वातावरणविरहाद्, ४—अध्ययनसमये प्रमादित्वात्, ५—असामर्थ्याद्वा गुरुशिष्यसम्प्रदायादध्ययनं न प्राप्नोति, तथापि

१. देवपदम् = शब्दात्मिकैव देवतेति मीमांसकराद्धान्तः। ततश्च देवतामयं वैदिकं पदं देवपदम्। एकवचनात् एकोऽपि वैदिको मन्त्रो देवस्वरूपं इति भावः। मन्त्रे हि देवतां सर्वानुक्रमकृते देवतां निर्दिशन्ति न पदमात्र इति देवपदं मन्त्र एवात्र विवक्षितः। देवानां पदं स्थानमिति तथार्थलाभाच्च।

सं तादृशम् ( सम्प्रदायादधिगतविद्यं ) अधिकृतं पुरुषं नियुज्य पारायणं कारयति चेत् प्रयोजककर्त्तृत्वं दक्षिणादानाच्च पारायणफलं प्राप्नोत्येवेति निर्विवादम् ।

तदेतत्पारायणं दृष्टादृष्टार्थं भवति। विषयज्ञानविशेषाक्षरसमूहस्मरणरूप-दृष्टप्रयोजनोपलब्धेर्दृष्टार्थत्वम्, ऋषि—वचनेषु पारायणफलश्रुतेरदृष्टार्थत्वम् । तथा चैतत्पारायणं सम्प्रति पौरुषेयापौरुषेयग्रन्थानामुभयोर्भवति। तत्र पौरुषेया ग्रन्था-स्त्रिविधास्तावत् सम्प्रति पारायणे समाद्रियन्ते—

प्रथमे - आर्षाः, षडङ्गः स्मृतिः—वाल्मीकीयरामायण—महाभारतपुराणोप-पुराणादयः ।

द्वितये—भाक्ताः, तेऽपि देवानुगृहीतभक्तजनैः १–विनिर्मिताः, २–संगृहीताः, ३–निर्दिष्टाश्चेति त्रिविधाः । तत्र—

विनिर्मिता—तुलसीकृतरामायणादयः ।

संगृहीताः—महावाणी ( निम्बार्कसम्प्रदाये ) ग्रन्थप्रभृतयः ।

निर्दिष्टाः—हिन्दी सूर्यपुराण-सन्तोषीव्रतकथा प्रभृतयः ।

त्रितये—स्वश्रद्धेयाः, येषु ग्रन्थेष्वात्मनो हितकर्तृत्वेन श्रद्धा प्रादुर्भवति ते स्वश्रद्धेयाः । यथा—सुभाषितादिग्रन्थाः । एतद्ग्रन्थपारायणेन दृष्टादतिरिक्तं फलं भवितुमर्हति, साम्प्रदायिकविधानानुपलब्धेः । स्वसंस्कारकर्तृत्वाच्चात्र स्वश्र-द्धेयेषु परकर्तृकत्वं सम्भवति ।

अपौरुषेयस्तावद् एक एव वेदशब्दाभिधेयो ग्रन्थराशिः । तदेषु पौरुषेयापौरुषेय-ग्रन्थपारायणेषु पौरुषेयग्रन्थानां विधिरत्र न विषयीभूतः । अत्र त्वपौरुषेयस्य वेद-शब्दाभिधेयस्य ग्रन्थराशेरेव पारायणविधा वर्ण्यन्ते ।

**वेदपारायणम्—**

वेदास्तावच्चत्वारः प्रसिद्धाः, ऋग्यजुःसामाथर्वसंज्ञकाः । चतुर्ष्वपि वेदेषु सन्ति बह्व्यः शाखाः । ताः सर्वा समानवेदसम्बन्धिन्यः शाखाः सम्भूय नैको वेदः, किन्तु सर्वाः शाखाः प्रत्येकं वेदः । ततश्चैकस्याः शाखायाः पारायणं तद्वेदपारायणं भवति । अधीतवेदः स्वयम्, वेदाध्ययनाधिकारी वा त्रैवर्णिकः पुरुषः स्वस्यासा-मर्थ्येऽन्येन सम्प्रदायात्समधीतवेदेन आत्मीयां शाखां कृत्स्नतया सकृत् सविधि पठति पठनं कारयति वा तदेतदेकशाखीयं पारायणं निर्विशेषेण 'वेदपारायणम्' इत्या-ख्यायते ।

यद्यपि वेदो मन्त्रब्राह्मणोभयात्मकः । परं पारायणे उभयविधे वेदभागे केवलं मन्त्रात्मकतया समादृतस्य संहिताभागस्यैव पारायणं शिष्टैः क्रियते, पारायण-विधौ संहितादेवताभ्य ऋषिभ्य एव होमतर्पणयोर्दर्शनात्, आर्षशिक्षापार्षदादिग्रन्थेषु

संहितात्मकमन्त्रभागस्यैवाध्ययनधर्मनिर्देशात् 'कालिन्दी संहिता ज्ञेया' इत्यादिशिक्षासु, 'एषा हि संहिता देवैः सर्वब्रह्ममयी' ( स्मृता ) इति ऋग्विधाने गायत्रीप्रकर संहितया एव प्राशस्त्यदर्शनात्, 'सर्वसंहितया प्रत्यृचं होम आज्येन तिलेन वा इत्यादिषु संहिताया ( मन्त्रशब्दसमाहृतवेदभागस्य ) एव विनियोगदर्शनात्।

तस्यैतस्य संहिताभागात्मकस्य वेदपारायणस्य संस्था विशेषकृतस्य फलमेवं पारायणविधिसूत्रे समर्थ्यते—

'पारायणेन विधिना वेदमधीयीत तस्य तपःपूतो वेदो भवति, मनः शुद्धिश्च भवति। द्वाभ्यां पारायणाभ्यामृत्विग्भिश्च यो जन इहाधीते अनुतेभ्यः प्रमुच्यते। त्रिभिर्बहुभ्यः पातकोपपातकेभ्यः, शूद्रायां रेतः सिक्त्वा गङ्गासु निमज्जंश्च भवति। चतुर्भ्यः शूद्रान्नभोजनात्, तत्सेवनात्, तत्स्त्रीसेवनाच्च। पञ्चभिरयाज्ययाजानात् पूतो भवति, अग्राह्यग्रहणाद्, अभ्यासोपासनाच्च। षड्भिर्ब्राह्मणस्य लोहितकरणात्, स्त्रीलोहितकरणात्, पशुहननात्, सुवर्णस्तेयात्, पतिसंप्रयोगाच्च। सप्तभिः प्राजापत्यानां हीनाचरणद् यज्ञोपबंधनाच्च। अष्टभिश्चान्द्रायणस्थान्तरायाचरणाद् गुरुतल्पगमनाद् रजस्वलागमनाच्च। नवभिः सुरापानात्। दशभिरश्रोत्रिययाजनाद्, असोमपानाद्, अन्यायतश्च धनोपार्जनात्। एकादशभिर्ब्राह्मणहननात्, गर्भहननात् पूर्वजन्मेहजन्यकृतैः सर्वैः पापैः प्रमुच्यते, स्वर्गं लोकं गच्छति, पितृन् स्वर्गं लोकं गमयति, अग्निष्टोमादीन् क्रतून् यजति, तैः क्रतुभिरिष्टं भवति' इति।

**शाखापारायणम्**

सामान्याद् वेदपारायणादस्तीतरत् शाखापारायणं नाम। यत्र तु मन्त्रब्राह्मणोभयभागात्मकस्य वेदस्य पारायणं क्रियते, तदा यस्य 'शाखापारायणम्' इति शिष्टैः संज्ञा क्रियते। अत्र ब्राह्मणशब्देनैवारण्यकस्य ब्राह्मणान्तर्गतोपनिषदां च व्यवहारः। मन्त्रे च ब्राह्मणान्तर्गतस्योपनिषद ईशावास्यादेः संग्रहः।

**त्रिवृत्पारायणम्**

यत्र च स्वशाखीयमन्त्रगणस्य संहितापाठः, पदपाठः, क्रमपाठ इति त्रितयमावर्त्यते, तत्र 'त्रिवृत्पारायणम्' इति शास्त्रविदां व्यवहारः। तस्य च फलमेवं याज्ञवल्क्यः कथयति—

यथा महाह्रदं प्राप्य क्षिप्तो लोष्ठो विनश्यति।
एवं दुश्चरितं सर्वं वेदे त्रिवृति मज्जति॥
कालिन्दी संहिता ज्ञेया पदमुक्ता सरस्वती॥
क्रमेणावर्त्तिता गङ्गा शम्भोर्वाणी न नान्यथा॥ इति।

**विकृतिपारायणम्**

यत्र तु संहितामन्त्रगणस्य सर्वस्य जटाद्यष्टविकृतिषु सम्भावितानां विकृतीनां कृत्स्नः पाठः क्रियते तत्र 'विकृतिपारायणम्' इति व्यवहारः। विकृतिपारायणस्य

फलं मनःशुद्धिर्ज्ञातिश्रेष्ठ्यं पङ्क्तिपावनत्वं च। तच्च सर्वदुष्कृतविनाशमन्तरा न सम्भवतीति समस्तदुरितक्षयनिवृत्तिपूर्वकं पङ्क्तिपावनान्तं फलं विकृतिपारायणस्य भवति। यथा चोक्तं वराहपुराणे—

> जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः।
> अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः॥
> जटादिविकृतीनां ये पारायणपरायणाः।
> महात्मानो द्विजश्रेष्ठास्ते ज्ञेयाः पङ्क्तिपावनाः॥ इति।

**विकृतिविशेषपारायणम्**

यत्र तु केवलामेकामेव विकृतिं पर्ययन्ति, तत्र तत्तद्विकृतिविशेषणेन पारायणशब्दं प्रयुञ्जते 'जटापारायणम्' 'घनपारायणम्' इत्यादि। चरणव्यूहे एवंविधं विकृतिपारायणमेवाभिलक्ष्य चतुष्पारायणमुक्तमस्ति। परमधुना प्रायो 'जटापारायणं, घनपारायणम्' इत्युभयमेव प्रचलति। केरलदेशे च रथपारायणनाम्ना दण्डपारायणं विशेषविधयानुतिष्ठन्ति।

**चतुर्वेदपारायणम्**

यत्र तु चतुर्णामेव एकैकाः शाखाः पारायणीकृता भवन्ति तच्चतुर्वेदपारायणं नाम। तत्रोपलब्धासु शाखासु एकैकस्याः शाखायाश्चयनं द्विधा भवति स्वपरिग्रहतया, स्वात्मतन्त्रतया च। स्वस्य यजमानस्य या पितृपितामहपरम्परागता शाखा सा स्वशाखा। सा शाखा एकं वेदमाश्रयति। यदि तया शाखया सोमयागादिश्रौतं वेदत्रितयसाध्यं कर्म क्रियेत् तर्हि स्वातिरिक्तयोरन्ययोर्वेदयोरेकैका काचन शाखा समाश्रीयते, वेदत्रयनिष्पाद्यत्वात् कर्मणः। तत्रान्यवेदीयशाखापरिग्रहविचारे स्वशाखीयपूर्वजनसमादृता पूर्वाचार्यैः सङ्केतिता वा तत्तद्वेदशाखा गृह्यते। यथा—माध्यन्दिनीयशाखीयो यजमान ऋग्वेदसम्बन्धिनी शाङ्खायनीयाम्, सामवेदीयां कौथुमीं च शाखामाश्रयति। एवं तैत्तिरीयेष्वापस्तम्बशाखीयाः कृष्णयजुर्वेदिन ऋग्वेदे आश्वलायनीयां साम्नि कौथुमीं च परम्पराप्राप्तां शाखां सङ्गृह्यते। तथैवाश्वलायनशाखीयः ऋग्वेदी महाराष्ट्रदेशीयः शौनकशाखीयत्वेन प्रसिद्धः ऋग्वेदे यजुर्वेदे बोधायनीयां सत्याषाढीयां वा शाखां, साम्नि कौथुमीं च शाखामालम्बते। साम्नि जैमिनीयशाखापरिग्रहः केरलेष्वेवेति कथयन्ति। अयमेव समयेक्षिताङ्गकलापपरिपूरणाय वेदान्तरीयशाखास्वीकारो याज्ञिकेषु शाखापरिग्रह इत्युच्यते। अथर्ववेदे तु सर्वोपि जनः शौनकशाखामेव परिगृह्णाति, अन्यस्या अथर्ववेदशाखायाः पैप्पलादीयायाः पूर्णतया अनुपलब्धेः। एवं च सोमयागादि वेदत्रयनिष्पाद्ये कर्मणि त्रयाणां वेदानां याः शाखाः समाद्रियन्ते, तासामथर्ववेदे शौनकशाखायाश्च पारायणं चेत् क्रियेत् तदा तत् 'स्वपरिगृहीतचतुर्वेदपारायणम्' भवति।

यदा च स्वेच्छया, स्वपरिगृहीतवेदशाखाध्यायिनामनुपलब्धेर्वा चतुर्णामपि वेदानामेकैकां शाखां स्वमनसा निश्चित्य पारायणं प्रवर्त्तयति, तदा तत् स्वात्मतन्त्रं चतुर्वेदपारायणं सम्पद्यते ।

चतुर्वेदपारायणमिदं सम्प्रति नैकः कर्तुं प्रभवति। नहि कश्चनैकः साम्प्रदायिकविधया चतुरोऽपि वेदान् सम्पूर्णतया गुरुमुखादधीतेऽभ्यस्यति वा। तथा हि गुरुमुखोच्चारणानूच्चारणात्मकाध्ययनसंस्कृतस्यैव वेदस्यादृष्टोत्पादकत्त्वात्, इतरस्य गुरुमुखात् साम्प्रदायिकविधयानधीतवेदस्य तु यथालिखितपाठकत्वेन निन्दितत्वात्, कुतीर्थागतवेदस्याध्ययननिन्दनाच्च।

ये तु केचनाधुना पुस्तकाश्रयेण चतुर्वेदपाठिनस्ते सम्प्रदायादनधीत सस्वरवेदा यथावदविगीतशिष्टसमनुगृहीतसाम्प्रदायिकक्रमेण विरहिता वेदाक्षरवाचका एव। अदसीयमावर्तनं न वेदपारायणशब्दवाच्यं भवितुमर्हतीति याज्ञिका अभिप्रयन्ति ।

**निष्कर्षः**

एवं विभिन्नसंज्ञाभिः प्रसिद्धं वेदशब्दराशेः पारायणं विशेषतः—

(१) वेदपारायणम् (२) शाखापारायणम् (३) त्रिवृत्पारायणम् (४) विकृतिपारायणम् (५) विकृतिविशेषपारायणम् (६) चतुर्वेदपारायणम् ।

इति षड्विधं सम्प्रति साम्प्रदायिकेषु समुपलभ्यते। सोऽयं पारायणविधया स्वयं नियोजितवेदविद्द्वारा वा समाराधितो वेदः सर्वस्यापि मनोरथं भारतीयसंस्कृतेश्च संवर्द्धनं विदधातीति सर्वेषां न तिरोहितम्।

**ब्रह्मयज्ञः**

ब्रह्मयज्ञोऽपि एकानुष्टेयमेव कर्म। ब्रह्मयज्ञो नाम अधीतस्य शास्त्रस्य प्रात्यहिकमध्ययनम्। स च ब्रह्मयज्ञो द्विधा। त्रैवर्णिकपुरुषाधिकारिक एकः। अनुपनीतस्त्रीशूद्राधिकारिकश्चापरः। तत्र त्रैवर्णिकोपनीतपुरुषाधिकारिकब्रह्मयज्ञे तु प्रत्यहं स्वशाखीयवेदस्य यथाशक्त्या कश्चन भागः पठनीयः। यदि च कर्ता स्वशाखीयवेदमधीत्यान्यमपि वेदमधीतवानस्ति तदा तेनाधीतवेदानां प्रत्यहं स्वाध्यायो विधेयः। ब्रह्मयज्ञविधौ चतुर्णामपि वेदानामध्ययनस्य फलनिर्देशात्। तथा हि—

शतपथब्राह्मणे ब्रह्मयज्ञस्य यज्ञसाधनोपदेशेन यज्ञस्वरूपत्वं फलं चैवं श्रूयते अथ ब्रह्मयज्ञः। स्वाध्यायो वै ब्रह्मयज्ञस्तस्य वा एतस्य ब्रह्मयज्ञस्य व्वागेव जुहूर्म्मन उपभृच्चक्षुर्वा मेधा स्तुवः सत्यमवभृथः स्वर्गो लोक उदयनं यावन्तं ह वा इमाम्पृथिवीं व्वित्तेन पूर्णान्ददल्लोकं ज्जयति त्रिस्तावन्तं ज्जयति भूयांसंचाक्षय्य्यंए वं विद्वानहरहः स्वाध्यायमधीते तस्मात्स्वाध्यायोध्येतव्यः ॥ ३ ॥

पय आहुतयो ह वा एता देवानाम्। यदृचः स य एवं विद्वानृचोहरहः स्वाध्यायमधीते पय आहुतिभिरेव तद्देवांस्तर्प्पयति त एनन्तृप्तास्तर्प्पयन्ति योग-

क्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा अभिवहन्ति ॥ ४ ॥

आज्याहुतयो ह वा एता देवानाम्। यद्यजूंषि स एवं विद्वान्यजूंष्यहरहः स्वाध्यायमधीत आज्ज्याहुतिभिरेव तद्देवांस्तर्प्पयति त एनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा अभिवहन्ति ॥ ५ ॥

सोमाहुतयो ह वा एता देवानाम्। यत्सामानि स य एवं विद्वान्त्सामान्य-हरहः स्वाध्यायमधीते सोमाहुतिभिरेव तद्देवास्तर्प्पयति त एनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः सम्पद्भिर्घृतकुल्या मधुकुल्या पितॄन्त्स्वधा अभिवहन्ति ॥ ६ ॥

भेद आहुतयो ह वा एता देवानाम्। यदथर्व्वाङ्गिरसः स य एवं विद्वान-थर्वाङ्गिरसोहरहः स्वाध्यायमधीते भेद आहुतिभिरेव तद्देवांस्तर्प्पयति त एनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा अभिवहन्ति ॥ ७ ॥ इति ( श० ब्रा० ११।५।६।३-७ )

एवमन्यास्वपि शाखासु स्मृतिग्रन्थेषु (या० स्मृ० १।४१-४४) प्रात्यहिकस्वा-ध्यायस्य ब्रह्मयज्ञस्य फलमुपलभ्यते। सोऽयं वैदिको ब्रह्मयज्ञः उपनीतानां त्रैवर्णि-कानामेव कृते वर्तते। तेषामेव वेदग्रहणाधिकारित्वात्।

**अनुपनीतकर्तृकब्रह्मयज्ञः**

ये च अनुपनीता स्त्रियः शूद्राश्च सन्ति। तेऽपि वेदातिरिक्ते इतिहास-पुराणादि स्वाधिकारप्राप्तग्रन्थपारायणे स्तोत्रपाठादौ चाधिक्रियन्ते।

भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः।
नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत् ॥ (या० स्मृ० १।१२१)

इति शूद्रधर्मप्रकरणे याज्ञवल्क्येन पंचयज्ञेषु शूद्रस्याधिकारप्रदर्शनात्। पञ्चयज्ञेष्वे-वायमस्ति ब्रह्मयज्ञः। स्त्रीशूद्राश्च सधर्माण इति नियमेन शूद्रकर्तव्यत्वेनोपदिष्टस्य स्त्रीष्वप्यतिदेशात्। "जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते।" इति वचनेन अनुपनीतत्रैवर्णिकानामपि तुरीयवर्णधर्मानुयायित्वस्य बोधकतया—

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा"—भा० १।४।२५ इति द्विजबन्धूनां वेदानधिकारितया च वेदाध्ययनविरहितकर्मसु अधिकारस्य साधयितुं शक्यत्वाच्च पुराणस्तोत्रपाठादिना ब्रह्मयज्ञसाधनं स्पष्टमेव।

**शूद्राध्ययनव्यवस्था**

"न शूद्राय मतिं दद्यान्नचास्योपदिशेद्धर्मम्" (मनु० ४।८०) इत्यादि निषेधः स शूद्रानुपयोगिवैदिकाग्निहोत्रादिः धर्मज्ञानविषयः।

"श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः" इति इतिहासपुराणादि-श्रवणस्य ब्राह्मणमुखेन शूद्रविषयेऽपि विहितत्वात्। किंच स्मृत्युक्तशूद्रधर्माणामपि उपदेशप्रतिषेधाभावो वाच्यः। अन्यथा—'शूद्रश्चतुर्थो वर्ण एकजातिः। तस्यापि सत्यमक्रोधः शौचमाचमनार्थं पाणिपादप्रक्षालनमेवेके श्राद्धकर्म भृत्यभरणं स्वदारवृत्तिः तुष्टिः परिचर्या :चोत्तरेषाम्' (१।५१–५७) इत्यादिगौतमादिधर्मकृतां स्मृत्युक्तशौचश्राद्धादीनां च उपदेशाभावे तद्विषये तादृशधर्माणामननुष्ठानात्तद्वचनानामननुष्ठानलक्षणप्रामाण्यमापद्यते। तुस्ताच्छूद्रानुष्ठानानुपयोगिधर्मविषय एव स निषेधः। न तु चातुर्वर्ण्यगृहस्थसाधारणधर्माणामहिंसास्तेयादिरूपाणां प्रातिस्विकशौचत्रिराचमनश्राद्धद्विजशुश्रूषादिधर्माणामपि। न च स्वानुष्ठनानुपयोगिधर्मश्रवणे तस्याप्यप्रसक्तेः प्रतिषेधो व्यर्थ इति वाच्यम्। धर्मः श्रुतो वा दृष्टो वेति धर्ममात्रश्रवणे फलाभिधानात्स्वधर्म इति विशेषाभावाच्छूद्रव्यतिरिक्तानां त्रैवर्णिकानां यथा सर्ववर्णधर्मश्रवणे अधिकारः, संन्यासव्यतिरिक्तानां यथा सर्वाश्रमसाधारणधर्मे अधिकारः, त्रैवर्णिकस्त्रीणां पुरुषधर्मे, पुरुषाणां च स्त्रीधर्मे, यथाधिकारः तथा शूद्रस्यापि प्रसक्ते तद्विषये प्रतिषेधस्यार्थवत्वात्। (स्मृ० मु० पृ० ६६ व०) इति वैद्यनाथीये व्यवस्थापितत्वात् (तु० जै० न्या० ६।१।७,१८)।

धर्मशास्त्रविद्भिः वेदातिरिक्तशास्त्रेभ्योऽपेक्षितधर्मज्ञानं साधितम्। अथापि होमे पौराणिकमन्त्रपाठादिक्रियायां तु ब्राह्मणद्वारैव सर्वत्र धर्मशास्त्रीयो निर्णयः।

**वेदातिरिक्तग्रन्थीयब्रह्मयज्ञफलम्**

वेदातिरिक्तग्रन्थानां पारायणं भवतीति (पूर्वमेव पारायणप्रकरणे उक्तम्) ब्रह्मयज्ञेपि वेदातिरिक्तग्रन्थानां प्रयोगे फलं भवतीति याज्ञवल्क्यस्मृतौ (१।४५–४७) यथा—

वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः।
इतिहासांस्तथा विद्यां शक्त्याधीते हि योऽन्वहम्॥
मांसक्षीरोदनमधुतर्पणं स दिवौकसाम्।
करोति तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा॥
ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः।
यं यं क्रतुमधीते च तस्य तस्याप्नुयात् फलम्॥

शतपथब्राह्मणेऽपि ( ११।५।६।८ )

मद्धवाहुतयो ह वा एता देवानाम्। यदनुशासनानि विद्यावाकोवाक्यमितिहासपुराणङ्गाथानाराशस्य स य एवं विद्वाननुशासनानि विद्या व्वाकोवाक्यमितिहासपुराणङ्गाथानाराशसोरित्यहरहः स्वाध्यायमधीते मद्धवाहुतिभिरेव तद्देवांस्तर्प्पयति त एनन्तृप्यतास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्या पितॄन्त्स्वधा अभिवहन्ति ॥ ८ ॥ इति। तस्मादनधीतवेदानां पुराणस्तोत्रपाठादिभिर्ब्रह्मयज्ञ इति।

**शाकत्यागव्रतविवेचनम्**

निर्णयसिन्धौ—शाकं दधि पयो माषान् श्रावणादिषु संत्यजेत्। अत्र त्यजेदिति वर्जनसङ्कल्पः पर्युदासो ज्ञेयः व्रतोपक्रमात्।

अत्र केचित्—"शाकाख्यं पत्रपुष्पादि" इत्यमरकोशस्य "शक्यतेऽशितुमनेनेति शाकः" इति क्षीरस्वामिना व्याख्यानात् व्यञ्जनमात्रस्य निषेधमाचक्षते। अन्ये तु शाकशब्दस्य पत्रादिदशविधशाके योगरुढत्वात् योगाच्च रुढेर्बलीयस्त्वात्, सूपादीनामपि त्यागापत्तेश्च तत् प्रत्याचक्षते। तेन—

मूलपत्रकरीराग्रफलकाण्डाधिरुढकाः।
त्वक्पुष्पं कवकं चेति शाकं दशविधं स्मृतम् ॥"

इति क्षीरस्वामिनोक्तस्य शाकस्य निषेध इति। अधिरुढकाः—अङ्कुराः।

वस्तुतस्तु—

तत्तत्कालोद्भवाः शाका वर्जनीयाः प्रयत्नतः।
बहुबीजमबीजं च विकारि च विवर्जयेत् ॥

इति भविष्यवचनात्तत्कालोत्पन्नानां दशविधशाकानां निषेधः। तत्र तत्कालोद्भवजातीयत्वं विवक्षितम्। तेनातपादिशोषितानां वर्षान्तरोद्भवानामपि निषेधः। अत्र तत्कालोद्भवमात्रं विवक्षितं, न तु तन्मात्रकालोद्भवत्वं, गौरवात्। तेनान्यकालोद्भवानां तत्कालोद्भवानां च बिम्बादीनां निषेधः। अत्र तत्कालोद्भवा इति वीप्सावशात्स्वस्वकालोद्भवानां सर्वेषां निषेध इति निष्कर्षः।(नि. सि. पृ. ८२)

**पूजा तद्भेदाश्च**

भारतीयकर्मकाण्डे पूजा सर्वजनप्रसिद्धं कर्म। सा च पूजा पञ्चविधेति

शिवपुराणे— देवानां प्रीतये पूजा पञ्चधैव प्रकल्पिता।
तत्तन्मन्त्रजपो होमो दानं चैव तपस्तथा।
स्थण्डिले प्रतिमायां च ह्यग्नौ ब्राह्मणविग्रहे।

समाराधनमित्येवं षोडशैरुपचारकैः।
उत्तरोत्तरवैशिष्ट्यात् पूर्वाभावे तथोत्तरम्। इति

**पूजाधिकरणानि**

देवतायाः पूजाया अधिकरणानि कृष्णभट्टीये (११९४ पृ०) उक्तानि। यथा—

अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम्।
अग्नौ क्रियावतां देवो दिवि देवा मनीषिणाम्।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये रविः।
तस्य सर्वगतत्वाच्च हृदये भावितात्मनाम्।
(नि० सि० टी० ११९४)

प्रतिमाश्चाष्टविधा भवन्ति। यथा—

शैली दारुमयी लौही लेप्या लेख्या च सैकती।
मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता॥

अत्र शैलादीनां पार्थिवत्वात् इन्द्रियगोचरत्वाच्च मनोमयीति सन्दशपतितत्वात् इन्द्रियमत्र मनो न गृह्यते, अपि तु प्राकृतिकधात्वादिभिन्नत्वेऽपि मानसिकानां पारदादीनां गोमयपिष्टादीनां संयोगजादीनां प्रत्यक्षदृश्यपदार्थानां येषां केषांचित्, संग्रहपरो मनः शब्द इति सम्प्रदायविदः।

**पूजायामुपचाराः**

तत्रादौ उपचार शब्दस्यार्थः पदार्थादर्शे (३।६२) ज्ञानमालायाम्—

मत्या चैते कृता देवे साधकं देवसन्निधिम्।
चारयन्ति यतस्तस्मादुच्यन्ते ह्युपचारकाः।

उपचाराश्च बहवः। तेषु यावतामुपादानं क्रियते तावत्संख्योपचारवती सा पूजा भवति। तेषामनुक्रमः पदार्थाश्च नियताः। यथा हि—षोडशोपचाराः—

(१) कर्मप्रदीपे—आवाहनासनं पाद्यमर्घ्यमाचमनीयकम्।
स्नाने वस्त्रोपवीते च गन्धमाल्यान्यनुक्रमात्।
धूपं दीपं च नैवेद्यं ताम्बूलं च प्रदक्षिणा।
पुष्पाञ्जलिरिति प्रोक्ता उपचारास्तु षोडश।
(अ० प्र० ८)

( २ ) विश्वामित्रसंहितायां तु—

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्कं तथा स्नानवस्त्रालङ्करणानि च ।
गन्धपुष्पे धूपदीपौ नैवेद्यं मुखवासनम् ।
नमस्कारं षोडशं च कल्पयेद्देवताप्रियम् । इति

( गा० पु० शङ्कराचार्य: ४२ पृ० )

एते तान्त्रिकग्रन्थेषु षोडशोपचारा: । बङ्गदेशे षोडशोपचारशब्देन इम एव ( आसन-भूषण-मधुपर्कवन्त: ) प्रचलन्ति ।

( २ ) पञ्चोपचारा:—गन्धपुष्पे धूपदीपौ नैवेद्य इति पंचकम् ।

( सं० भा० १५ )

(३) राजोपचारा: - तत्र पञ्चामृताभ्यङ्गमङ्गस्योद्वर्तनं तथा ।
मधुपर्कं परिमलद्रव्याणि विविधानि च ।
पादुकान्दोलनादर्शव्यजनं छत्रचामरे ।
वाद्यार्त्तिक्यं नृत्तगीतशय्या राजोपचारका:॥

( सं० भा० १५ )

एवं द्वात्रिंशदुपचारा:, चतु:षष्ट्युपचारा:, शतोपचारा:, सहस्रोपचाराश्च तत्तद्ग्रन्थेषु वेदितव्या इति ।

**व्रतोद्यापनस्य सामान्यं स्वरूपम्**

स्नात्वा व्रतवता सर्वव्रतेषु व्रतमूर्त्तय: ।
पूज्या: सुवर्णजास्ता वै शक्त्या वै भूमिशायिना ।
जपो होमश्च सामान्यं व्रतान्ते दानमेव च ।
चतुर्विंशा द्वादश वा पञ्च वा त्रय एकक: ।
विप्रा: प्रपूज्या गुरवो भोज्या शक्त्या तु दक्षिणा ।
देया गाव: सुवर्णाद्या: पादुकोपानहौ पृथक् ।
जलपात्रं पानपात्रं मृत्तिका छत्रमासनम् ।
शय्या वस्त्रयुगं कुम्भा: परिभाषेयमीरिता ॥ इति ।

( अग्निपुराणे–१७५।५६ )

**पुरश्चरणम्**

पुरश्चरणस्य महिमा तत्स्वरूपं च रत्नमालायाम् । ( ७१६ )

पुरश्चरणसम्पन्नो मन्त्रो हि फलदायकः ।
किं होमैः किं जपैश्चैव किं मन्त्रन्यासविस्तरैः ।
रहस्यानां हि मन्त्राणां यदि न स्यात्पुरस्क्रिया ।
पुरस्क्रिया हि मन्त्राणां प्रधानं बीजमुच्यते ।
वीर्यहीनो यथा देवि सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनस्तु तथा मन्त्रः प्रकीर्तितः ।
साधनं मूलमन्त्रस्य पुरश्चरणमुच्यते ।
पुरतश्चरणीयत्वाद्विनियोगाख्यकर्मणाम् ।
पुरतो विनियोगस्य चरणाद्वा तथोदितम् ।
धर्मार्थकाममोक्षाणां शास्त्रमार्गेण योजनम् ।
सिद्धिमन्त्रस्य सम्प्रोक्तो विनियोगो विचक्षणैः ।
जपो होमस्तर्पणं च मार्जनं विप्रभोजनम् ।
मन्त्रविद्भिस्तु पञ्चाङ्गं पुरश्चरणमीरितम् ।
होमो जपदशांशेन तद्दशांशेन तर्पणम् ।
मार्जनं तद्दशांशेन तद्दशांशेन भोजनम् ।

( र० ७३१ )

सर्वेऽपि मन्त्रा गुरुमुखादवगत्यैव जप्तव्या नान्यथा—

पुस्तके लिखितान् मन्त्रानवलोक्य जपेत्तु यः ।
स जीवन्नेव चाण्डालो मृतःश्वा वै भविष्यति ॥ इति ।

( र० ७५० )

**तपःसंस्कारविधिः वैष्णवानाम्**

स्कान्दे—स्वगृह्योक्तविधानेन वह्निमादाय वै बुधः ।
चक्राद्यायुधमन्त्रेण जुहुयात् षोडशाहुतीः ।
मूलमन्त्रेण सूक्तेन पौरुषेण ततः परम् ।
जातवेदः सुमन्त्रेण पश्चादष्टोत्तरं शतम् ।
हुत्वा महाव्याहृतिभिश्चक्रादींस्तत्र तापयेत् ।
सह्यान् सुतप्तान् गुरुणा मन्त्रवद्धारयेद् बुधः ।
भुजद्वये शङ्खचक्रे मूर्ध्नि शार्ङ्गशरौ तथा ।
ललाटे तु गदा धार्या हृदये खड्गमेव च ।
एवं धार्याणि पञ्चैव विष्णुभक्तैर्मुमुक्षुभिः ।

अथवा भुजयोश्चक्रशङ्खौ चैव सुलक्षणौ।
एवं लाच्छनयुक्ता ये भक्तास्ते वैष्णवाः स्मृताः॥ इति
( वैष्णवखण्डे ६ ( ६०-६७ )

**मण्डलम् ( भद्रम् )**

देवतानां पूजनाधिकरणं याज्ञवल्क्यस्मृतौ मण्डलमप्युक्तम्। तथा हि—
'स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा।' ( १।२९८ )

मण्डलमेव भद्रमित्यभिधीयते—
'वेदिकायां लिखेत् पश्चात्सर्वतोभद्रमण्डलम्।
शृणु तस्य विधिं श्रौते स्मार्ते यद् भद्रमिज्यते॥

इति मेरुतन्त्र ( ३।३५४ ) वचनात्।

तत्र मण्डलमनेकविधम्। तच्च कार्यानुरोधेन प्रधानदेवतानुरोधेन शक्त्यनुरोधेन च यथार्हं विहितम्। सर्वतोभद्रमण्डलम् अष्टपत्राब्जमण्डलं (अष्टदलमण्डलं) तु सर्वसाधारणम्। पञ्चवापीकमण्डलं, लिङ्गतोभद्रमण्डलं गौरीतिलकम् गणपतिमण्डलं सूर्यभद्रं च क्रमशः विष्णु-शिव-शक्ति-गणेश-सूर्याणां प्रधानदैवत्ये कर्मणि भवति। मण्डलविधाश्च बह्व्य इति प्रसिद्धत्वाद् विस्तरभयाच्चात्र न तासां संग्रहः।

**ग्रहयज्ञः**

स च चतुर्द्धा केवल-अयुतलक्षकोटिभेदात्। अयुतादीनां मात्स्ये ( ९३ अ० ) प्रकारः (१।२९५)। याज्ञवल्क्योक्तो केवलो ग्रहयज्ञः। तत्राधिदेवतादीनामनुल्लेखात्।

संस्कारभास्करे—
केवलं ग्रहयज्ञश्च सर्वं शान्त्यादिकेषु च।
प्रथमोऽयुतहोमश्च द्वितीयो लक्षहोमकः।
तृतीयः कोटिहोमः स्यात्त्रिविधो ग्रहयज्ञकः॥

ग्रहयज्ञे ग्रहाणामावाहनस्थापनपूजनादि कर्त्तव्यानि। ग्रहाश्च नव। तेषां ९ नामानीव पूजाद्युपकरणान्यपि समर्थानां कृते भिद्यन्ते। ते चाधुना सर्वैर्न परिज्ञायन्ते। न च तान्याधुनिकपद्धतिषूपलभ्यन्त इति सम्प्रदायविदां ग्रन्थाधारेण लिख्यते।

**ग्रहनामानि**

सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः।
शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः॥
( या० स्मृ० १।२९६ )

स्कान्दे—

जन्मभूर्गोत्रमग्निश्च वर्णस्थानमुखानि च ।
योऽज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमाविताः ॥

इति वचनात् जन्मभूरादीनां षण्णामज्ञानेन दोषश्रवणात्तानि पूर्वं प्रदर्श्यन्ते ।

तत्र ( १ ) जन्मभूमयः—

उत्पन्नोऽर्कः कलिङ्गेषु यमुनायां च चन्द्रमाः ।
अङ्गारकस्त्ववन्त्यां च मगधायां हिमांशुजः ॥
सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा ।
शनैश्चरस्तु सौराष्ट्रे राहुर्वै राठिनापुरे ॥
अन्तर्वेद्यां तथा केतुरित्येता ग्रहभूमयः ॥

(२) ग्रहगोत्राणि

आदित्यः काश्यपो गोत्रे आत्रेयश्चन्द्रमा भवेत् ।
भारद्वाजो भवेद् भौमस्तथात्रेयश्च सोमजः ॥
गुरुश्चैवाङ्गिरो गोत्रः शुक्रो वै भार्गवस्तथा ।
शनिः काश्यप एवाथ राहुः पैठीनसिः स्मृतः ॥
केतवो जैमिनीयाश्च ग्रहगोत्राणि कीर्तयेत् ॥

गोत्रोच्चारणे विशेषः—

सकारेण तु वक्तव्यं गोत्रं सर्वत्र धीमता ।
सकारः कुतुपो ज्ञेयस्तस्माद्यत्नेन तं वदेत् ॥

(३) अथाग्नयः—

आदित्यः कपिलो नाम पिङ्गलः सोम उच्यते ।
धूमकेतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः ॥
गुरौ चैव शिखी नाम शुक्रे भवति हाटकः ।
शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः ॥

(४) वर्णः (५) स्थानप्रतिपादिकाः तदतिरिक्तविशिष्टविषयबोधिकाश्चेमाः कारिका लिख्यन्ते लाघवात् । तद्यथा—

आरक्तं भास्करं मध्ये वर्तुलं द्वादशाङ्गुलम् ।
आग्नेय्यां श्वेतमर्धेन्दुमर्काद् द्विगुणमायतम् ॥
याम्यां भौमं त्रिकोणं च रक्तं च चतुरङ्गुलम् ।
ईशान्यां धनुषाकारं बुधं पीतं षडङ्गुलम् ॥
नवाङ्गुलं गुरुं पीतं पद्माकारं तथोत्तरे ।
दशाङ्गुलं भृगुं पूर्वे चतुष्कोणं सितप्रभम् ॥

द्वाविंशतिं शनिं कृष्णं नराकारं च पश्चिमे।
नैर्ऋत्यां मकराकारं राहुं धूम्रं जिनाङ्गुलम् ॥
वायव्यां धूमलं केतुं खड्गं राहुसमायतम् ॥

केवलवर्णप्रतिबोधश्चानया—

भास्कराङ्गारकौ रक्तौ शुक्लौ शुक्रनिशाकरौ।
पीतौ बुधगुरू, कृष्णो मन्दो, राहू च चित्रकौ ॥

**( ६ ) मुखदिशः स्कान्दे**

शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ।
प्रत्यङ्मुखौ शनीसोमौ शेषा दक्षिणतो मुखाः ॥

इत्यवश्यज्ञातव्यविषयाण्युक्तानि।

अथ विशेषविषयाणि। तत्र ग्रहानामाकृतिस्तण्डुलादिना निर्मापनीया पूर्वप्रकरणे उक्ता। अन्यप्रकारा चाधुनोच्यते–

वृत्तमण्डलमादित्ये चतुरस्रं निशाकरे।
भूमिपुत्रे त्रिकोणं स्याद् बुधे वै बाणसन्निभम् ॥
गुरौ तु पट्टिशाकारं पञ्चकोणन्तु भार्गवे।
शनौ स्याद्धनुषाकारं शूर्पाकारं तु राहवे ॥
केतोश्चैव ध्वजाकारं मण्डलानि यथाक्रमम्।

**प्रतिमाधातवः**

ताम्रकात्स्फटिकाद्रक्तचन्दनात्स्वर्णकादुभौ।
राजतादायसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात् ॥
( या० स्मृ० १।१९७ )

**अशक्तौ**

रविभौमो ताम्रमयौ राजतौ सोमभार्गवौ।
बुधजीवौ स्वर्णमयौ लौहौ मन्दविधुन्तुदौ ॥
केतुः कांस्योऽथवा सीसः प्रतिमाधातवः स्मृताः।
( सं० भा० )

**एतस्याप्यशक्तौ**

स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डकेषु वा
( या० स्मृ० १।२९८ )

रूपाणि तु मात्स्ये ९३ अध्याये द्रष्टव्यानि।

**अथ ग्रहाधिदेवता**

शिवोमा-स्कन्द-गोविन्द-ब्रह्मेन्द्र-यम कालकाः ।
चित्रगुप्तश्च सर्वेषां दक्षिणे त्वधिदेवताः ॥

**अथ प्रत्यधिदेवता**

अग्निरापः क्षितिर्विष्णुरिन्द्र ऐन्द्री प्रजापतिः ।
सर्पो ब्रह्मा च निर्दिष्टा वामे प्रत्यधिदेवताः ॥

**अथ ग्रहगन्धा**

रक्तं दिवाकरकुजे सितं चन्द्रे च भार्गवे ।
सकुङ्कुमं गुरौ सौम्येऽगरुं मन्दासुरेषु च ॥

( निर्मितं )

**अथ ग्रहपुष्पाणि**

हयारिकुसुमैः सूर्यं कुमुदैः सोममर्चयेत् ।
क्षितिजं तु जपापुष्पैश्चम्पकैः सोमनन्दनम् ॥
शतपत्रैर्गुरुः पूज्यो जातीपुष्पैस्तु भार्गवः ।
मल्लिकाकुसुमैः पङ्गुं कुन्दपुष्पैर्विधुन्तुदम् ॥
केतुं नानाविधैः पुष्पैर्ऋतुकालोद्भवैः शुभैः ।

**अथ ग्रहधूपः**

रवेः कुन्दुरुकं धूपं शशिनस्तु धृताक्षताः ।
भौमे सर्जरसं चैव अगुरुश्च बुधे स्मृतः ॥
सिह्लकं गुरवे दद्याच्छुक्रे बिम्वागरुस्तथा ।
गुग्गुलुं मन्दचारे च लाक्षा राहोश्च केतवे ॥

कुन्दुरुकं–पालकी ( कुनुरु ) । सर्जरसं–धूपः । सिह्लकं–पिण्डकः ( लोहवान् ) । वसस्त्वेति धूपयेत् ॥

**दीपः**

नववर्तियुतो दीपो घृतेन परिपूरितः ।
ग्रहाणामग्रतः कार्यस्तेजोस्येतेन मन्त्रितः ॥

**अथ नैवेद्यम्**

गुडौदनं रवेर्दद्यात्सोमाय घृतपायसम् ।
लोहिताय हविष्यान्नं बुधाय क्षीरषाष्ठिकम् ॥
दध्योदनं गुरोर्दद्याच्छुक्राय च घृतोदनम् ।
मिश्रितं तिलमाषैश्च नैवेद्यं तु शनैश्चरे ।
राहोर्मांसोदनं दद्यात्केतोश्चित्रौदनं तथा ॥

**चित्रोदनन्तु**

अजाक्षीरेण संसिद्धा विमलाः सिततण्डुलाः।
यवचूर्णेन संयुक्ताश्चित्रोदनमुदाहृतम् ॥

**पूर्वोक्तनैवेद्याभावे**

शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम्।
( या० स्मृ० )

**अथ फलानि**

१सो० मं० बु० गु० शु०
द्राक्षेक्षु-पूग-नारङ्ग-जम्बीरं-बीजपूरकम् ।
श० रा० के०
खर्जूरं नारिकेलं च दाडिमं च यथाक्रमम् ॥
अलाभे यानि भक्ष्याणि फलानि तानि दापयेत्।
खेचराणां च ताम्बूलमेकैकस्य प्रदापयेत् ॥

**अथ दक्षिणाः**

धेनुः शङ्खस्तथानड्वान् हेम वासो हयः क्रमात्।
कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः ॥

**ग्रहहोमसमिधः**

अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः।
औदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥
( या० स्मृ० १।३०२ )

अभावे वानुकर्त्तव्याः सर्वाः पालाशवृक्षजाः।

**होमसंख्या—**

एकैकस्याष्टशतमष्टाविंशतिरेव वा।
होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युताः ॥
( या० स्मृ० १।३०३ )

**ग्रहरत्नानि**

ग्रहप्रीतये नवरत्नमुद्रामाह कश्यपः—

सूर्य्यादीनां च सन्तुष्ट्यै माणिक्यं मौक्तिकं तथा।
सुविद्रुमं मरकतं पुष्परागं च वज्रकम्।
नीलगोमेदवैदूर्य्यान्धार्यं स्वस्वदिशि क्रमात् ॥ ४६ ॥

अशक्तानां विशेषमाह—श्रीपतिः

धार्यं तुष्ट्यै विद्रुमं भौमभान्वो रूप्यं शुक्रेन्द्वोश्च हेमेंदुजस्य ।
मुक्ता गुरे लोहमर्कात्मजस्य लाजावर्त्तः कीर्तितः शेषयोश्च ॥ ५० ॥

औषधमूलान्यपि धार्याण्याह दीपिकायाम्—

मूलं धार्यं त्रिशूल्याः सवितरि विगुणे क्षीरिकामूलमिन्दौ ।
जिह्वाहेर्भूमिपुत्रे रजनिकरसुते वृद्धदारोश्च मूलम् ॥
मार्गीजीवेऽथ शुक्रे भवति शुभकरं सिंहपुच्छस्य मूलम् ।
विच्छोलं चार्कपुत्रे तमसि मलयजं केतुदोषेऽश्वगन्धाम् ॥ १५ ॥

त्रिशूली बिल्वः । क्षीरिका-खीरिणी । जिह्वाहिर्नागजिह्वा । वृद्धदारुः विधारा । सिंहपुच्छं रिवा (पिथवन) । मलयजं चन्दनम् । अन्यत् प्रसिद्धम् । गजदानं गजमदः ॥ इति संग्रहशिरोमणौ टिप्पणम् पृ० १३६ (नवलकिशोर प्रेस)

**ग्रहदोषहरस्नानम्**

ग्रहपीडाहरस्नानमाह--दैवज्ञमनोहरे—

सप्रियंगुरजनीद्वयमांसी कुष्ठलाजसितसर्षपखण्डैः ।
वारिभिः सहवचैः सहलोध्रैः स्नानमत्ति निखिलां ग्रहपीडाम् ॥ ५२ ॥

प्रत्येकग्रहाणामौषधस्नानमाह--श्रीपतिः । तत्रादौ रवेः—

मनःशिलैला - सुरदारु - कुंकुमै-
रुशीर - यष्टी - मधु - पद्मकान्वितैः ।
सिताभ्रपुष्पै-र्विषमस्थिते रवौ
शुभावहं स्नानमुदाहृतं बुधैः ॥ ५३ ॥

**चन्द्रमसः**

पञ्चगव्यगजदानविमिश्रैः
शङ्खशुक्तिकुमुदस्फटिकैश्च ।
शीतरश्मिकृतवैकृतहंतृ-
स्नानमेतदुदितं नृपतीनाम् ॥ ५४ ॥

**भौमस्य—**

बिल्वचन्दनवलारुणपुष्पैर्हिंगुकल्कफलिनीवकुलैश्च ।
स्नानमद्भिरिहमांसि युताभिर्भौमदौस्थ्यविनिवारणमाह ॥ ५५ ॥

**बुधस्य—**

गोमयाक्षतफलैः ससरोजैः क्षौद्रशुक्तिनवमूलहेमभिः ।
स्नानमुक्तमिदमत्र भूभृतां बोधनाशुभविनाशनहेतोः ॥ ५६ ॥

गुरोः —

मालतीकुसुमयुक्तसर्षपैः पल्लवैश्च मदयन्तिकोद्भवैः ।
क्षिप्रमम्बु मधु केचनस्फुटं वैकृतं गुरुकृतं विनिहन्ति ॥ ५७ ॥

भृगोः —

एलया च शिलया समन्वितैर्वारिभिः सकलमूलकुंकुमैः ।
स्नानतो भृगुसुतोपपादितं दुःखमेति विलयं न संशयः ॥ ५८ ॥

शनेः —

असितशिलाञ्जनलोध्रशिलाभिः
शतकुसुमावृतलाजयुताभिः ।
रवितनये कथितं विषमस्थे
दुरितहृताप्लवनं मुनिमुख्यैः ॥ ५९ ॥

राहुकेत्वोः

लोध्रगर्भतिलपत्रकमुस्ता
हस्तिदानमृगनाभिपयोभिः ।
स्नानमार्त्तिमिह कृन्तति राहोः
साजमूत्रमिदमेव च केतोः ॥ ६० ॥

इदमेवोक्तं दीपिकायाम्—

प्रयोज्यमोषधस्नानं-
ग्रहविप्रसुरार्चनम् ।
ग्रहानुद्दिश्य होमो वा ।
ग्रहाणां प्रीतिमिच्छता ॥ ६१ ॥

**ग्रहपीडाहरदानानि**

ग्रहाणां दानमाह वसिष्ठः—

धेनुं शङ्खं रक्तवृषं हेमपीताम्बरद्वयम् ।
श्वेताश्वं कृष्णधेनुं च कृष्णलोहमजं क्रमात् ॥ ६२ ॥

स्वर्णेन वा समीकृत्य दातव्या दक्षिणा ततः ।
आचार्याय ब्राह्मणेभ्यो जापकेभ्योऽथ शक्तितः ॥ ६३ ॥

संहिताप्रदीपे दानं सुगमेनोक्तम्—

भानुस्ताम्बूलदानादपहरति नृणां वैकृतं वासरोत्थम् ।
सोमः श्रीखण्डदानादवनिवरसुतो भोजनात्पुष्पदानात् ।

सौम्यः शक्रस्य मंत्री हरिहरनमनाद् भार्गवः शुभ्रवस्त्रै-
स्तैलस्नानात्प्रभाते दिनकरतनयो ब्रह्मनुत्या परो च ॥ ६४ ॥

सूर्य्यादीनां गन्तव्यराशिफलकाल उक्तो जगन्मोहने—

सूर्यः पञ्चदिनं शशी त्रिघटिकं भौमोष्ट वै वासरान्
सप्ताहानि भृगुः ससोमतनयो मासद्वयं वै गुरुः।
षण्मासात्पुरतोऽपि सूर्य्यतनयो राहुश्च मासत्रयं
केतुश्चैव ददाति भावि सकलं गन्तव्यराशेः फलम् ॥६५॥

फलकाले ग्रहदानमुक्तं प्रजापतिना—

आदौ रवेर्दानम्—

कौसुम्भवस्त्रं गुडहेमताम्रं
माणिक्यगोधूमसुवर्णवस्त्रम् ॥
सवत्सगोदानमतिप्रणीतं-
दुष्टार्यमार्तिघ्नमसूरिकाश्च ॥६६॥

चन्द्रमसोः दानम्—

घृतकमलं सितवस्त्रं दधिशङ्खे चैव मौक्तिकसुवर्णे।
रजतं च सम्प्रदद्याच्चन्द्रारिष्टोपशमनाय ॥६७॥

भौमस्य दानम्—

प्रवालगोधूममसूरिकाश्च
वृषश्च ताम्रः करवीरपुष्पम्।
आरक्तवस्त्रं गुडहेमताम्रं
दुष्टाय भौमाय सचन्दनं हि ॥६८॥

बुधस्य दानम्—

नीलं वस्त्रं मुद्गदानं बुधाय,
रत्नं पाचीदासिका, हेमसर्पिः।
कांस्यं दन्तः कुञ्जरश्चाथ मेषो
रौप्यं सर्वं पुष्पजापादिकं च ॥ ६९ ॥

गुरोर्दानम्—

अश्वः सुवर्णांशुकपीतवस्त्रं
सपीतधान्यं लवणं सपुष्पम्।
सशर्करं तद्रजनीप्रयुक्तं
दुष्टाय शान्त्यै गुरुवे प्रदेयम् ॥ ७० ॥

शुक्रस्य दानम्—

चित्रवस्त्रमपि दानवर्चिते
दुष्टगे मुनिवरैः परिगीतम्।
तन्दुलं घृतसुवर्णरूप्यकं
वज्रकं परिमलो, धवलोऽश्वः ॥ ७१ ॥

शनेर्दानम्—

नीलकं महिषं कृष्णं वस्त्रं लोहं सदक्षिणम्।
दद्याच्च दक्षिणायुक्तं शनिदोषप्रशान्तये ॥ ७२ ॥

केतोर्दानम्—

केतोर्वैदूर्यममलं तैलं मृगमदस्तथा।
ऊर्णा तिलाश्च संयुक्ता दद्यात् क्लेशापनुत्तये ॥ ७३ ॥

राहोर्दानम्—

राहोर्दानं बुधैर्मेषो गोमेदं लौहकम्बलम्।
सुवर्णं नागरूप्यं च सतिलं ताम्रभाजनम् ॥ ७४ ॥
—संग्रहशिरोमणिः ( म० म० सरयूप्रसादः )

इत्येवं ग्रहयज्ञविषय उक्तः।
अधुना स्मार्तपौराणिककर्मप्रकृतिभूते ग्रहयज्ञे अभ्यर्हितः मण्डपविषय उच्यते।

मण्डपः

'नित्ये नैमित्तिके काम्ये कारयेत् कुण्डमण्डपम्' इति भविष्ये मध्यपर्वोत्तरभागे ( १७ अ० २५ श्लो० ) वचनात् सर्वस्मिन्नपि कर्मणि मण्डप आवश्यकः। अथापि नित्ये शिवरात्रिव्रताद्युत्सवे एव मण्डपस्य आवश्यकता, न तु सर्वदा। नित्यस्य नित्यापितस्य नैमित्तिकस्य यथाशक्त्यङ्गोपसंहारन्यायस्य पूर्वमुक्तत्वात्।

अत एव कोटिहोमे रामकृष्णभट्टाः—अयं च मण्डपः शान्त्यादेः सर्वत एवात्मानं गोपायेदित्यादि श्रुतेरावश्यकत्वावगमात्तत्र मण्डपाद्यशक्तावनावश्यकः। श्रीकामादौ त्वावश्यकः। "नित्यं नैमित्तिकं हित्वा सर्वमन्यत्समण्डपम्" इति मात्स्येऽन्यत्राभिधानात्। तेन नित्यादौ मण्डपस्यानावश्यकता इति आहुः।

स चायं मण्डपः परिमाणभेदाद् बहुविधः। कर्मणो विस्तारादिकमवलम्ब्य कुण्डमण्डपोपयोगिग्रन्थेभ्यः समाद्रियते। श्रौते कर्मणि कर्मकाण्डस्थानं शाला, विमितम् विहारः इत्यादिशब्देनोच्यते न मण्डपशब्देन। तेषां निर्माणप्रक्रियापि च शुल्वसूत्रादिग्रन्थेभ्योऽवगन्तव्या भवति।

**अग्न्यायतनम्**

होमयुक्तं कर्मकाण्डे अग्निस्थापनोपयोगि आयतनमभिप्रेतम्। तच्च वेदिः स्थण्डिलम् खरः इति चतुर्धा भारतीये कर्मकाण्डे दृश्यते। तत्र वेदिर्नाम नियत-परिमाणतया परिगृहीतः समभूमेः एकाङ्गुलोच्चश्चतुरंगुलोच्चो वा समूह्यपुरीष्यो ( सिकतासंघटनेन मानवनिर्मितः ) कृत्रिमो भूप्रदेशः। स्थण्डिलं च मेखलारूपैकाङ्ग-समन्वितः कुण्डयोनिमेखलात्मकत्र्यंगसमन्वितो वा वेदिदेशः। कुण्डं तु खात-नाभि-कण्ठ-मेखला-योनिरूपपञ्चाङ्गसमन्वितमग्न्यायतनम्। खरश्च उच्चताविरहितः समेखलः अग्न्यायतनत्वेन परिगृहीतो भूभागः। तत्र कुण्डानि बहुप्रकाराणि भवन्ति। चतुरस्र-योनि वृत्तार्ध त्रिकोण-वृत्तषडस्र-पद्माष्टाग्र सप्तास्रादिरूपेण। एतेषां निर्माण-प्रकारस्तु कुण्डग्रन्थेभ्यो विज्ञेयः। नित्यहवने सामान्यहवने च ताम्रादिकुण्डमपि गृह्यते। श्रौते कर्मणि खरः धिष्ण्यम् ( वेदिः ) इति संज्ञया अग्न्यायतनानि प्रथन्ते।

**विष्णुयागः**

पौराणिकाः स्मार्ताश्च बहवो यागाः सम्प्रति प्रचलन्ति। तेषु विष्णुयागोऽति-प्रसिद्धः। स च लघुविष्णुयागः महाविष्णुयागः अतिविष्णुयागश्चेति त्रिविधः। तथा च ज्येष्ठनारदपञ्चरात्रे—

यत्र होमात्मकं यागं वैष्णवं पापनाशनम्।
तत्रैकलक्षं षष्ठ्या सहस्रपरिमितं भवेत्।
यं कृत्वा कृतकृत्याः स्युः सूर्यलोकमवाप्नुयुः।
तमेव विष्णुयागं वै प्रवदन्ति मनीषिणः।
तथा त्रिलक्षं विंशसहस्रांकविधानतः।
होमं कुर्यान्महाविष्णुमितिनाम विनिर्दिशेत्।
यं कृत्वा प्राप्नुयात्स्वर्गं भुवर्लोकं मतं मम।
तुर्यलक्षं यथाशीत्या सहस्राख्यविधानतः।
तमेवातिविष्णुयागं वै प्रवदन्ति मुनीश्वराः।
यस्तु त्रयात्मकं यागं कुर्यात् कोपीह भूतले।
ब्रह्मण्येवानुगच्छेत्स सालोक्यादिचतुष्टयम्।

कामदेवीयविष्णुयागपद्धतौ तु–यथा ग्रहयज्ञश्चतुर्विधस्तथा विष्णुयागोऽपि सहस्रा युतलक्षकोटिहोमात्मकश्चतुर्विधः। अत एव विष्णुयागो महाविष्णुयागोऽतिविष्णु-

यागश्चेति त्रितयप्रसिद्धिर्लोके। अप्रसिद्धिः सहस्रात्मकस्य अल्पत्वात् (१३ पृ०) होमात्मकोऽपि द्विविधो विष्णुसहस्रनामसहितस्तद्रहितश्चेति। इत्युक्तम्।

'नारायणाय स्वाहेति मन्त्रान्ते जुहुयाद्धविः' इत्युक्तेः प्रत्यृचमन्ते नारायणाय-स्वाहेति कृत्वा होमः। सूक्ताहुतिहोमः जलाभिषेकात्मकस्य प्रयोगश्च न प्रचलति।

**रुद्रयागः**

शतरुद्रियाध्यायेन (शु० य० सं० १६ अ०) सविध्यनुष्ठीयमानं कर्म रुद्रयागः। स च त्रिविधः जपात्मकः अभिषेकात्मकः हवनात्मकश्च। त्रिविधोप्ययं रुद्रयागः प्रत्येकं पञ्चधा। रूपं रुद्री रुद्रो (लघुरुद्रः) महारुद्रोऽतिरुद्रश्च। तदुक्तं रुद्रकल्पद्रुमे (१७७ पृ०)—

शृणुष्व मां महाप्राज्ञ ? रुद्रभेदान् वदामि ते।
रुद्राः पञ्चविधाः प्रोक्ताः देशिकैरुत्तरोत्तरम्॥
सांगस्त्वाद्यो रूपकाख्यः सशीर्षो रुद्र उच्यते।
एकादश गुणैस्तद्वद्रुद्रीसंज्ञो द्वितीयकः॥
एकादशभिरेताभिस्तृतीयो लघुरुद्रकः।
लघ्वेकादशभिः प्रोक्तो महारुद्रश्चतुर्थकः॥
पञ्चमः स्यान्महारुद्रैरेकादशभिरन्तिमः।
अतिरुद्रः समाख्यातः सर्वेभ्यो ह्युत्तमोत्तमः॥ इति।

फलं चास्यैवं स्मर्यते (रु० क० १७५) विष्णुधर्मोत्तरे—

रुद्राणां च तथा जप्यं सर्वाघविनिषूदनम्।
सर्वकामकरो होमस्तथा सर्वत्र शान्तिदः॥
अजाविकानामश्वानां कुञ्जराणां तथैव च।
मनुष्याणां नरेन्द्राणां बालानां योषितामपि॥
ग्रामाणां नगराणां च देशानामपि भार्गव।
उपद्रुतानां धर्मज्ञ व्याधितानां तथैव च॥
मरणे समनुप्राप्ते रिपुजे च तथा भये।
रुद्रहोमः परा शान्तिः पायसेन घृतेन च॥ इति।

**लक्ष्मीयागः रामयागः गणेशयागः सूर्ययागः**

भारते हि तत्तद्देवतानाम्ना तद्देवतोपासकाः यागमनुतिष्ठन्ति। तत्र तद्दैवत्यमन्त्रेभ्यः विष्णुयागवद् रुद्रयागवद्वा विधाः प्रकल्प्यन्ते। तास्तु संप्रदायविद्भ्यो ज्ञेयाः। नेहानन्त्याद् विस्मृतिभयाच्च विव्रियन्ते।

**कोटिहोमः**

स्वोपास्यदेवताप्रसादनार्थं स्वपरिगृहीतमन्त्रस्य कोटिसंख्यकाहुतिभिर्यजनं कोटिहोम इति नैपालदेशादिषु प्रचलति। भारते तु ग्रहयज्ञस्य या विभिन्ना विधाः मत्स्यपुराण बृहत्पराशरस्मृत्यादिषूक्तास्तास्वेकतमामादाय कृतः कोटिपरिमिताहुतिसाध्यो होमः कोटिहोमः।

तत्र देहलीनगरे सं० २००० वैक्रमीये अनन्तश्रीविभूषितैर्वेदवैदिकशास्त्रविद्वदुन्नयनैकव्रतैः **पूज्यपादश्रीकरपात्रापरामिध स्वामि श्रीहरिहरानन्दसरस्वतीपादैः** समनुष्ठापितः कोटिहोमो महाव्याहृतिमन्त्रहोमकरणकः समभवत्।

भागलपुरे सं० २०१८ वैक्रमीये सम्प्रायविद्भिः प्रवर्तितश्च कोटिहोमः अष्टवर्गविभक्तमन्त्रकरणको बृहत्पराशरस्मृत्युक्तोऽनितरसाधारणः समभवत्। कोटिहोमात्मकस्य ग्रहयज्ञस्य सन्ति बह्वीर्विधास्ता यथायथमाकरग्रन्थेषु सुविज्ञेयाः। तेषां चैकमुखो द्विमुखश्चतुर्मुखः पंचमुखो नवमुखो दशमुखः शतमुखश्चेति अग्न्यायतनमूलका भेदास्तत्र तत्र द्रष्टव्याः।

**चण्डीयागः**

मार्कण्डेयपुराणोक्तोऽस्ति सप्तसती इति दुर्गा इति च प्रसिद्धो देवीस्तवः। तस्य च तान्त्रिकैः तन्त्रशास्त्रनवनीततया ग्रहणं कृत्वा रुद्राध्यायमन्त्रविभागमिव विभागं कृत्वा सप्तशतं मन्त्राः उक्ताः। तेषां च मन्त्राणां प्रत्येकं कामनासु यथार्हं विनियोगस्तन्त्रविद्भिरुच्यते। समस्तस्यास्य देवीस्तवस्य शतचण्डी, सहस्रावर्तनेन सहस्रचण्डी, अयुतावर्तनेन अयुतचण्डी, लक्षावर्तनेन लक्षचण्डी, कोट्यावर्तनेन च कोटिचण्डी भवतीति तन्त्रशास्त्रे वचनानि सन्ति। एतेषां च शतचण्ड्यादीनां विशेषो विधिः रुद्रयामलादिग्रन्थेषूक्तः फलचमत्कृत्या पौराणिकस्तवगर्भतया च शान्तिसार-शान्तिकमलाकर - निर्णयसिन्धु-धर्मसिन्धुप्रभृतिधर्मशास्त्रीयनिबन्धग्रन्थेष्वपि सङ्गृहीत इति स तत एवावगन्तव्यः।

**पुराणश्रवणविधिः**

पुराणेतिहासौ प्रकृत्य (भ० पु० मध्य० १।७।६)—

शुक्लवस्त्रधरश्चैव चैलाजिनकुशोत्तरः।
प्रदक्षिणत्रयं कुर्याद्या तस्मिन्देवता गुरौ ॥ ६ ॥

नात्युच्छ्रितं नातिनीचं स्वसनं भजते ततः।
दिवस्पतिभ्यो नमस्कृत्य ॐ काराधिष्ठितानपि ॥ ७ ॥

शृण्वन्नथाधीयानो दद्याद्धस्ते च पुस्तकम्।
समुत्थाय च गृह्णीयात्प्रणम्य विनिवेदयेत् ॥ २० ॥

पूर्वस्थः श्रावको विप्रो विख्यातस्तस्य दक्षिणे।
पश्चिमाशामुखेनैव तर्जन्यङ्गुष्ठया सह॥ २१॥
प्रस्तरेणापि हस्तेन विन्यासः पण्डितैः सदा।
इतोन्यथा न कर्तव्यः कृत्वा नाश (न्यास) मवाप्नुयात्॥२२॥
असकृद्विन्यसेद्विप्राः पावमानीं जले जयेत्।
वेदाङ्गागमवेदान्तविधिरेष स्मृतो बुधैः॥ २३॥
यमदिक्संमुखे श्रोता वाचकश्चोत्तरामुखः।
पुराणे भारताख्यान एषैव कथितो विधिः॥ २४॥
वैपरीत्येन विधिना विज्ञेयो द्विजसत्तमाः।
रामायणे धर्मशास्त्रे हरिवंशे च सत्तमाः॥ २५॥
इतोऽन्यथा यातुधाना विलुम्पन्ति फलं यतः।
तस्माद्विधिविधानेन शृणुयादथवा पठेत्॥ २६॥
आदिमध्यावसाने च मन्त्रे च प्रणवं दिशेत्।
बलिभिर्गन्धपुष्पैश्च पुस्तकं देवनिर्मितम्॥ ५३॥
प्रणम्य शिरसा सर्वान् व्यासादीन् संहिताश्रुतान्॥ १०९॥
जैमिनिं च ततो व्यासं शङ्करं च तथा हरिम्।
नमस्कारमथैषां तु आदिमध्यावसानके॥ ११०॥
ततः प्रवाचयेद्विप्रो धर्मशास्त्रार्थकोविदः।
अलक्षितमनास्तद्वद्रूपं स्पष्टमुच्चरन्॥ १११॥
असंयुक्ताक्षरपदं स्पष्टभागसमन्वितम्।
अमेध्यानां च पत्रं च लिप्यक्षरविभूषितम्।
पूतं स्यात्तत्क्षणाद्विप्राश्चतुःपञ्चाक्षरेण वा।
नारसिंहस्य विन्यासे पूतो भवति तत्क्षणात्॥ १८।३४॥

(अथ म० पु० ब्रा० २१६ अ० १८६ पृ०)

शुक्लवासा गृहादेत्य स्थानं यत्समयान्वितम्।
प्रदक्षिणं ततो गत्वा यस्तस्मिन्दिन एव हि॥
देवार्चामग्रतः कृत्वा ब्राह्मणार्चा विशेषतः।
उपविश्य ततः पश्चाच्छ्रावकः शृणुयान्नृप॥ ५१॥
... ... ... ... ... ... ... ... पुस्तकमाददेत्॥ ५२॥

प्रणम्य शिरसा तस्य पुस्तकस्य विशांपते।
ग्रन्थिं च शिथिलां कुर्याद्वाचकः कुरुनन्दनाः।
पुनर्बन्धीत तत्सूत्रं तान्मुक्त्वा वाचयेत्कथाम्॥ ५३॥

निरूप्य पत्रं (वाहनं पुस्तकाधारपीठं पन्नां वा) राजेन्द्रकराभ्यां गृह्य वाचकः।

प्रणम्य शिरसा सर्वान्ब्रह्मादीन् व्यासमेव च।
वाल्मीकिं च तथा राजन् विधिं विष्णुं शिवं रविम् ॥ ६० ॥
नमस्कारमथैषां तु पठित्वा कुरुनन्दन।
ततोऽसौ व्याहरेद्विप्रो वाचकः श्रद्धयान्वितः ॥ ६१ ॥
अविलम्बितमस्तब्धमद्भुतं वीरमूर्जितम्।
असंसक्ताक्षरपदं रसभावसमन्वितम् ॥ ६२ ॥
सप्तस्वरसमायुक्तं काले काले विशांपते।

**नियमाः**

श्रुत्वा प्रतिपुण्यविद्यां यो श्नीयान्मांसमेव तु।
स याति गार्दभीं योनिं योनिं मैथुनिनः क्वचित् ॥
यद्भारतं यत्पुराणं स्तोत्ररूपाणि तानि च।
तानि वेदागमादीनि पुस्तकेष्वपि वाचयेत् ॥ ४८ ॥

"पारणानि दशाहेषु एके कुर्वन्ति तानि भो." पारणानि पारायणानि (भ० पु० ब्राह्म० २१६।४५) (१८६)।

**फलम्**

इतिहासपुराणाभ्यां पुण्यं पुस्तकवाचनम्।
अश्वमेधसहस्रं यो नित्यं कर्तुं प्रवर्तते ॥
न तत्फलमवाप्नोति यदाप्नोत्यस्य कर्मणः ॥ ७४ ॥
तस्मात्सर्वं प्रयत्नेन कार्यं पुस्तकवाचनम्।
(भ० पु० ब्राह्मपर्व ६३।७४-७५।८८)

इतिहासपुराणौ प्रकृत्य—

सायं प्रातस्तथा रात्रौ शुचिर्भूत्वा शृणोति यः।
तस्य विष्णुस्तथा ब्रह्मा तुष्यते शङ्करस्तथा ॥
प्रत्यूषे भगवान् ब्रह्मा दिनान्ते तुष्यते हरिः।
महादेवस्तथा रात्रौ शृण्वतो तुष्यते विभुः ॥

इति नित्यपारायणफलमवधेयम्। (भ० पु० २१६।४५ भ० पु० ब्रा० २१६)
प्रथमे पारणे—

... ... ... ... ... ... ...राजन्वाचकं पूज्य शक्तितः।
अग्निष्टोमस्य यज्ञस्य फलं विन्दति मानवः ॥ ७६ ॥

कार्तिकादीन्समारभ्य यावत्कार्तिकमद्भुता ।
अग्निष्टोमं गोसवं च ज्योतिष्टोमं तथा नृप ॥ ८० ॥
सौत्रामणिं वाजपेयं वैष्णवं च तथा विभो ।
माहेश्वरं तथा प्राप्तां पुण्डरीकं यजेत यः ॥ ८१ ॥
आदित्ययज्ञस्य तथा राजसूयाश्वमेधयोः ।
फलं प्राप्नोति राजेन्द्र मासैर्द्वादशभिः क्रमात् ।
इत्थं यज्ञफलं प्राप्यं याति लोकांस्तथोत्तमान् ॥ ८२ ॥

पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहासः (कौटिलीयार्थसूत्र० ५ अ० १४ सू० ।)

**तान्त्रिकावश्यकर्तव्यानि**

मिश्रकर्मकाण्डे तान्त्रिककर्मकाण्डे च भूतशुद्ध्यादि-बहिर्मातृकान्यासान्तानि कर्माणि अवश्यमेव प्रत्यहमनुष्ठेयानि। तन्त्रशास्त्रविदः शास्त्रानुसारिकर्मकर्तारश्च कतिपय एव सन्तीति अत्र प्रात्यहिककर्मणां भूतशुद्ध्यादीनां परम्पराप्राप्तः प्रयोगः संगृह्यन्ते ।

**भूतशुद्धिः**

ततो भूतशुद्धिं कुर्यात्तद्यथा – ऊर्ध्वकेशीति शिखां बद्ध्वा अपसर्पन्तु ते भूता इति वामपादेन भूमावाघातत्रयं कृत्वा—अपक्रामन्तु भूतानीत्युत्सार्य तीक्ष्णदंष्ट्र महाकायेति क्षेत्रपालं नत्वा पृथवीतिमन्त्रस्य मेरुपृष्ठ ऋषिः कूर्मो देवता सुतलं छन्द आसने विनियोगः ।

पृथिवी त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

ॐ आधारशक्तये नमः । ॐ कूर्मासनाय नमः । ॐ अनन्तासनाय नमः । ॐ योगासनाय मनः । ॐ विमलासनाय नमः । ॐ पद्मासनाय नमः । मध्ये ॐ परमसुखासनाय नमः । इत्यासन उपविश्य स्वशिरसि गुं गुरुभ्यो नमः । पं परमेष्ठिगुरुभ्यो नमः । गं गणपतये नमः । दुं दुर्गायै नमः । क्षं क्षेत्रपालाय नमः । पं परमात्मने नमः ।

नमो गुरुभ्यो गुरुपादुकाभ्यो नमः परेभ्यः परपादुकाभ्यः ।
आचार्यसिद्धेश्वरपादुकाभ्यो नमोस्तु लक्ष्मीपतिपादुकाभ्यः ॥
नमो महद्भ्यो नम अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।
यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमावृक्षि देवाः ॥

इति पठित्वा सर्वभूतनिवारणाय साङ्गाय सशरायास्त्रराजाय सुदर्शनाय हुँफडित्यङ्गुलिभ्यां दिग्बन्धं कृत्वा—

धर्मकन्दसमुद्भूतं ज्ञाननालसुशोभितम् ।
ऐश्वर्याष्टदलोपेतं परवैराग्यकर्णिकम् ॥
अधोमुखं तु हृत्पद्मं प्रणवेनोर्ध्वमुन्नयेत् ।

प्रणवेन विकसितं कृत्वा तत्रत्यं जीवात्मानं हंसमन्त्रेणाङ्कुशमुद्रया सुषुम्नानाडीमार्गेण ब्रह्मरन्ध्रं नीत्वा तत्रत्यसहस्रदलपद्मकर्णिकान्तर्गतेन परमात्मना सहैक्यभावमापादयेत् ।

ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ॥
तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥
अधोमुखं कृष्णवर्णमङ्गुष्ठपरिमाणकम् ।
खड्गचर्मधरं पापं वामकुक्षौ विचिन्तयेत् ॥

इति वामकुक्षौ पापपुरुषं विचिन्त्य यमिति षोडशवारं वायुबीजेन वामनासारन्ध्रेण वायुमावर्तयन्संशोष्य रमित्यग्निबीजेन कुम्भकेन चतुष्षष्टिवारं संदह्य पुनर्यमिति वायुबीजेन दक्षिणनासापुटेन द्वात्रिंशद्वारं बहिर्निःसार्य वमित्यमृतबीजेन षोडशवारमाप्लाव्य भूतशुद्धिं कुर्यात् । पादादिजानुपर्यन्तं पृथिवीस्थानं तत्र पार्थिवमण्डलं चतुरस्रं चतुर्दिक्षु वज्रलाञ्छितं पीतवर्णं तन्मध्ये लंबीजयुक्तं ध्यायेत् । स्योना पृथिवीति मेधातिथिर्भूमिर्गायत्री भूमिमण्डलशुद्ध्यर्थं जपे विनियोगः । ॐ स्योना पृथिवि० लं भूम्यै नमः जान्वादि नाभिपर्यन्तमपां स्थानं तत्र वारुणं मण्डलं धनुराकारमुभयोः कोट्योः श्वेतपद्मलाञ्छितं तन्मध्ये शुभ्रवर्णं बंबीजयुक्तं ध्यायेत् । अप्सु मे इति मेधातिथिरापोऽनुष्टुबापमण्डलशुद्ध्यर्थं जपे विनियोगः । ॐ अप्सु मे सोमो अब्रवी० बंमद्भ्यः नमः । नाभ्यादि हृदयपर्यन्तमग्निस्थानं तत्र त्रिकोणं वह्निमण्डलं कोणेषु स्वस्तिकलाञ्छितं तन्मध्ये रक्तवर्णं रंबीजयुक्तं ध्यायेत् । अग्निं दूतं क.ण्डो मेधातिथिरग्निर्गायत्री वह्निमण्डलशुद्ध्यर्थं जपे विनियोगः । ॐ अग्निं दूतं० रमग्नये नमः । हृदयादि भ्रूमध्यपर्यन्तं वायुस्थानं तत्र षट्कोणं वायुमण्डलं षड्बिन्दुवज्रलाञ्छितं तन्मध्ये धूम्रवर्णं यंबीजयुक्तं ध्यायेत् । वायो शतं वामदेवो वायुरनुष्टुप् वायुमण्डलशुद्ध्यर्थं जपे विनियोगः । ॐ वायो शतं० यंवायवे नमः । भ्रूमध्यादि ब्रह्मरन्ध्रपर्यन्तमाकाशस्थानं तत्र वृत्ताकारमाकाशमण्डलं ध्वजाङ्कितं तन्मध्ये नीलवर्णं हंबीजयुक्तं ध्यायेत् । आदित्प्रत्नस्य वत्सोऽन्तरिक्षं गायत्र्याकाश-

मण्डलशुद्ध्यर्थं जपे विनियोगः। ॐ आदित्प्रत्नस्य० हमाकाशाय नमः। पृथिवीं पञ्चगुणां लंबीजेन षड्धुद्धातप्रयोगेणाप्सु प्रविलापयामि। लं ६।

तत्रोद्घातलक्षणम्—

भूतबीजं व्योमसंस्थं प्लुतप्रणवसंयुतम्।
दीर्घोच्चवारसमायुक्तमुपोद्घात उदाहृतः॥
प्रणवाभ्यां सन्निरुध्य मन्त्रबीजं तु मन्त्रवित्।
जपेच्च द्वादशकृत्व उपोद्घातो भवेत्तदा॥ इति॥

चतुर्गुणा अपो बंबीजेन पञ्चोद्धातप्रयोगेणाग्नौ प्रविलापयामि बं ५। त्रिगुणं वह्निं रंबीजेन चतुरुद्घातप्रयोगेण वायो प्रविलापयामि। रं ४। द्विगुणं वायुं यंबीजेन त्रिरुद्घातप्रयोगेणाकाशे प्रविलापयामि। यं ३। एकगुणमाकाशं हंबीजेन द्विरुद्घातप्रयोगेणाहंकारे प्रविलापयामि। हं २। तमहंकारं महत्तत्त्वे प्रविलापयामि। तन्महत्तत्त्वं प्रकृतौ प्रविलापयामि। तां प्रकृतिं परब्रह्मणि प्रविलापयामिति प्रविलाप्य शुद्धोऽहं मुक्तोऽहं सच्चिदानन्दस्वरूपोऽहं ब्रह्माहमस्मीति चिरं भावयेत्। ततः सिसृक्षया सृष्टिमारभेत। तस्मात्सर्वज्ञात्सर्वशक्तेः परब्रह्मणः सकाशात्प्रकृतिः। प्रकृतेर्महान्। महतोऽहंकारः। अहंकारादाकाशः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधिभ्योऽन्नम्। रेतसः पुरुषः। स वैष पुरुषोऽन्नरसमयः। इति क्रमेण शरीरोत्पत्तिं विभाव्य पुनर्जीवात्मानं हंसमन्त्रेणाङ्कुशमुद्रया सुषुम्नानाडीमार्गेणानीय हृदि प्रतिष्ठापयेत् ॥ अ० पु० ३३।२९॥

**प्राणप्रतिष्ठा**

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्माविष्णुमहेश्वराः ऋषय ऋग्यजुःसामाथर्वाणि छन्दांसि चैतन्यरूपापरा प्राणशक्तिर्देवता आं बीजं ह्रींशक्तिः क्रोंकीलकं प्राणप्रतिष्ठापने विनियोगः। ॐ आंह्रींक्रोंअंकंखंगंघंङंआंक्रोंह्रींआम्। आकाशवायुतेजोजलपृथिव्यात्मनेऽङ्गुष्ठाभ्यां नमः। ॐ आंह्रींक्रोंईचंछंजंझंञंईक्रोंह्रींआं शब्दस्पर्शरूपरसगन्धात्मने तर्जनीभ्यां नमः। ॐ आंह्रींक्रोउटठंडंढंणंऊँक्रोह्रीं आं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने मध्यमाभ्यां नमः। ॐ आंह्रींक्रोंएतंथंदंधंनऐंक्रोह्रींआं वाक्पाणिपादपायूपस्थात्मनेऽनामिकाभ्यां नमः। ॐ आंह्रींक्रोंओंपंफंबंभंमंऔंक्रीं ह्रींआं वचनादानगतिविसर्गानन्दात्मने कनिष्ठाभ्यां नमः। ॐ आंह्रींक्रोअंयंरंलंवंशंषंसंहंक्षंअः क्रोह्रींआं मनोबुद्ध्याहंकारचित्तविज्ञानात्मने करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि। ॐ आंह्रींक्रोंअंयंयंरंलंवंशंषंसंहंक्षंअःक्रोह्रींआं मम प्राणा इह प्राणाः। ॐ आंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षंअः क्रोंहरींआं मम सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थप्राणापानव्यानोदानसमानाः सुखमिहागत्य चिरं तिष्ठन्तु

स्वाहा। ॐ असुनीते पुनः ऋक्। ततो गर्भाधानादिपञ्चदशसंस्कारसिद्ध्यर्थं पञ्चदशवारं प्रणवावृत्ति करिष्यते। ॐ १५। ततः

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्च बाणान्।
बिभ्राणा सृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः॥ १॥

इति प्राणप्रतिष्ठा।

**अथान्तर्मातृकान्यासः**

अन्तर्मातृकामन्त्रस्य ब्राह्म ऋषिर्मातृकासरस्वती देवता हलो बीजानि स्वराः शक्तयो बिन्दवः कीलकान्यन्तर्मातृकान्यासे विनियोगः। ॐ अंकंखंगंघंङआमङ्गुष्ठाभ्यां नमः। ॐ इंचंछंजंझंजं ईं तर्जनीभ्यां नमः। ॐउंटंठंडंढंण ॐमध्यमाभ्यां नमः। ॐ एंतंथंदंधंनं ऐंअनामिकाभ्यां नमः। ॐ ओंपंफंबंभंमंओं कनिष्ठकाभ्यां नमः। ॐ अंयंरंलंवंशंषंहंक्षंअः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि। ॐ अंनमः। आंनमः। इंनमः। ईंनमः। उंनमः ऊंनमः। एंनमः। ऐंनमः। ओंनमः। औंनमः। अंनमः। अःनमः। ॐकारः सर्वत्र। एतान्षोडश स्वरान्कण्ठस्थानगते षोडशदले विन्यसामि। ॐकंखंगंघंङंचंजंझंजंटंठं नम एतान्द्वादशवर्णान्द्वादशदले हृदयस्थाने विन्यसामि। ॐडंढंणंतंथंदंधंनंपंफनंम एतान्दश वर्णान्नाभिस्थले दहादले विन्यसामि। ॐबंभंमंयंरंलनम एतान्षड्वर्णान् लिङ्गस्थाने षड्दले विन्यसामि। ॐवंशंषंसंनम एतान् चतुर्वर्णानाधारस्थाने चतुर्दले विन्यसामि। ॐहंक्षंनम एतद्वर्णद्वयं भ्रूमध्ये द्विदले विन्यसामि।

अथ ध्यानम्—

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे।
द्वे पत्रे षोडशारे द्विदलदशदले द्वादशार्धे चतुष्के॥
वासान्ते बालमध्ये डफकठसहिते आदियुक्ते स्वराणां।
हंक्षं तत्त्वार्थयुक्तं सकलतनुगतं वर्णरूपं नमामि॥ १॥

**अथ बहिर्मातृकाः**

अन्तर्मातृकावत्पूर्वोक्तषडङ्गन्यासं कृत्वा विशेषन्यासं कुर्यात्। ॐ अंनमः शिरसि। आंनमो ललाटे। इंनमो दक्षिणनेत्रे। ईंनमो वामनेत्रे। उंनमो दक्षिणकर्णे। ऊंनमो वामकर्णे। ऋंनमो दक्षिणनासापुटे। ॠंनमो वामनासापुटे। लृंनमो दक्षिणगण्डे। ॡंनमो वामगण्डे। एंनम ऊर्ध्वोष्ठे। ऐंनमो धरोष्ठे। औंनम ऊर्ध्वदन्तपङ्क्तौ। अंनमो मूर्ध्नि। अः नम आस्ये। कंनमो दक्षिणबाहुमूले। खंनमो दक्षिणकूर्परे। गंनमो दक्षिणमणिबन्धे। घंनमो दक्षिणहस्ताङ्गुलिमुलेषु। ङंनमो दक्षिण

हस्ताङ्गुल्यग्रेषु। चंनमो वामबाहुमूले। छंनमो वामकूर्परे। जंनमो वाममणिबन्धे। झंनमो वामहस्ताङ्गुलिमूलेषु। जंनमो वामहस्ताङ्गुल्यग्रेषु। टंनमो दक्षिणपादमूले। ठंनमो दक्षिणजानौ। डंनमो दक्षिणगुल्फे। ढंनमो दक्षिणपादाङ्गुलिमूलेषु। णंनमो दक्षिणपादाङ्गुल्यग्रेषु। तंनमो वामपादमूले। थंनमो वामजानौ। दंनमो वामगुल्फे। धंनमो वामपादाङ्गुलिमूलेषु। नंनमो वामपादाङ्गुल्यग्रेषु। पंनमो दक्षिणपार्श्वे। वंनमः पृष्ठे। फंनमो नाभौ। भंनमो जठरे। यं त्वगात्मने हृदयाय नमः। रं असृगात्मने दोर्मूलाय नमः। लं मांसात्मने ककुदे नमः। वं भेदआत्मने कक्षाभ्यां नमः। शं अस्थ्यात्मने हृदयादिहस्तयुगलाय नमः। पं मज्जात्मने हृदयादिपादयुगलाय नमः। संनमः शुक्रात्मने जठरे। हंनमः प्राणात्मने मुखे। क्षंनमो जीवात्मने सर्वशरीरेषु विन्यसामि।

पञ्चाशद्वर्णभेदैर्विहितवदनदोः पादहृत्कुक्षिवक्षो-
देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम्॥
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्था।
कच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि॥ १॥

इति ध्यात्वा मानसोपचारैः संपूज्याकारादिक्षकारान्ता मातृका अनुलोमतो जपित्वा पश्चाद्विलोमतः पुनरनुलोमतो जपित्वा व्यापकत्वेन तत्तद्वर्णान्न्यसेत्। ते च वर्णा अनुक्रमेण अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः कंखंगंघंङंचंछंजंझंञंटंठंडंढंणंतंथंदंधंनंपंफंबंभंमंयंरंलंवंशंषंसंहंक्षमिति। ततः

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥ इति॥

॥ इति चतुर्थोऽध्यायः॥

## पञ्चमोऽध्यायः

# कर्मकाण्डोपयोगिपदार्थविवरणाध्यायः

**कालप्रकरणम्**

भारतीयकर्मकाण्डे कालस्यास्ति विशिष्टं महत्त्वम् । अत एव—"वरमेकाहुतिः काले नाकाले कोटयो हुताः ॥" इत्यभियुक्तानामुक्तिः प्रसिद्धैव । स च कालपदार्थः दार्शनिकानां दृष्ट्या तत्तच्छास्त्रेषु विवेचितोस्ति । तदत्र वेद।रिशीलनेन तस्य स्वरूपं, प्रकाशः, विभेदाश्च कथं भवन्तीत्यत्र विविच्यते ।

तत्र वेदे ( ऋ० १०।१९० ) अधमर्षणसूक्तमस्ति, यत्र सृष्टिप्रक्रिया दृश्यते । तत्र सूक्ते संवत्सराहोरात्रादीनां सृष्टिरुच्यते । एवं पुरुषसूक्तेऽपि ( शु० य० सं० ३१।१-१६ ) सृष्टिक्रमः—वसन्तो ग्रीष्मो वर्षाः, आदीनामृतूनां स्थितिं च प्रदर्श्यंते । ततश्च वेदपरिशीलेन कालपदार्थः सृष्टिविषयसंबद्ध इति तदर्थं सृष्टिविषयो विवेचनीयः ।

विष्णोः स्वरूपात् परतो हि द्वे रूपं प्रधानं पुरुषश्च विप्र ।

तस्यैव तेऽन्येन धृते वियुक्ते रूपान्तरं तद् द्विज कालसंज्ञम् ॥ ( विष्णुपु० २।२।२४ ) इति वेदार्थपरिबृंहणपरे पुराणग्रन्थेऽपि कालपदार्थं उक्तः । एतस्य च निर्देशस्य सृष्टिप्रकरणमन्तरा बोधो न सुशक इति वेदादेव सृष्टिविषयोऽत्र प्रसङ्गतश्चिन्त्यते ।

**सृष्टि-विषयः**

सृष्टिरियमतिदुर्विज्ञेया । मानवबुद्धिगम्यैराश्चर्यकरैराकाशीयविभिन्नपिण्डरूपैः अज्ञातकालात् प्रतिदिनं नियतसमकृतोदयास्तव्यापारवद्भिः पृथक् पृथग् विभिन्नतापह्लादप्रदाव्यकिरणप्रकाशसम्पन्नैः सूर्य-चन्द्र-नक्षत्रादिविभिन्नमण्डलैर्मण्डिता, पृथिवीगतनदीनदसमुद्रवनपर्वतपरिपूरिता, मानवपशुपक्षिप्रभृतिजीवकदम्बैर्विराजिता सुसमृद्धा विचित्रेयं सृष्टिः कुतः कदा केन कथं जाता ? जातायाः अस्याः सृष्टेः प्रागत्र किमासीन्नवासीत्तदा का स्थितिरासीदस्य जगतः ? इति प्रश्नश्चिन्ता जिज्ञासा वा बहोः कालाज्जागर्ति । न खल्वल्पज्ञो मानव एव अपि तु सर्वज्ञानमयो वेदोऽपि प्रश्नमेनं समुत्थापयति दुर्विज्ञेयतां चाप्यस्य जगतः ( सृष्टेरस्याः । ) ब्रूते—

[१]को अद्धा वेद क इह प्र वोचत्कुत
आ जाता कुत इयं विसृष्टिः । ( ऋ० १०।१२९।६ )

यदि कश्चित् कथयेत् यद् देवा जानीयुर्यतो हि ते सर्वज्ञाः सर्वं ज्ञातुं समर्थाः ज्ञात्वा वक्तुमपि प्रभवन्तीति तर्हि तदपि नहि, यतो हि—

[२]अर्वाग्देवा अस्य विसर्जनेनाथा—
को वेद यत आबभूव ॥ ऋ० १०।१२९।६ ॥

यद्यपि सृष्टेरेवंविधा दुर्विज्ञेयता सत्यमेवास्ते किन्तु वेदस्य कृते सा दुर्विज्ञेयता नास्ति । ( ऋ० १०।१२९।१ ) वेदो हि ब्रूते यत् सृष्टेः ( जगतः ) पूर्वम्—

नासदासीन्नो सदासीत्तदानीं—
नासीद्रजो नो व्योमा परो यत् ।

अनेन पूर्वार्धेन चतुर्दशभुवनगर्भं ब्रह्माण्डं स्वरूपेण निषिद्धं भवति । अर्थात् ( तदानीम् ) निरस्तसमस्तप्रपञ्चा या प्रलयदशा तस्यां प्रलयदशायामवस्थितं यदस्य जगतः सृष्टेर्मूलकारणं तत् ( असत् ) शशविषाणवन्निरुपाख्यम् ( न आसीत् ) न बभूव, नहि तादृशात् कारणादस्य सतो जगतः, उत्पत्तिः सम्भवति । तथा (नो सत्) नैव सदात्मवत् सत्त्वेन निर्वाच्यम् (आसीत्) अभूत् । (रजः[३]

१. अर्थात् ( कः ) पुरुषो मनुष्यो ( अद्धा ) पारमार्थ्येन ( वेदं ) जानाति ( कः ) वा ( इह ) अस्मिन् लोके ( प्रवोचत् ) प्रब्रूयात् यत् ( इयं ) दृश्यमाना ( विसृष्टिः ) विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः, जगदिदमिति यावत् ( कुतः ) कस्मात् उपादानकरणात् ( कुतः ) कस्माच्च निमित्तकारणात् ( आ जाता ) समन्तात् जाता प्रादुर्भूता । एतदुभयं सम्यक् को वेद वा विस्तरेण वक्तुं शक्नुयात् ? न कोपीत्यर्थः ।

२. अर्थात् ते ( देवाः, अस्य ) जगतः ( विसर्जनेन ) वियदादिभूतोत्पत्यनन्तरं विविधं यद् भौतिकं सर्जनं सृष्टिस्तेन ( अर्वाग् ) अर्वाचीनाः कृताः, भूतसृष्टेः पाश्चाज्जाताः सन्तीत्यर्थः । तथाविधास्ते देवाः कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः, अजानन्तो वा कथं प्रब्रूयुः । ( अथ ) एवं सति, यदा देवा अपि न जानन्ति किल तदा तद् व्यतिरिक्तः ( कः ) को नाम मनुष्यादिः ( वेद ) तज्जगत्कारणं सृष्टिकारणं जानाति ( यतः ) कारणात् कृत्स्नं जगत्, सृष्टिरियं ( आबभूव ) अजायत, इति ।

३. लोका रजांस्युच्यन्ते ( निरु० ४।१९ ) इति यास्कः । रज इत्यत्र सामान्यापेक्षकमेकवचनमिति ज्ञेयम् ।

२५

न आसीत्) व्योम्नः, अन्तरिक्षादधस्तनाः पातालादयः¹ पृथिव्यन्ता लोकाः, नाभूवन् तथा ( व्योमा ) व्योम अन्तरिक्षं तदपि ( नो ) नैवासीत् ( परः ) व्योम्नोन्तरिक्षात् उपरि देशे द्युलोकप्रभृतिसत्यलोकान्तं² ( यत् ) स्थानमस्ति तदपि नासीदित्यर्थः :

---

१-२. श्रीमद्भागवते २ स्कन्धे ५ अध्याये श्लोकाः ( ३८-४२ ) द्रष्टव्या—

भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ।
हृदा स्वर्लोक उरसा महर्लोको महात्मनः ॥ ३८ ॥
ग्रीवायां जनलोकश्च तपोलोकः स्तनद्वयात् ।
मूर्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः ॥ ३९ ॥
तत्कट्यां चातलं क्लृप्तमूरुभ्यां वितलं विभोः ।
जानुभ्यां सुतलं शुद्धं जङ्घाभ्यां तु तलातलम् ॥ ४० ॥
महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम् ।
पातालं पादतलत इति लोकमयः पुमान् ॥ ४१ ॥
भूर्लोकः कल्पितः पदभ्यां भुवर्लोकोऽस्य नाभितः ।
स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना ॥ ४२ ॥

देवीभागवते ( ८ स्कन्ध १८ अध्याये १४-१८) श्लोके अधस्तना लोका—निर्दिष्टा वर्तन्ते यथा—

अधस्तादवनेः सप्त देवर्षे विवराः स्मृताः ।
एकैकशो योजनानामायामोच्छ्रायतः पुनः ।
अयुतान्तरविख्याताः सर्वर्तुसुखदायकाः ।
अतलं प्रथमं प्रोक्तं द्वितीयं वितलं तथा ॥
तृतीयं सुतलं प्रोक्तं चतुर्थं वै तलातलम् ।
महातलं पञ्चमं च षष्ठं प्रोक्तं रसातलम् ॥
कामभोगैश्वर्यसुखसमृद्धभुवनेषु च ।
नित्योद्यानविहारेषु सुखास्वादः प्रवर्तते ॥ १८ ॥

विष्णुपुराणे २ अंशे ५ अध्याये २ श्लोके सुतलस्थाने वितलं तलातलस्थाने गभस्तिमत् रसातलस्थाने सुतलं च नाम निर्दिष्टमस्ति—'अतलं वितलं चैव तितलं च गभस्तिमत् । महाख्यं सुतलं चान्यं पातालं चापि सप्तमम्' इति ।

अत्र तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि[1] तेषामपि अवस्थानप्रदेशं तदावरणनिमित्तं चाक्षेपमुखेन क्रमेण निषेधति—

किमावरीवः[2] कुह कस्य शर्मन्—

अम्भः किमासीद् गहनं गभीरम् ॥ इति ऋ० १०।१२९।१ इत्युत्तरार्धेन

ननूक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् स संहर्त्ता मृत्युर्नाम तु तदानीं—प्रलयदशायां स्यादेव इत्यतः पुनराह—( ऋ० १०।१२९।२ पूर्वार्धेन )

न मृत्युरासीदमृतं न तर्हि
न रात्र्या अह्न आसीत्प्रकेतः ॥ इति ।

अस्यार्थः—(न मृत्युः, आसीत्) तदानीं प्रलयदशायां मृत्युरपि नासीत् । ननु यदि मृत्युर्नासीत् तदा तदभावकृतम् अमृतं नाम प्राणिनामवस्थानं तु तदानीं स्यादेव तत्राह ( अमृतं न तर्हि ) अमृतम् अमरणं प्राणिनामवस्थानं तदानीं प्रलयसमये नासीत् । ननु, एतस्य सर्वस्य अधिकरणभूतेन कालेन तु भाव्यमेव ? इत्यत आह-

१. पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहदव्यक्तात्मकानि आवरणानि इति हेमाद्रिकृत महासंकल्पवाक्ये—
अत्र कुह शब्दो वैदिकः एवं सिध्यति—
सप्तम्यास्त्रल् ५।३।१० सि० कौ० पृ० ३६७ प्रकरणे पठितेन 'वाह च च्छन्दसि' ५।३।१३ इति किं शब्दात् सप्तम्यर्थे ह—प्रत्ययः 'कु तिहोः ६।२।१०४' इति पाणिनिसूत्रेण प्रकृतेः कु इत्यादेशः । अत्र काशिकावृत्तिः—तकारादौ हकारादौ च विभक्तौ परतः किमेतस्य कु इत्ययमादेशो भवति । कुतः, कुत्र, कुह । इत्येकार्थाः शब्दाः ।

२. अर्थात् ( किम् ) आवरणीयं तत्त्वमावरकभूतजातम् । ( आवरीवः ) अत्यन्तमावृणुयात् आवार्याभावात् तदावरकमपि नासीदित्यर्थः । ( किम् ) तत्त्वमावरकमावृणुयात् आव्रियमाणवत्तदपि स्वरूपेण नासीदित्यर्थः । आवृण्वन्तत्तत्त्वं ( कुह ) कुत्र देशे अवस्थाय आवृणोति, आधारभूतस्तादृशो देशोऽपि नासीदित्यर्थः । ( कस्य ) वा भोक्तुर्जीवस्य ( शर्मन् ) शर्मणि सुखदुःखसाक्षात्कारलक्षणे भोगे निमित्तभूते सति तदावरकतत्त्वमावृणुयात् । जीवानामुपभोगार्था हि सृष्टिः, तस्यां हि सत्यां ब्रह्माण्डस्य भूतैरावरणम्, प्रलयदशायां च भोक्तारो जीवा उपाधिविलयात् प्रलीना इति कस्य कश्चिदपि भोक्ता न सम्भवतीत्यावरणस्य निमित्ताभावादपि तन्न घटत इत्यर्थः । एतेन भोग्यप्रपञ्चवत् भोक्तृप्रपञ्चोऽपि तदानीं नासीदित्युक्तं भवति ।

यद्यपि सावरणस्य ब्रह्माण्डस्य निषेधेन तदन्तर्गतमप्सत्त्वमपि निराकृतमेव तथापि "आपो वा इदमग्रे सलिलमासीत् (तै० सं० ७।१।५।१") इति श्रुत्या कश्चिदपां सद्भावमाशङ्केत, अतस्तत् प्रत्याचष्टे ( गहनम् ) दुष्प्रवेशं ( गभीरम् ) दुरवस्थानम् अत्यगाधम् ईदृशम् ( अम्भः किम् आसीत् ) अप्सत्त्वजलसत्त्वमपि नासीदित्यर्थः ।

( रात्र्याः, अह्नः ) रात्र्याः, दिवसस्य च ( प्रकेतः ) प्रज्ञानं ( न आसीत् ) नाभूत् रात्रिदिनहेतुभूतयोः सूर्याचन्द्रमसोरभावात्। अतो यदा अहोरात्रस्थितिरेव नासीत् तदा तदात्मकेन मासर्त्तुसंवत्सरप्रभृतिकेन सर्वाधिकरणभूतेन कालेन कथं भाव्यम् ? कालोऽपि[1] तदानीं नासीदिति तत्त्वम्। यद्येतत्सर्वं किमपि नासीत्तदा किमासीत् ? तत्र आह—

आनीदवातं स्वधया तदेकं—
तस्माद्धान्यन्न परः किञ्चनास ॥ इति ऋ० १०।१२९।१ उत्तरार्द्धेन ॥

अर्थात् तदानीम् ( एकम्[2] ) केवलं ( तत् ) अप्राणममनः शुद्धमित्येवं प्रकारेण सकलवेदान्तप्रसिद्धं तत् ब्रह्मतत्त्वमेव ( स्वधया ) स्वस्मिन् धीयते ध्रियते, आश्रित्य-वर्तत इति स्वधा तया स्वधया मायया अभेदरूपया हि स्वशक्त्या सह[3] ( आनीत्[4] ) प्राणिवत् प्राणनं कृतवत् श्वासप्रश्वासक्रियां कुर्वत् आसीदित्यर्थः।

केवलं मायया ( प्रकृत्यादिनाम्ना प्रसिद्धया ) सहितं तत् ब्रह्म एवासीत्। एतदेव पुराणादिकमपि सुस्पष्टयति–?

नाहो न रात्रिर्न नभो न भूमि-
र्नासीत्तमो ज्योतिरभूच्च नान्यत्।
श्रोत्रादि बुद्ध्यानुपलभ्यमेकं—
प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥ इति विष्णुपु० १।२।२३ ॥

इत्थं वेदेन विज्ञायते यत् सृष्टेः पूर्वं ब्रह्मणस्तदभिन्ना या मायादि पदवाच्याया ब्रह्मशक्तेश्च व्यतिरिक्तः कोप्यन्यः पदार्थो नासीदिति।

ननु "आनीत्" इत्यनेन प्राणनकर्त्तृजीवभावापन्नमेव ब्रह्म आसीन्न तु अप्राणममनः शुद्धं सर्वातीतं यद् ब्रह्म तदासीदिति प्रतीयत इति, अत आह ( अवातम् ) वातो वायुः प्राण इति यावत् स न भवति तादृशम् अवातं वायुं विनैव

१. कथं तर्हि नो सदासीत्तदानीम् इति कालवाची प्रत्ययः ? उपचारदिति ब्रूमः। यथेदानीन्तननिषेधस्य कालावच्छेदकस्तथा मायापि तदवच्छेदहेतुरित्यच्छेदकत्व-साम्येन अकालेऽपि कालवाची प्रत्ययः ( इति सायणभाष्ये ) ॥

२. एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु इति मेदिनी ( इति अमरकोशः ३।१।८२ पृ० ३७६ ) रामाश्रमीटीकायाम्।

३. यद्यपि असङ्गस्य ब्रह्मणस्तया स्वधया ( मायया ) सह सम्बन्धो न सम्भवति तथापि तस्मिन्नविद्यया तत्स्वरूपमिव सम्बन्धोप्यध्यस्यते। यथा शुक्तिकायां रजतस्य। एतेन सद्रूपत्वमपि तस्याः प्रत्याख्यातम् ( इति सायणाचार्यः )।

४. 'श्वस प्राणने अन च' इति अदादि परस्मैपदि सेड्धातोः, अनेर्लुङि रूपम्।

प्राणक्रियां श्वास-प्रश्वासक्रियां कुर्वत् केवलं निरुपाधिकं शुद्धं तत् ब्रह्म तदानीमासीदिति। (तस्मात्) पूर्वोक्तात् मायासहितात् ब्रह्मणः (ह) खलु (परः) सृष्टेरूर्ध्वं वर्तमानमिदं यज्जगदस्ति तत् (किञ्चन) किमपि तदतिरिक्तमन्यत्तदानीं (न आस) नाभूत्। तस्मादेव अभिन्ननिमित्तोपादानकारणभूतात् पूर्णात् ब्रह्मणः (परमेश्वरात् अन्यान्यवासुदेवाद्यनन्तानन्तनामभिर्वेदादिशास्त्रेषु प्रथितात् भगवतः) इयं पूर्णा सृष्टिर्जाता प्रादुर्भूता।

पूर्णमिदं पूर्णमदः पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

इत्यत्र निर्दिष्टमेतादृशं जगदिदं प्रकटितं प्रादुर्भूतमिति तच्चेत्थं बोध्यम्—

सृष्टेः पूर्वम्, "सत्यं ज्ञानमनन्तं ब्रह्म" इति (तै० उ० ब्रह्मानन्दवल्ली १) प्रथमानुवाकादिसर्वशास्त्रप्रसिद्धस्य तस्य ब्रह्मणः (परमेश्वरस्य भगवतः) एकांशे तस्य शक्तिः (स्वधा माया प्रकृतिर्वा) स्थितासीत्। यथा मनुष्यस्य शरीरांशे कुत्रचित् शरीरैकदेशे तिलकालको भवति तथैव तत्र ब्रह्मणि सा माया (स्वधा प्रकृतिर्माया वा) तिष्ठति स्म। ब्रह्म यमपि अविज्ञेयमनिर्वचनीयं सत्यं ज्ञानं निरीहम् (इच्छारहितम्) अस्तीत्युच्यते किन्तु यत्रांशे तस्य सा शक्तिः (माया) तिष्ठति तत्र ब्रह्म इच्छावदप्यस्ति, अतएव सभागो मायिक ब्रह्म इत्युच्यते, यथा गौरवर्णमनुष्यस्य शरीरैकभागे सत्यपि तिलकालके स गौर एव कथ्यते न तु कृष्णस्तथैव ब्रह्मण एकांशे इच्छायां सत्यामपि तद् इच्छारहितं (निरीहमेव) कथ्यत इति। सृष्ट्यारम्भे तत्रैव ब्रह्मण एकांशे (मायिकब्रह्मणि) इच्छा सम्भूता सङ्कल्पो जातः। सो कामयत बहुस्यां प्रजायेयेति (तै० उ० ६) अनुषके एतावति सङ्कल्पे जाते सति तस्मिन् मायिके ब्रह्मणि चमत्कृतिरुत्थिता (ब्रह्मणो मायिकमंशं विहाय शेषेष्वंशेषु नेच्छा भवति न च चमत्कृतिर्धावति, मायिकब्रह्मण्येव त उभे भवतः) अस्मिन् ब्रह्मणो मायिकांशेऽपि विभागद्वयं वर्तते, आद्यो भागो रक्तवर्णोऽर्धश्च कालः (कृष्ण इति) रक्तवर्णे केवला शुद्धा माया किन्तु काले (कृष्णवर्णे) भागे अविद्याप्यस्ति।

रक्तकृष्णविभागोऽयं काल्पनिक एव वस्तुतो मायिकस्य ब्रह्मणोऽर्धे भागे शुद्धा माया अर्धे च माया अविद्याश्चापि सन्ति। अतः यस्मिन् भागे शुद्धा मायासीत् तत्र या चमत्कृतिर्जाता तया चमत्कृत्या तत्र भागे ईश्वरस्य तथा यत्रांशे माया अविद्याश्चासन् तत्र चमत्कृतेर्धावनेन जीवानां च प्रादुर्भावो भूतः।

मायिकस्य ब्रह्मणोऽर्धेभागे शुद्धा मायासीत्। सा चैकासीत्। तस्माद् एकस्य ईश्वरस्य प्रादुर्भावो भूतः किन्तु अपरार्धे, एकस्यां मायायां सत्यामपि तत्र अविद्या

अनन्ता आसन्। अतस्तासु अनन्तासु अविद्यासु तस्या चमत्कृतेर्विस्तारेण अनन्तानां जीवानां[1] प्रादुर्भावो भूतः। इयमस्ति चैतन्यसृष्टिः। एवं रीत्या चैतन्यायाः सृष्टेः प्रादुर्भावो जातोऽस्मिन्नेव ब्रह्मणो मायिके भागे, ईश्वरस्य सङ्कल्पेन, ईश्वरे स्थूलता जाता ततश्च आकाशः सम्भूतः, तत्र (आकाशे) सञ्चलनशक्तिः समुत्पन्ना तस्या सङ्घर्षेण आकाशपरमाणवः किञ्चित् गम्भीराः सञ्जातास्ततश्च वायुः सम्भूतः, वायुतश्च अग्निरग्नितश्चापः (जलम्) जलतश्च पृथ्वी सम्भूता। यथा चाह श्रुतिः—

तस्माद् वा एतस्मादात्मनः, आकाशःसम्भूतः। आकाशाद् वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। (तैत्ति० उ० ब्रह्मानन्दवल्ली १ अनु०)

इयं खलु जड-सृष्टिः। मूलभूतायाः पूर्वोक्तायाः, चैतन्यसृष्टेः अस्या जड-सृष्टेश्चैव प्रपञ्चभूतमिदं सकलं ब्रह्माण्डं दृश्यादृश्यचराचरं सकलं जगत् यत् विस्तरः सर्वत्र पुराणादिषु वर्णितमस्ति।

एवं हि तद् ब्रह्म (परमेश्वरः) एव जगदात्मना प्रादुरभूत् किन्तु समस्तैरंशैर्न केवलेनैकेनैवांशेन प्रादुर्भावोऽयं तस्य सामर्थ्यविशेषरूपेणैव (विभूतिरूपेणैव) न तु वास्तविकरूपेण। यथाह भगवान् वेदः—

एतावानस्य महिमातो ज्यायांश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि॥

अर्थात् (एतावान्) अतीतानागतवर्तमानकालसम्बद्धदृश्यादृश्यं यावज्जगदस्ति तावत्सर्वमपि (अस्य) ब्रह्मणः (महिमा) सामर्थ्यविशेषः विभूतिरेवास्ति, न तु वास्तवस्वरूपम् (पुरुषः)। वास्तविकपुरुषस्तु (अतः) अस्मात् महिम्नो जगज्जालात् (ज्यायान्) अतिशयेन, अधिकोऽस्ति। एतदुभयं स्पष्टीक्रियते। (अस्य) पुरुषस्य ब्रह्मणः (विश्वा) सर्वाणि भूतानि (पादः) चतुर्थांशः (अस्य)

---

१. अस्ति आत्मा जीवाख्यः शरीरेन्द्रियपञ्चाध्यक्षः कर्मफलसाक्षी (शा० भा० वेदान्तसारमूपृ० ३) (प्रतिशरीरं भिन्न इति शेषः) ब्रह्म एव माया सम्पर्कात् जीवरूपेण विद्यमानं भवतीति बोध्यम्। ब्रह्मणः जीवेन सह स्वभावगता एकतास्ति। अतः ब्रह्मसमानमेव तस्यापि (जीवस्यापि) चैतन्यस्वरूपं निर्बाधमस्ति। शरीरे स्थितस्य अस्य चैतन्यस्य अनुभवः सामान्यः सीमितश्चास्ति। स सर्वं ज्ञातुं सर्वथैव असमर्थो भवति (तुलना वेदा)।

२. सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्॥ २॥ माण्डूक्योपनिषद्।

पुरुषस्य अवशिष्टम् ( त्रिपात् ) स्वरूपम् ( अमृतम् ) विनाशरहितं यत्तत् ( दिवि ) द्योतनात्मके स्वप्रकाशे स्वरूपेऽवतिष्ठत इति ।

यद्यपि सत्यं ज्ञानमनन्तं ब्रह्म इत्याम्नातस्य परब्रह्मण इयत्ताया अभावात् पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मरूपापेक्षयाल्पमिति विवक्षितत्वात्पादत्वोपन्यासः ।

अथ च—त्रिपादूर्ध्व उदैत्पुरुषः पादोस्येहाभवत्पुनः । (त्रिपात्) योऽयं त्रिपात् पुरुषः संसारस्पर्शरहितब्रह्मरूपः[1] अयम् ( ऊर्ध्वः ) अस्मात् अज्ञानकार्यात् संसारात् बहिर्भूतः अत्रत्यैर्गुणैरस्पृष्टः ( उदैत् ) उत्कर्षेण स्थितवान् । तस्य (अस्य पादः) लेशो जगद्रूपः ( इह ) मायायां ( पुनः अभवत् ) सृष्टिसंहाराभ्यां पुनः पुनरागच्छति सर्वस्य जगतः परमात्मलेशत्वं भगवता कृष्णेनापि गीतायामुक्तम्—

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ गी० १४।४२ ॥

उक्तरूपं सर्वकारणकारणभूतं तदेवं ब्रह्म ( यत् नासदीय—( ऋ० १०।१२६।१ ) सूक्ते विष्णुपुराणे ( २।२।२३। पृ० ५१ ) प्राधानिकं ब्रह्म पुमान् इति शब्देन चोक्तमस्ति तदेव ) विष्णुर्वासुदेवादिनानानामभिः पुराणादिशास्त्रेषु च शब्दितमस्ति । तस्मात् उपाधिरहिताद् ब्रह्मणः स्वरूपात् परतः एकोऽहं बहुस्यां प्रजायेयेति ।

---

१. अत्रारूपस्यापि ब्रह्मणो यथा एकपादस्वरूपं त्रिपात्स्वरूपस्थितिस्वरूपद्वयमुक्तं तथैवान्यत्रान्यत्र ब्रह्मणो रूपद्वयं कथितमस्ति । यथा शतपथब्राह्मणे—

देवा व ब्रह्मणो रूपे । मूर्तञ्चैवामूर्तञ्च मर्त्यञ्चामृतञ्च ।
स्थितञ्च यच्च सच्च त्यच्च ॥ शतपथभाग ५ कां १४
अध्या० ५ बृहदारण्याध्याय २ ब्राह्म० ३ । कण्डिका १ पृ० ७१ ॥

अत्र सायणभाष्यम्

—तस्य ब्रह्मणो मायामये ( द्वे वाव ) द्वे एव ( रूपे ) रूप्यते अरूपं परब्रह्म याभ्याम् अविद्याध्यारोपवादाभ्यां ते रूपे । के ते इत्यत आह - मूर्तञ्चैवामूर्तञ्चेति । मूर्तामूर्तयोः प्रत्येकमर्थप्रतिपादकानि विशेषणान्याह—( मर्त्यं च ) मरणधर्मि ( अमृतञ्च ) तद्विपरीतम् ( स्थितञ्च ) स्थास्नु परिच्छिन्नमिति यावत् ( यच्च ) एति व्याप्नोतीति यत् अपरिच्छिन्नं स्थिता विपरीतम् ( सच्च ) प्रत्यक्षेणोपलभ्यमानासाधारणधर्मवत् ( त्यच्च ) त्यत् तद्विपरीतम् । "त्यत्" इत्येव सर्वदा परोक्षाभिधानार्हम् ।

इतीच्छायां सृष्टिकाले मायिकब्रह्मण्येव यत् मायिकम् रूपद्वयं[1] सम्पन्नं ( एकं विशुद्धमाया युक्तमपरञ्च मायायां अविद्याभिश्च युक्तम् ) तदेव विष्णुपुराणोक्तं-विष्णोः स्वरूपात् परतः प्रधानं ( प्रकृतिः ) पुरुषश्चेति नाम्ना रूपद्वयमस्तीत्यवधेयम् ।

यतः प्रधानपुरुषैः यतश्चैतच्चराचरम् ।
कारणं सकलस्यास्या स नो विष्णुः प्रसीदतु ॥
( विष्णुपु० १।१७।३ पृ० १०० )

इदं रूपद्वयं तेन परमेण रूपेण ( नासदीयसूक्तेन ब्रह्मणा विष्णुपुराणोक्तविष्णुना ) सृष्टिकाले प्रलयकाले च संयुक्तं वियुक्तं च क्रियते ।

संयोग-वियोग-रूपान्तरस्यैव 'काल' इति संज्ञास्ति । तथा च विष्णुपुराणे—

विष्णोः स्वरूपात्परतो हि ते द्वे
रूपे प्रधानं पुरुषश्च विप्र ।
तस्यैव तेऽन्येन धृते वियुक्ते
रूपान्तरं तद् द्विज कालसंज्ञम् ॥ ( विष्णुपु० २।२।२४ )

अयं कालरूपो भगवानपि अनादिरनन्तश्चास्ति ।

अनादिर्भगवान् कालोऽनन्तोऽस्य द्विज विद्यते ॥ (विष्णुपु० २।२।२६पूर्वा०।)

काल इति संज्ञाशब्दः, शब्द[2]-संख्यान-क्षेप[3]-गति[4]-प्रभृति[5]-विभिन्नार्थकेन 'कल' धातुना निष्पादयितुं शक्यते । कलधातुं हि वैयाकरणाः कामधेनुं कथयन्ति । यथा कामधेनुः याच्यमाना अखिलान् अर्थान् ददाति तथैव कलधातुरपि सर्वान् अर्थान्

१. सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुवेदेति विद्वद्भिः परिपठ्यते ॥ वि० पु० १।२।१२ ॥

२. कल शब्दसंख्यानयोः कलते चकले । भ्वादिः । ( आ० आ० से० सि० सि० कौ० पृ० ४३५ )

३. कल विल क्षेपे ( कालयति चुरादिपरस्पैपदी ( सि० कौ० पृ० ४८९ ) ।

४. कलमतौ संख्याने च (अदन्तः चुरादिपरस्मैपदी) कलयति, अल्लोपस्य स्थानि[illegible] वृद्धिः ( सि० कौ० पृ० ४६५ । )

५. ( सि० कौ० पृ० ४६५ ) चुरादिप्रकरणे 'बेल' कालोपदेशे बेलयति इत्यस्याग्रे 'काल' इति पृथग् धातुरित्येके कालयति इत्यपि निर्दिष्टमस्ति ।

दातुं प्रभवति, अत: कलधातुना निष्पन्नस्य कालशब्दस्य[1] बहवोऽर्थास्तत्र तत्र निर्दिष्टा: समुपलभ्यन्ते, किन्तु ज्योतिःशास्त्रे 'भूतानामन्तकृत् काल: कालोऽन्य: कलनात्मक:' इत्यादिस्थलोक्त: कलनात्मक: ( गणनात्मक: ) निमेषादिपरार्द्धान्त-संज्ञाशब्दोपलक्षितविभिन्नविभागरूप: क्षण-दण्ड-घटी-पल ( सिकेन्ड, मिनट, घण्टेति ) विभिन्ननामभि: 'समय:' इत्याद्यन्यान्यशब्दैश्च लोकेषु शास्त्रेषु च सर्वत्रैव प्रसिद्धो योऽर्थोऽस्ति स एवात्र गृहीतोऽस्ति ।

तादृशस्य कालस्य गणनायां संवत्सरस्य प्राधान्यमस्ति । यद्यपि कालगणना-यामल्पत्वं निमेषे महत्त्वं तु परार्द्धपर्यवसितं वर्तते, अतस्तयोरन्यतरस्यैव प्राधान्य-मुचितं प्रतिभाति, किन्तु परमात्मना संवत्सरस्यैव प्रथमं सृष्टत्वात् तस्यैव ( संवत्सर-स्यैव ) प्राधान्यमस्ति ।

'सो कामयत द्वितीयो मे आत्मा जायेतेति । स मनसा वाचा मिथुनं समभवत् ।
तद् यद् रेत आसीत् स संवत्सरोऽजायत' इति ( शतप० ) ।

---

१. (क) कालो दण्डधर: श्राद्धदेवो वैवस्वतोऽन्तक: । ( अमरको० १।१।५९ पृ० २४ )

(ख) कालो दिष्टोऽप्यनेहाऽपि समयोऽपि । ( अमरको० १।४।१ पृ० ४३ )

(ग) कृष्णे नीलासितश्याम-काल-श्यामलमेचका: । इति (अमरको० १।५।१४, पृ० ६० )

(घ) कृतान्तानेहसो: काल: । ( अम० ३।३।१९४ ) अत्र रामश्रमी टीका—
कालयति 'कल शब्दसंख्यानयो:' ( भ्वा० प० से० ) । किन्तु सिद्धान्तकौमुद्यां परस्मैपदी नास्ति, आत्मनेपदी धातुस्तत्र निर्दिष्टोऽस्ति । कल प्रेरणे । (चु० प० से०) ( इति न मया दृष्ट: ) वा । ण्यन्त: । पचाद्यच् ३।१।१३४। यद्वा—कल्यते संख्यायते कर्मणि घञ् ३।३।१९ । यत्तु कलयति भूतान्यायुर्वा—इति स्वामी व्याख्यत् । तत्र अदन्तत्वे वृद्ध्यप्रसङ्गात् । यद् वा, कल्यते । कल उपदेशे घञ् (३।३।१९) कालो मृत्यौ महाकाले समये यमकृष्णयो: ( इति मेदिनी )

( ङ० ) शब्दकल्पद्रुमे ( १०८ पृ० ) काल: क्षण-मुहूर्त-प्रहर-दिन-रात्रि-पक्ष मासायनवत्सरादि: ( इति शब्दकल्पद्रुम १०८ पृष्ठे दुर्गादास: ) 'जन्यानां जनक: कालो जगतामाश्रयो मत: । परापरत्वधीहेतु: क्षणादि: स्यादुपाधित:' । यथा विष्णु-पुराणे १।२।१५ ( गीताप्रे० पृ० १४ )

परस्य ब्रह्मणो रूपं पुरुष: प्रथमं द्विज ।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथापरम् ।।

संवत्सरो हि निमेषादिभिर्विभागैः सम्पद्यते। स एवादौ निरूप्यते—

**निमेषः**

अक्षि[1]-पक्ष्म परिक्षेपोपलक्षितः कालविशेषो निमेषो नाम। अर्थात् मानवानाम् अकृत्रिमनेत्रविकासानन्तरं यावता कालेन नेत्रपक्ष्मणोराकुञ्चनं सम्पद्यते स कालविशेषः 'निमेषः' इति कथ्यते। यथा च रघुवंशमहाकाव्यस्य ( २।१९ ) पद्ये

पापौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम्॥

इत्यत्र अस्य निमेषशब्दार्थस्य सङ्गतिर्दृश्यते। तेषामेव—अष्टादश[2] १८ निमेषाणाम्, एका काष्ठा भवति। त्रिंशत्काष्ठानामेका कला भवति। त्रिंशत्कलानां चैकः क्षणो भवति। द्वादशानां क्षणानामेको मुहूर्तो ( मुहूर्तं वा ) कथ्यते। त्रिंशन्मुहूर्त्तानामेकः, अहोरात्रो भवति। पञ्चदशानामहोरात्राणामेकः पक्षो भवति।[3]

---

१. अस्य गुणाः १-संख्या २-परिमितिः ३-पृथक्त्वम् ४-संयोगः ५-विभाग इति भाषापरिच्छेदः।

कालस्तु त्रिविधो ज्ञेयोऽतीतोऽनागत एव च।
वर्तमानस्तृतीयस्तु वक्ष्यामि शृणु लक्षणम्॥
कालः कलयते लोकं कालः कलयते जगत्।
कालः कलयते विश्वं तेन कालोऽभिधीयते॥
कालस्य वशगा सर्वे देवर्षिसिद्धकिन्नराः।
कालो हि भगवान् देवः स साक्षात्परमेश्वरः॥
सर्गपालनसंहर्त्ता स कालः सर्वतः समः।
कालेन कल्यते विश्वं तेन कालोऽभिधीयते॥

२. अष्टादशनिमेषास्तु काष्ठा, त्रिंशत्तु ताः कला।
तास्तु त्रिंशत् क्षणः ते तु मुहूर्तो द्वादशास्त्रियाम्॥ ( अमरको० १·४।११ )
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च।
पक्षं पूर्वापरौ शुक्ल-कृष्णौ मासस्तु तावुभौ॥ ( अमरको० १।४।१२ )
द्वौ द्वौ मार्गादिमासौ स्यात् ऋतुस्तैरयनं त्रिभिः।
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः। ( अम० १।४ ३ रामाश्रमी पृ० ४८ )।

३. तक्ष त्वचने। त्वचनं संवरणं त्वचोग्रहणं च। पक्ष परिग्रह इत्येके (वै० सिद्धान्त कौ० भ्वादिपृ० ४४० ) इत्यत्र अथवा पक्ष परिग्रहे ( चुरादिप्रकरणे सि० कौ० ४८६ पृष्ठे ) उक्ताद् पक्ष धातोः निष्पन्नोऽयं शब्दः। देवकार्यार्थं वा पितृकार्यार्थं वा पक्ष्यते परिगृह्यते यः कालविशेषः स पक्षः।

अथवा—चन्द्रस्य पञ्चदशानां कलानामापूरणं क्षयो वा यस्मिन् परिगृह्यते स पक्षः।

द्वयोश्च पक्षयोरेको मासो भवति।[1] द्वाभ्यां द्वाभ्यां मासाभ्यामेकैकः ऋतुर्भवति। तैश्च त्रिभिस्त्रिभिर्ऋतुभिरेकैकमयनमुत्तरायणं, दक्षिणायनमिति संज्ञितं भवति। द्वाभ्यामयनाभ्यां (षड्भिर्ऋतुभिः द्वादशभिर्मासैर्वा) एको हि संवत्सरः[2] (वर्षं वत्सरः संवत्सरः हायनः अब्दः शरत् समा इत्यादि विभिन्ननामभिर्व्यवहारे प्रसिद्धः) कालविभागविशेषः सम्पद्यते। अयं च कालविभागो मानुषो दैनन्दिने ऽस्माकं व्यवहारेऽस्ति। ब्राह्म वैष्णव-शैव-दैव-पैत्रादिकालविभागा अपि सन्ति। तेऽपि मानुषकालविभागेन विदितस्वरूपा भवन्ति।

अस्मिन् युगे मानुषे कालव्यवहारे प्रतिमासं त्रिंशदहोरात्राः (३० दिनानि) भवन्ति। तत्र १५ पञ्चदश दिनानि (१५ अहोरात्रानिति यावत्) प्रतिदिनमेकैक-कलाक्रमेण चन्द्रकलाः क्षयतां गच्छन्ति। ततश्चाव्यवहितोत्तरमेव पञ्चदश १५ दिनानि (१५ अहोरात्रान्) तथैव प्रतिदिनमेकैककला क्रमेण सा चन्द्रकला वृद्धिभावं चाभ्युपैति। तत्र यत्र चन्द्रकलानां क्षयो भवति तानि सर्वाणि १५ दिनानि (१५ (अहोरात्रान्) आहत्य एकः कृष्णपक्षस्तथा यत्र च चन्द्रकलानां वृद्धिस्तानि (१५ दिनानि आहत्य) एकः शुक्लपक्षः कथ्यते।

उभयोः शुक्लकृष्णपक्षयोः यावन्ति दिनानि (अहोरात्राः) भवन्ति ताव-त्यस्तिथयोऽपि भवन्ति। अत्र शशिनः कला एव तिथिसंज्ञायाः प्रवृत्तिनिमित्तम्। उत्तरोत्तरक्रमेण चन्द्रकलायाः क्षयवृद्धिभ्यामुपलक्षितः कालविशेष एव तिथिशब्देन

---

१. मस्यते परिमीयते (स्वयं चन्द्रवृद्धिक्षयाभ्यां) अयमिति विग्रहे मसी परिमाणे, इति (दि० प० से०) धातोः "अकर्तरि च कारके संज्ञायाम्" (३।३।१९ (काशि पृ० २२३) इत्यनेन कर्मणि घञ्प्रत्ययं विधाय तथा मस्येते परिमीयेते अनेन (चन्द्रवृद्धिक्षयौ) इति विग्रहे 'हलश्च' ३।३।१२१ (काशि० पृ० २४१) इत्यनेन करणे घञ्प्रत्ययं विधाय निष्पाद्यते मासशब्दः। सूर्यस्य राशिगतिर्यत्र परिमीयते स सौरो मासः, अहोरात्राणां त्रिंशत्संख्या यत्र परिमीयते स सायनो मासः।

मस्यन्ते परिमीयन्ते स्वकाला वृद्धिहानितः।
मास एते स्मृता मासास्त्रिंशत्तिथिसमन्विताः॥

अथवा मासशब्दो हलन्तः सकारान्तश्चन्द्रवाची तस्य अयं काल इति मासः। तदीयत्वं च पञ्चदशकलानां वृद्धिक्षयद्वारेणैव मन्तव्यम्।

२. संवत्सरो नामायनाद्यवयवयुक्तोऽवयवी कालविशेषः।
सम्यक् वसन्ति, अस्मिन् अयनर्तुमासादयः' इति व्युत्पत्तेः।

स च द्वादशमासात्मकः—'द्वादशमासाः संवत्सरः' इति श्रुतेः।

कथ्यते। क्षयं वृद्धि वा गतया चन्द्रकलया एव तन्यते विस्तृतो भवति। तत्तत्कालोऽतः स तत्तत्कालस्थितिरित्युच्यते।

तन्यन्ते[1] कलया यस्मात् तस्मात्तास्तिथयः स्मृताः। (शब्दकल्पद्रुम ६१६ पृष्ठे)
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः।
तिथयस्ताः समाख्याता षोडशैव वरानने॥ (शब्द क० ६१६ पृ०)

चन्द्रस्य प्रथमादिकलाः पृथक् पृथक् पर्यायक्रमेण चन्द्रात् विनिःसृताः। तथैव चन्द्रं प्रविष्टाश्च सत्यो लोकव्यवहारे शास्त्रव्यवहारे च प्रतिपदादितिथिनामभिरुच्यन्ते—

प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कला।
शुक्लपक्षे विशेच्चन्द्रं कृष्णपक्षे विनिःसरेत्॥

(कालमा० उपो० ७-८ पृष्ठयोः)

सा च तिथिः प्रतिपत्[2]—द्वितीया-तृतीया-चतुर्थी-पञ्चमी-षष्ठी-सप्तमी-अष्टमी-नवमी-दशमी-एकादशी-द्वादशी-त्रयोदशी-चतुर्दशी-पञ्चदशीति नामभिर्निर्दिष्ट-

---

१. तन्यते चन्द्रकलया इहि विग्रहे 'तनु विस्तारे' इति उभयपदिनः 'तनु' धातोः 'उणादयो बहुलम्' इति बाहुलकात् 'इथिन्' प्रत्यये नादिलोपे प्रातिपदिकत्वात्सौ तिथिः।

अथवा सततं गच्छतीति विग्रहे 'अत सातत्यगमने' इति भ्वादिपरस्मैपदिनो धातोः 'ऋतन्यञ्जि' इत्युणादि (सि० कौ० सू० ६३२) सूत्रे इथिन् प्रत्यये 'अतिथिः इति इति जाते बाहुलकात् पृषोदरादित्वाद् वा अकारस्य लोपे तिथिरिति साधुः।

२. आसु तिथिषु प्रतिपक्षं प्रथमायास्तिथेः 'प्रतिपत्' इति अन्वर्था संज्ञा अस्ति। यतो हि अनयैव तिथ्या चन्द्रकला चात्मनः ह्रासक्रियामथवा वृद्धिक्रियां प्रतिपद्यते =प्राप्नोति। अस्यामेव तिथौ चन्द्रकलानां ह्रासभावो (विनिःसरणक्रमः) वृद्धिभावः (चन्द्रकलानामेकरूपेण पूरणक्रमो वा) आरब्धो भवति। अतएव प्रतिपद्यते ह्रासक्रिया वृद्धिक्रिया वा चन्द्रकला अनया इतिविग्रहे (अथवा प्रतिपद्यते उप-क्रम्यते अनया पक्षो मासादिर्वेति विग्रहे वा) प्रति पूर्वकात् पद गतौ इति दि० आत्मनेपदि धातोः (सम्पदादिभ्यः क्विप्) इति (३।३।९४) सूत्रस्थवार्त्तिकेन करणे क्विपि कृते तिथ्यर्थे 'प्रतिपत्' इति शब्दो व्युत्पादयितुं शक्यते। चन्द्रस्य प्रथमकलाक्रियारूपा इयं प्रथमा (प्रतिपन्नाम्नी) तिथिः, चन्द्रकलाया वृद्धिरूपा चेत्तर्हि शुक्लप्रतिपत् चन्द्रकलाया ह्रासरूपा चेत्तदा कृष्णप्रतिपत् इति कथ्यते। एवमेव द्वितीया चन्द्रकलानां ह्रासवृद्धिभ्यां द्वितीयादितिथयोऽपि तत्तन्नाम्न्यो भवन्ति।

त्वात् पञ्चदशधा सत्यपि तत्र पञ्चदशी तिथेः स्वरूपभेदात् षोडशधा अस्ति। पञ्च-दशी-तिथेः स्वरूपभेदो हि—एकस्यां पञ्चदश्यां चन्द्रकलानां नितरामुपक्षीणत्वात्तथा चैकस्यां पञ्चदश्यां चन्द्रकलानां सर्वतोभावेन पूर्णत्वाच्च भवति। तत्र सर्वतोभावेन क्षीणचन्द्रकलायाः पञ्चदश्यादितिथेः दर्शः, अमावास्या अमावस्या अमा इत्यादीनि नामानि, तथा सर्वतोभावेन पूर्णचन्द्रकलायाः[1] पञ्चदश्याः तिथेः मासस्य पूर्णत्वात् चन्द्रस्य वा पूरणाच्चापि तस्याः पञ्चदश्याः पूर्णिमा[2] पौर्णमासी[3] इत्यादीनि नामानि सन्ति।

**मन्त्रः**

वैदिकक्रियासु विनियुज्यमानो नियततया अविपर्यस्तया च उच्चारणीयो पदसमूहो मन्त्रः। निरुक्तकारो भगवान् यास्कः—'मन्त्रा मननात्' (७।१२) इति

१. कृष्णपञ्चदश्यां तिथौ, उपर्यधमभावापन्नसमसूत्रन्यायेन राश्येकांशावच्छेदेन सहावस्थितौ सूर्यचन्द्रौ द्वावपि दृश्येते अतः सा पञ्चदशी तिथिर्दर्शः। यथा च शब्द-कल्पद्रुम ६८६ पृष्ठे मत्स्यपुराणवचनम्—अन्योन्यं चन्द्रसूर्यौ तु दर्शनाद्दर्श उच्यते। इति। तथा तस्यां चन्द्रार्कौ सह वसतः, अतोऽमावास्या अमावस्यानामैकदेशग्रहणन्यायेन अमा चापि कथ्यते।—अत्र दर्शेति नाम—दृश्येते सहावस्थितौ सूर्यचन्द्रौ यस्मिन् काल-विशेषे स दर्शः, इति विग्रहे दृशिर् प्रेक्षणे इति भ्वादिपरस्मैपदिनो दृशधातोः (पश्यतेः) 'पुंसि संज्ञायां घः प्रायेण' (३।३।११८) इति सूत्रेण घप्रत्यये कृते सिद्ध्यति। तथाहि अमा (सह) वसतोऽस्यां चन्द्रार्कौ, इति विग्रहे अमावस्यदन्य-तरस्याम् (३।१।१२२) सि० कौ० पृ० ५६५) सूत्रेण अमोपपदाद् पक्षे अधिकरणे ण्यत्। वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते इति सह वाचकामाशब्दोपपदाद् वस निवासे इति धातोः काले, अधिकरणे ण्यत् प्रत्यये कृते णित्वात् वृद्धौ च सत्याम् अमावास्या, यथा पक्षे वृद्ध्यभावे निपातिते अमावस्या चेति शब्दौ सिद्ध्यतः।

२. पूरणं पूर्णिः चन्द्रस्य पूर्णिं मिमीत इति (पूर्णि। मा। कः। टाप्) पूर्णिमा।

३. 'मासशब्दः केवलोपीह सम्मतो बहुदृश्वनाम्' इति, (अमरकोश १।३।१३ पृ० ३४) रामाश्रमीटीका सम्प्रोक्तपालिनीकोशानुसारेण सान्तो हलन्तो मास्शब्दोऽप्यस्ति। स चायं मासशब्दः मिमीते कालमिति विग्रहे माधातोः बाहुलकात् असनि प्रत्यये कृते सिद्ध्यति। तथा चैमाश्चन्द्रमासयोः पुमान् इति (अमरकोश १।३।२४ पृ० ३४) रामाश्रमीटीकानुरोधात् चन्द्रवाची मासवाची चाप्यस्ति, अतः पूर्णश्चासौ माः पूर्णमाः तस्य पूर्णमासः (पूर्णचन्द्रस्य पूर्णमासस्य वा) इयमिति विग्रहे तस्येदम् (४।३.१२०) इति सूत्रेण पूर्णमास् शब्दादणि आदिवृद्धौ ङीपि च कृते पौर्णमासी शब्दः (तिथिवाचकः) निष्पद्यते। अथवा पूर्णो मासोऽस्यां वर्तते इति विग्रहे पूर्णमासशब्दात् पूर्णमासादण् वक्तव्यः इति (सि० कौ० पृ० ३००) तद्धितरक्ताद्यर्थकप्रकरणस्थेन वार्तिकेन अणि वृद्धौ ङीपि च कृते पौर्णमासी इति तिथिवाचकः शब्दः सिद्ध्यति।

मन् धातोः मन्त्रशब्दं निरुवाच। पाञ्चरात्रसंहितासु मननेन त्राणकरत्वात्, मतस्य अभिलषितस्य लोकरूपदातृत्वाच्च मन्त्रशब्दो निरुच्यते। तथाहि—

मननान्मनुशार्दूल त्राणं कुर्वन्ति वै यतः।
ददते पदमात्मीयं तस्मान्मन्त्राः प्रकीर्त्तिताः॥
(—ईश्वरसंहिता ३।७९)

लौकिकेपि व्यवहारे प्राधान्येन प्रथमतश्च वाग्व्यापारेणेव केनचिद् स्वरूप-सम्बन्धो विधीयते। 'वाचो वा इदं सर्वं प्रभवति (श० ब्रा० १।३।२।१६) इति श्रुतिरपि वाच एवाश्रयेण सांसारिकाणां कार्याणां सम्भवं प्रदर्शयति। वाचो माधुर्येण उग्रतया च शत्रुमित्रादिभाव उद्भाव्यते। मन्त्रा अपि वाङ्मयाः। अतएव समस्तेऽस्मिन्संसारे निग्रहानुग्रहो मन्त्रैरेव क्रियत इति न किमपि आश्चर्यम्। मन्त्रात्मक वेदं विश्वं तत्प्रभावग्रस्तत्वात्। अतएव ईश्वरसंहितायामुच्यते—

वाचि मन्त्राः स्थिताः सर्वे वाच्यं मन्त्रे प्रतिष्ठितम्।
मन्त्ररूपात्मकं विश्वं सबाह्याभ्यन्तरं ततः॥
(३।८२)

मन्त्रात्मिका वाणी नियता एतदर्थमस्ति यत्, मनुष्यस्य ज्ञानमनित्यं विपर्य-सनीयं च भवति। अतएव मनुष्य एकस्मिन्दिने उक्तानां विषयाणां तेनैवाक्षरक्रमे-णोच्चारणं द्वितीये दिने कर्तुं न प्रभवति। विधिबलात्कर्मणः स्वरूपं तत्फलं च नियतमिति कर्मांगभूते वाक्यजातेऽपि नित्यत्वमपेक्षितं भवति। तस्मादेव च 'पुरुषविद्यानित्यत्वात्कर्मसंपत्तिर्मन्त्रो वेदे'—(नि० १।२) इत्यनेन मन्त्राणां नियतत्वात्प्रयोग उपपादितः।

मीमांसायां हि तत्तत्कर्मानुष्ठानकाले अनुष्ठेयक्रिया तदङ्गद्रव्यदेवतादि-प्रकाशनद्वारा मन्त्राणां प्रयोजनवत्वमुक्तम्। तथाहि—'स्मृत्वा कर्माणि कुर्वीत' इत्यादि विधिना तत्तत्कर्मानुष्ठानकाले स्मरणं विहितम्। तच्च स्मरणं यद्यपि उपायान्तरेणापि भवितुमर्हति तथाप्युपायान्तरपरिग्रहे तत्तत्प्रकरणपठितानां मन्त्रा-णामानर्थक्यप्रसंगात् स्वाध्यायविधिपरिगृहीतानां तेषामानर्थक्यानौचित्यात्प्र-योजनान्तरासभवाच्च मन्त्रैरेव स्मृत्वा कर्माणि कुर्वीत इति नियमविधिरङ्गीक्रियते।
(—र० ११)

**मन्त्रविनियोगः**

एते मन्त्रा न केवलमदृष्टार्थतया उच्चार्यन्ते। अपि तु अर्थप्रकाशनमप्येषां भवति। तदेतद् जैमिनीयन्यायमालायां (१।३।४) अधिकरणे निर्णीतम्। ततश्च-

यत्र येषां मन्त्राणामर्थः प्रकाश्यते तेषामर्थानुसारि विनियोगः[1]। येषां त्वर्थसंबन्धे विनियोगस्थलं नास्ति, तेषां तत्रैव लक्षणामङ्गीकृत्य विनियोगः। यथा 'त्वमग्ने प्रथमो मनोता' इत्ययं मनोता मन्त्रः ( तै० ब्रा० ३।६।१० ) अस्य अग्नीषोमीय-पशुप्रकरणे पाठः। तत्र न केवलाग्नेर्देवतान्वयमपितु सोमसमुच्चितस्य। अतः अग्निपदे अग्नीषोमीयलक्षणां कृत्वा विनियोगः।

क्वचित्तु 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति विधिबलादिन्द्रप्रकाशनसमर्थ-मन्त्रस्य 'निवेशनः संगमनो वसूनाम्' ( मा० सं० १२।६६ ) इत्यस्य गार्हपत्याग्न्यु-पस्थाने विनियुज्यमानस्य मन्त्रगतपदानां लक्षणया अर्थः कल्पनीय इति ऐन्द्री-न्यायेन ( ३।२।२ ) समवगम्यते। यत्र तु लक्षणायाः अप्यसंभवः सामान्यसम्बन्ध-बोधकप्रमाणमपि नास्ति, न च मुख्यो लाक्षणिकं वार्थः संभवति, तेषां केवला-दृष्टार्थत्वमेव। यथा श्रौते जपमन्त्राणाम् स्मार्त्ते हुंफडादीनां सर्वथा अदृष्टार्थत्वमेव ( त० सि० र० १२ )। साममन्त्राणां तु अर्थप्रकाशनप्रयोजनासंभवेऽपि ऋगक्षराभि-व्यक्तिरूपदृष्टप्रयोजनसंपादकत्वमेव।

धर्मशास्त्रीयनिबन्धानुगृहीतेषु स्मार्त्तपौराणिककर्मसु 'तल्लिगैरथ मन्त्रैर्वा त्वथवा नृपनामभिः' इति विष्णुधर्मोत्तरीय ( ३।१५२।७ ) वचनात्कर्मणि देवता लिंगसम्बद्धा अर्थतोऽसंबद्धा अपि मन्त्रा गृह्यन्ते। यत्र तु लिंगमपि नास्ति, देवतार्थप्रकाशनमपि नास्ति, आर्षवचनाच्च विनियोगः उपलभ्यते। तत्र अदृष्टार्थं तेषां प्रयोगः। तथा च—नवग्रहप्रकरणे याज्ञवल्क्यस्मृतौ—( १।३००-३०१ )—

आकृष्णेन इमं देवा अग्निर्मूर्धा दिवः ककुत्।
उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्त्तिताः॥
बृहस्पतेऽयतिअदर्यस्तथैवान्नात्परिस्रुतः।
शन्नो देवीस्तथा काण्डात्केतुं कृण्वन्निमास्तथा॥ इति॥

एतेन शन्नो देवीरित्यादीनां शनिदेवताप्रकाशनाभावेऽपि पूजोपयुक्तार्थानन्वयेऽपि प्रयोगः शास्त्रीयः, न स दुस्तर्केणापोहितुं शक्यः। अत एवाभियुक्ताः वेदमेवं स्तुवन्ति—

नामाक्षराणि कथमप्यधिगम्य यस्मिन्।
स्वीयान्यहंप्रथमिकामवलम्ब्य देवाः॥
धावन्त्यधीतिजनवाञ्छितपूरणाय।
तं वेदमादिममनादिमुपाश्रितोऽस्मि॥ इति॥

---

१. तु० का० औ० १।३।४

**नाममन्त्रः**

वास्तुतत्त्वे ( पृ० ४१७ )—

ॐकारादिसमायुक्तं नमस्कारान्तकीर्तितम् ।
स्वनाम सर्वसत्त्वानां मन्त्र इत्यभिधीयते ॥

इति ब्रह्मपुराणवचनमुपन्यस्य स्मार्त्तपौराणिकीनामनुपलभ्यमानलिङ्ग-मन्त्राणां स्त्रीशूद्रादीनां वैदिकमन्त्रानधिकारिणां च कृते नाममन्त्रः कल्पयितव्य-त्वेनोक्तः । अयमेव नाममन्त्रः मूलमन्त्रशब्देन संस्काररत्नमालायां ( १२८ पृष्ठे ) उक्तः । अग्निपुराणे एकविंशाध्याये षड्विंशतिश्लोके सबिन्दुनामाद्यक्षरस्य समुच्चयेन नाममन्त्र उक्तः ।

**अध्याहारानुषङ्गौ**

कात्यायनश्रौतसूत्रे—'तेषां वाक्यं निराकाङ्क्षम्' 'मिथः सम्बद्धम्' ( १।३।२-३ ) इत्यनेन साकाङ्क्षस्य वाक्यस्य पूर्त्तिः कर्त्तव्येति प्रतिपाद्यते । सा च पूर्तिर्द्विधा भवति । अध्याहारेण आनुषङ्गेण च । वाक्यापेक्षितस्य अश्रुतस्य पदस्या-नुसन्धानमध्याहारः । पूर्वत्र परत्र वा मन्त्रे[1] व्यवहृतस्य पदस्यार्थसंबन्धेन योजन-मनुषङ्गः । तत्र सति संभवे मन्त्रेषु अनुषङ्ग एव कार्य इति अनुषङ्गाधिकरणेषु ( जै० २।१।१६-१९ ) स्पष्टम् । अनुषङ्गासम्भवे तु अध्याहारो भवतीति वाक्य-भेदाधिकरणे ( २।१।१५ ) उक्तम् । निर्णयसिन्धौ श्राद्धप्रकरणे ( ३१२ पृ० ) अनुषङ्गचर्चा दृश्यते । तत्रैव ( २६९ पृष्ठे )

अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि ।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥

इति कत्यायनीयवाक्ये 'भागः' इत्याध्याहृत्य सपतिकायै मात्रे इति प्रयोगा-पत्तिर्निरस्ता ।

अयंभावः—'अन्यत्र पतिना सह' इत्येषु पदेषु श्राद्धमित्यनेनान्वये 'सह युक्ते ऽप्रधाने' ( पा० २।३।१९ ) इत्यनेन अप्राधान्ये तृतीयोक्तेः मातुः प्राधान्यस्वीकारे 'सपतिकायै मात्रे' इति पिण्डदानादिषु प्रयोगः स्यात् । तच्च वचनान्तरेण सदाचारेण विरुद्धम् । अतः भागः इत्यध्याहृत्य पत्युः प्राधान्यं तदीयपिण्डे च मातुः भोक्तृत्वं साध्यते ।

---

१. निर्णयसिन्धौ पृ० ७२, आर्षश्लोकानुवर्तनेऽप्यनुषङ्गशब्दो व्यवहृतः 'चकारेण तामिस्रपक्षानुषङ्गेऽपि' इति ।

**अध्याहारसन्धिविचार:**

अध्याहारपदं लौकिकं भवति। तेन सह वैदिकपदस्य सन्धिर्न कर्त्तव्यः इत्यमुं विषयमादाय शोभनो विचारो वृषोत्सर्गप्रकरणे (३७९ पृ०) विलिखितो रघुनन्दनभट्टाचार्येण।

**मन्त्रभेदा:**

ते च मन्त्रास्त्रिविधाः। करणमन्त्राः, क्रियमाणानुवादिनः, जपमन्त्राश्च। यं मन्त्रं पूर्वमुच्चार्य मन्त्रान्ते कर्म क्रियते ते करणमन्त्राः। क्रियाकरणकाले एव ये मन्त्राः पठ्यन्ते क्रियमाणानुवादिनो मन्त्राः। अदृष्टार्थं कर्मकाले पठनीया मन्त्रा जपमन्त्राः। (का० श्रौ० सू अ० १ कं० ८ पृ० ४१)

**मन्त्रलक्षणम्**

यद्यपि मन्त्राणां लक्षणं व्याप्त्यतिव्याप्त्यसंभवशून्यं नास्ति, अथापि 'याज्ञिकानां मन्त्रशब्दसमाख्याधिकरणत्व' मिति निर्दुष्टलक्षणं मीमांसका (जै० न्या० २।१।७) अभिप्रयन्ति, मन्त्राणां च यथाश्रुतानामेव प्रयोगो न विपर्ययमापादितानाम्। अत एव संस्कारगणपतौ (८०३ पृ०) यमानेवाह—

'यमाय धर्मराजाय मृत्यवे चान्तकाय च।
वैवस्वताय कालाय सर्वभूतक्षयाय च॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः॥ इति
(पा० गृ० ३ स्ना० प०) सूत्रम्।

चतुर्दश यमांस्तर्पयेदिति। अत्र केचित्–'यमस्तृप्यता' मिति प्रयोगं कुर्वन्ति, तदसत्। न ह्येतानि देवतापदानि, किं तर्हि? एते मन्त्राः। मन्त्राणां च यथाम्नातानामेव प्रयोग इति साधितम्।

॥ इति मन्त्रविषयः॥

भारतीयकर्मकाण्डसम्भारेषु दिव्यशक्तिमत् सम्भारद्वयम्

**आपो—दर्भाश्च**

श्रौतस्मार्तादिसर्वविधभारतीयकर्मकाण्डेषु प्रायोऽपां दर्भाणां च प्रयोगो भूयो भूयो बाहुल्येन सर्वत्रैव क्रियमाणो दृश्यते। कर्मकाण्डकर्तृपुरुष-द्रव्यदेशादि-गतस्य साहजिकस्य नैमित्तिकस्य चोभयविधस्यामेध्यत्वस्य रक्षोसुराद्युपद्रवस्य, अन्यान्य-दोषाणां चाप्यपनोदाय केषाञ्चित् प्रकृष्टानाम् गुणानामादानद्वारा तत्र तत्र कर्मकाण्ड-

विधासु अतिशयाधानायापि, आचमनोपस्पर्शनमार्जनप्रोक्षणप्रणयनादिष्वपाम् (जलानाम्) एवं हि—पवित्रादिनिर्माणधारणादिविधौ तथैवाग्न्यायतनवेदिकापरिस्तरणप्रभृतिषु विधिषु दर्भाणां (कुशानां) च प्रयोगो भवति।

दर्भा आपो हि—

नानाविधाभिः, दिव्यातिदिव्यशक्तिभिः सुसम्पन्नाः सन्ति। ते हि खलु तत्तत्कर्मकण्डेषु विनियुक्ताः तत्र तत्र सर्वत्रैव बहूपकुर्वन्ति। कर्मकाण्डसम्पन्नतायै तेषां योगदानं विशेषमहत्त्वाधायकं भवति। भारतीयकर्मकाण्डसम्पूरकसंरक्षकसम्भारतत्त्वेषु इदं सम्भारतत्त्वद्वयम् (आपो दर्भाश्च) अतिदिव्यशक्तिमदस्ति। तत्र पूर्वमपां विषयेऽधीयते।

**आपः**

आपो हि यः खलु अतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः सर्वभूतमयः, अचिन्त्यः 'तदैक्षत बहुस्यां प्रजायेय' इति छान्दोग्योपनिषदादिषु वेदादिसर्वशास्त्रेषु प्रथितः सिसृक्षुः जगन्मूलकारणं परब्रह्म परमात्मास्ति। तेनैव सिसृक्षुणा स्वयं प्रादुर्भूतेन परमात्मना 'आपो जायन्ताम्' इत्यभिध्यानेन आदौ (स्वकार्यब्रह्माण्डसृष्टेः प्रागेव) स्वात् (अव्याकृतरूपात्[1]) शरीरात् सृष्टाः सन्ति। सृष्टासु च तास्वप्सु सर्वविधशक्तिरूपं बीजं वाप्यारोपितमास्ते। तथा हि—

योऽ[2] सावतीन्द्रियग्राह्यः[3] सूक्ष्मो[4]ऽव्यक्तः[5] सनातनः[6]
सर्वभूतमयो[7]ऽचिन्त्यः[8] स एव स्वयमुद्बभौ[9]॥

---

१. अव्याकृतमेव भगवद्भास्करीयवेदान्तदर्शनस्य प्रकृतिः। अव्याकृतशब्देन पञ्चभूतबुद्धीन्द्रियप्राणमनःकर्माविद्यावासना एव सूक्ष्मरूपतया शक्त्यात्मना स्थिता अभिधीयन्ते।

२. योऽसाविति सर्वनामद्वयेन सकललोकवेदपुराणेतिहासप्रसिद्धः परमात्मा निर्दिष्टोऽस्ति।

३. इन्द्रियमतीत्य वर्तत इत्यतीन्द्रियं मनस्तद् ग्राह्यः,। यथाह व्यासः—

नैवासौ चक्षुषाग्राह्यो न च शिष्टैरपीन्द्रियैः।
मनसा तु प्रयत्नेन गृह्यते सूक्ष्मदर्शिभिः॥

४. बहिरिन्द्रियागोचरः (सूक्ष्मः)।

५. व्यक्तिरवयवस्तद्रहितः (अव्यक्तः)।

६. सनातनो नित्यः

७. सर्वभूतात्मा (सर्वभूतमयः)

८. अचिन्त्यः, इयत्तया परिच्छेत्तुमशक्यः।

९. महदादिकार्यरूपतया प्रादुर्बभूव। धातूनामनेकार्थत्वात् (उद्बभौ, इति) अत्र उत्पूर्वो भातिः (भादीप्तौ अदादिपरस्मैपदी धातुः) अत्र प्रादुर्भावे वर्तते।

सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।
अप[1] एव ससर्जादौ तासु बीजमवासृजत् ॥
( मनुस्मृ० १।७-८ )

इमा आपः स्नेहगुणविशिष्टाः सन्ति। स्निग्धान् मनोभावान् उत्पादयन्ति। स्निग्धतामयानि स्नेहरूपाणि सत्त्वानि सृजन्ति, इति 'आपः सृजन्तु स्निग्धानि[2]' इति श्रीसूक्तस्वद्वादशकण्डिकापादेन ज्ञायते। आचमिताः स्पृष्टाः प्रोक्षिताश्चेमाः कर्मकाण्डविषये तत्रत्यदेवतादिविषये कर्मकाण्डकर्त्तुर्हृदये स्नेहं अनुरागं निष्ठां श्रद्धां विश्वासं कर्मकाण्डक्रियासु विभिन्नव्यापारेषु पारस्परिककर्मकाण्डसम्बन्धदार्ढ्यं च समुत्पादयन्ति। आसु सर्वभावानां स्रष्टृत्वं निहितमास्ते। अद्भ्यः पृथिवी अग्निर्वायुश्चन्द्रमाः सर्वं जगज्जातमस्ति, इत्येतत् सूक्तार्थसंग्रहे उक्तमास्ते—

यदग्रे आप एवासन् अद्भ्यः सर्वमभूज्जगत्।
अद्भ्यो हि पृथिवी जाता अग्निरप्यभवत्तथा ॥
जीवं जीवरसं दिव्यममृतं जलमुच्यते।
तस्मात् सर्वनिदानानामपां स्रष्टृत्वमुच्यते ॥
अप्सु प्रतिष्ठितः स्नेहस्तेनैव परमाणवः।
जगद्भावाय सम्बद्धास्तदधानौ स्याज्जगल्लयः ॥

भारतीयकर्मकाण्डानि अपां प्रयोगमारभ्यैव सम्प्रवर्त्तन्ते।

**अयं कर्मकाण्डस्य प्राथमिकक्रियात्वेन विनियोगः**

वैदिकवाङ्मयस्य प्रायोगिके स्वरूपे—निखिलकर्मकाण्डमूलाधारे श्रौतकर्मकाण्डे यागेषु सर्वादौ दर्शपूर्णमासयागः प्रवर्तते। तत्र ( दर्शपूर्णमासयागः ) आदावेव ह्यस्ति व्रतोपायनं[3] मेकंना कर्म ( व्रतग्रहणमितियावत् ) तत्र व्रतमुपेष्यन् कर्त्ता ( यजमानः )

---

१. अपां सृष्टिश्चेयं महदहङ्कारतन्मात्राक्रमेणात्र ज्ञेया।

२. स्नेहयुक्तानि कार्याणि सृजन्तु उत्पादयन्तु। अपां स्नेह—गुणत्वादिति भावः ( इति श्रीसूक्तस्य विद्यारण्यभाष्यम् )।

३. व्रतशब्देन कर्माङ्गभूताः शास्त्रतो नियमा उच्यन्ते। 'कर्माङ्गभूतयमनियमव्रतम्। तदुपगमार्थोऽग्ने व्रतपते' इत्ययं मन्त्रः इत्युक्तं तन्त्ररत्ने इति (का० २।१।११ सू० वृ०)। तच्च दर्शपौर्णमासयोरग्न्यन्वाधानानन्तरं भवति। पशौ तु ब्रह्मवरणानन्तरमिति विशेषविहितञ्चैतत् कात्यायनेन अपराह्णे व्रतोपायनीयमश्नीतः सर्पिषा सुहितौ' इत्यादिसूत्रद्वयेन ( का० श्रौ० सू० २.१।१०-११ पृ० ५६ )। अत्र सूत्रभाष्ये कर्कस्त्वेवमाह-'व्रतोपायनीयमिति, व्रतं भोजनमुच्यते यथान्यत्र तद्व्रतः स्यात्, पयोव्रतमिति च, तद्येनोपेयते अमाषादिना तद्व्रतोपायनीयम्' ( इति शतपथ ०१।१।११ सायणभाष्योपक्रमस्य टिप्पणी )। एवं च व्रतमिति कर्माङ्गभूता यमनियमविधिपरिपालनम्। तदन्तर्विधिसमुपदिष्टं भोज्यं द्रव्यं चापि व्रतमित्युच्यते।

प्राङ्मुख आहवनीयाभिमुखं तिष्ठन् सर्वप्रथमम् अप एव, उपस्पृशति।

श्रूयते हि यथा शतपथब्राह्मणे व्रतमुपैष्यन्नन्तरेणाहवनीयञ्च गार्हपत्यञ्च प्राङ् तिष्ठन्नप उपस्पृशति ( शतप० १।१।१।१ ) इति। सूत्रयति च तदेव कात्यायनोऽपि अन्तरेणापोग्नीन् गत्वापरेणाहवनीयं प्राङ् तिष्ठन्नग्निमीक्षमारणोप उपस्पृश्य व्रतमुपैति "अग्ने व्रतपते" "इदमहम्" इति वा। (का० श्रौ० सू० २।१।११। पृ० ५६) अत्रापामुपस्पर्शनमिदं (शतपथ० १।१।१ पृ० १) सायणभाष्यानुसारम् आचमनम्। किन्तु (का० श्रौ० सू० २।१।११) कर्कभाष्यानुसारे न आचमनम्[२] आलम्बन वास्ति। तत्रापि म० म० विद्याधरवृत्त्यनुसारेण[३], अयमत्र स्पर्शमात्रमेव नत्वाचमनं, तथैव सम्प्रदायोऽपि याज्ञिकानाम्। यथा च का० श्रौ० सू० देवयाज्ञिकपद्धतौ ( २।१।११) सूत्रस्य। यजमानः स्वयमादाय गार्हपत्यदक्षिणाग्न्योरन्तरालेन गत्वा आहवनीयस्य पश्चात् समीपे पूर्वाभिमुखस्तिष्ठन्नाहवनीयं विलोकयन्नुदकं दक्षिणहस्तेन स्पृष्ट्वा "अग्ने व्रतपते व्रतमिति" मन्त्रेण व्रतमुपैति इति।

**अपां शुचित्वापादकत्वम्**

कर्मकाण्डे सर्वत्रैव बाह्याभ्यान्तरशुद्धिः कर्त्तुः (कर्मावृतानां सहायकानामृत्विगादीनां चापि ) मेध्यत्वं ( शुचित्वं पवित्रत्वमिति यावत् ) सर्वप्रमुखर्माधिकारितावच्छेदकं तत्त्वमस्ति। अन्येषु सत्स्वपि अधिकारितावच्छेदकेषु सर्वविधेष्वपि

---

१. उपस्पर्श चेहाचमनं विवक्षितम्। नन्वापस्तम्बेन' 'अप आचामत्युपस्पर्शति वा' ( आ० श्रौ० सू० ४।३।२।९ ) इत्याचमनं प्रतिद्वन्द्विभावेनोपस्पर्शनाभिधानात् स्पर्शनमात्रं तत्प्रतिभाति ? सत्यम्; तत्र तथा। इह तु 'तेन पूतिरन्तरतः' इति वाक्यशेषादपोऽश्नात्यन्तरत एव मेध्यो भवतीति वदताचमनमेव। यथा 'अक्ताः शर्करा उपदधाति' इत्यत्र घृततैलादिष्वञ्जनसाधनत्वेन सन्दिह्यमानेषु' तेजो वै घृतम्' ( तै० ब्रा० ३।१२।५।१२ ) इति वाक्यशेषाद् घृतमिति निश्चयः, तद्वत्। सूत्रितं हि 'सन्दिग्धेषु वाक्यशेषात्' ( मी० सू० १।४।२९ ) इति। (शतपथ० १।१।१।१ ) सायणभाष्यम् )।

२. अपामुपस्पर्शनमाचमनम्, लिङ्गात् 'प्राङ्तिष्ठन्नप उपस्पृशति' इति प्रकृत्य 'तेन पूतिरन्तरतो मेध्या वा आपो मेध्यो भूत्वा व्रतमुपयानि' इति। आलम्भनमात्रं, आचमनानुपदेशात्, तस्य नैमित्तिकत्वात्, शब्दसामर्थ्याच्च, 'अप उपस्पृशति' इति। लिङ्गमर्थवादमात्रं दीक्षास्नानवत् ( कर्कभाष्यम् का० श्रौ० सूत्रस्य २।१।११ )।

३. अग्निं पश्यन् उदकं स्पृष्ट्वा सत्यवदनादिरूपं व्रतम् 'अग्ने व्रतपते०' इति मन्त्रेण 'इदमहम्०' इति मन्त्रेण वा गृह्णीयात्। अत्रापामुपस्पर्शनं, नत्वाचमनम् तस्यानुपदेशात् ( इति का० श्रौ० सू० २।१।११ वृत्तौ म० म० श्रीविद्याधरशर्मणः )।

तत्त्वेषु यदि पुरुषः ( कर्त्ता यजमानोऽमेध्योऽशुचिः अपवित्रः ) तदा कथमपि तत्र ( कर्मकाण्डे ) सः, अधिकृतो न भवति। अत्र विषये हि—

श्रुति-स्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित्॥

इत्येवमादीनि प्रयोगपरिजातादिग्रन्थेषु भृग्वादीनां वाक्यानि सर्वत्र जाग्रति। पुरुषो हि स्वभावतः ( अशुचिः = अपवित्रः ) एव, यतो हि सोऽनृतं वदति—

'अमेध्यो वै पुरुषो यदनृतं वदति ( शतपथ० १।१।१।१ पृ० २ ) तस्मादत्र कर्मकाण्डे सोऽनधिकृतः। अतोऽनृतवदनदोषादनधिकृतोऽमेध्यः पुरुषः सर्वविधकर्मकाण्डऽधिकृतो भवेत्, तदनृतवदनजन्यामेध्यत्वपरिहारद्वारा तत्राधिकारं लभेत्, एतदर्थं कर्मादौ, अपामुपस्पर्शनस्य, आचमनस्य च विधानमास्ते, आग्रहो वा दृश्यते। यतो हि आपः स्वभावतो नैसर्गिकरूपेण शोधयित्र्यः[१] सन्ति। मेध्याः पवित्राः[२] सन्ति। 'मेध्या वा आपः' 'पवित्रं वा आपः' ( शतप० १।१।१ ) अतस्तासामुपस्पर्शनेन आचमनेन स्पर्शेण च बाह्यत एव नहि शुद्धिर्भवति अन्तरात्मनोऽपि शुद्धिः ( मेध्यता = पवित्रता ) भवति। अत एवाप उपस्पृशति—

तद्यदप उपस्पृशति—तेन[३] पूतिरन्तरतः[४], अमेध्यो वा मेध्यो भूत्वा व्रतमुपयानीति, पवित्रं वा आपः पवित्रपूतो व्रतमुपयानीति, तस्माद् वा अप उपस्पृशति। ( शतप० १।१।१। )

---

१. 'आपोऽपि शुन्धध्वं उच्यन्ते शोधनादेव' ( निरु० अ० ४।२ पा० पृ० १७६ )

२. आपः पवित्रमुच्यन्ते (नि० ५।२।३४ पदम्) 'शतपवित्राः स्वधया मदन्ती ( ऋ० ७।४७।३ ) देवीर्देवानामपियन्ति पाथः। ( शतपवित्राः ) शतं बहूनि पवित्राणि पावनानि रूपाणि यासां ताः ( स्वधया ) स्वकार्यभूतेनान्नेन ( मदन्तीः ) जनान् मादयन्त्यः देवीः देव्यो द्योतमानाः, आपः ( देवानाम् ) इन्द्रादीनाम् ( पाथः ) स्थानम् ( अपि यन्ति ) प्रविशन्ति। ( सायणभाष्यम् )।

३. 'तत् प्रकृते' यत् 'उपस्पर्शनं तेनानन्तरतः पूतिः' पवित्रता भवति ( इति सायणः )।

४. अन्तर-शब्दोऽत्र अन्तरात्म-वाचः—

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च॥

( अमरको० ३।३ नानार्थवर्गे श्लो० १८६, ८७ )।

अस्योदाहरणानि—

(१) अवकाशार्थे ( दूरार्थे ) — अन्तरे हिमम्।

(२) परिधानार्थे—अन्तरे, अन्तरा वा शाटकाः, परिधानीया वेत्यर्थः।

(३) अन्तर्धौ-पर्वतान्तरितो रविः।

(४) भेदे—यदन्तरं सर्षप-शैलराजयोः।

**अपां निर्मातृत्वम्**

इमा आपो मातरो निर्माणकर्त्र्यो मातृवत्पालयित्र्योऽपि सन्ति। मानवगतसर्वविधमलिनत्वानां शोधयित्र्यः, स्वक्षरणेनापि जनान् पुनन्ति, अतो हीमाः घृतप्वः कथ्यन्ते। द्योतमानाः इमा विश्वं ( सर्वं ) रिप्रं[१] पापं प्रवृण्वन्ति प्रकर्षेणापनयन्ति। स्नानेन पानेन स्पर्शेणापि मनुष्यान् पुनन्ति।

आपो अस्मान् मातरः शुन्ध्यन्तु घृतेन नो घृतप्वः पुनन्तु। विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत[२] एभिः ( शु० य० वेद भा० सं० ४।२। ) अत एव कर्मकाण्डे आदौ मध्येऽन्त्ये च यथार्हमपामुपस्पर्शनादि विहितमास्ते।

**आपां प्रणयनस्वस्वरूपम्**

सर्वत्र कर्मकाण्डे जलस्यावश्यकता वर्तत एव। तदिदं जलं कर्मारम्भे संगृह्यते। तत्र पौराणिके कर्मकलशार्चनविधिना, स्मार्ते श्रौते चापां प्रणयनविधिना उपकल्प्यते। तत्राप्रसिद्धत्वाच्छ्रौतोऽपां प्रणयनविधिरुच्यते। अध्वर्युर्गार्हपत्यस्याग्नेरुत्तरः पूर्वकल्पिते आसने उपविश्य वरुणकाष्ठनिर्मितं चतुष्कोणं चमसं वामहस्ते कृत्वा दक्षिणहस्तस्थोदपात्रेण स्वयं तस्मिन् ( चमसे ) उदकम् ( अपो जलमिति यावत् ) आसिच्य दक्षिणहस्तेन तमादाय गार्हपत्यस्योत्तरतो निधाय मन्त्रेण तमालभते। ततः 'ब्रह्मन्नपः प्रणेष्यामि' ( का० कौ० २।३।२ ) इति ब्रह्माणं पृच्छति। ब्रह्मा च—

ॐ प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु।
सप्तऋषीणां सुकृता यत्र लोकास्तत्रेमं यज्ञं यजमानं च धेहि' ॥

( का० श्रौ० सू २।२।८ )।

---

(५) तादर्थ्ये—तदन्तरेण ऋणमेतत्।
(६) छिद्रे—परान्तरे प्रहर्त्तव्यम्।
(७) आत्मीयार्थे—अयमत्यन्तरो मम।
(८) विनार्थे—अन्तरेण पुरुषकारम्।
(९) बाह्यार्थे—अन्तरे, अन्तरा वा चण्डालगृहाः।
(१०) अवसरार्थे—अन्तरङ्गसेवकः।
(११) मध्येऽर्थे—आवयोरन्तरे जातः पर्वतः।
(१२) अन्तरात्मार्थे—द्दष्टोऽन्तरे ज्योतीरूपः।
(१३) सादृश्यार्थेऽपि-हकारस्य घकारोऽन्तरतमः।

१. 'वज्रो वा आपः' ( शतपथ० १।१।१।१७ पृ० ११ )
२. 'वज्रो हि वा आपः' ( शतप० १।१।१।१९। )

इत्यन्तमुपांशु पठित्वा 'ॐ प्रणय' इत्युच्चैरुक्त्वा तमनुजानाति। ततोऽध्वर्युस्तं चमसं गृहीत्वा आहवनीयाग्नेरुत्तरस्यां दिशि पूर्वकल्पित आसने प्राङ्मुख उपविश्य बर्हिर्वेदि दर्भेषु तं सजलं चमसं मन्त्रेण स्थापयति। एवमत्रापां (जलस्य) यत् प्रणयनं स्थापनं क्रियते तदेतत् अपां प्रणयनं नाम। असुररक्षांसि यज्ञविघातकतत्त्वानि यज्ञं प्रविष्टानि न स्युः, प्रविष्टानि च नष्टानि दूरं गतानि (अपसारितानि) वा भवेयुरेतदर्थमेवापां प्रयणयनं क्रियते। आपो हि तेषामसुररक्षस्तत्त्वानां नाशार्थे वज्ररूपा सन्ति। अतो हेतोः तासामादौ प्रणयनं स्थापनं क्रियते। अपामिदं बलोद्यमनमेवास्ति[1] यस्माद् भीतानि, असुररक्षस्तत्त्वानि यज्ञं न व्याप्नुवन्ति। तस्मादेव अपां प्रणयनं क्रियत इति।

अथ च 'अप एव ससर्जादौ' इति पूर्वोक्तमनु (१।८) वचनानुसारेण सृष्ट्यादौ सृष्टाभिराभिरद्भिरिदं सर्वं सृष्टिप्रपञ्चतत्त्वजातम्, आप्तमस्ति[2] ततस्तासाम् (अपामुपस्पर्शनेन स्पर्शेणाचमनेन प्रोक्षणेन) प्रणयनेन सर्वं कर्म कर्मफलं चाप्तं भवति। एवं चात्र यज्ञे कर्मणि कर्मकाण्डे होत्रा अध्वर्युणा ब्रह्मणाग्नीध्रेण स्वयं यजमानेन च सङ्घीभूतेनापि कर्त्रा प्राप्तव्यं प्रापयितव्यं यद्यत् कर्म कर्मफलं च स्वस्वप्रमादात् प्राप्तुं प्रापयितुं पूरयितुं शक्यते, तत्सर्वं कर्म कर्मफलं च अपां प्रणयनेनानेन तथा उपस्पर्शनेन स्पर्शेण आचमनेन प्रोक्षणादिना सम्यग् आप्तं[3] लब्धं पूर्णं च भवति। तस्मादपां कर्मादौ कर्मान्ते क्वचित्कर्ममध्ये तत्र तत्र सर्वत्र भारतीयकर्मकाण्डे उपस्पर्शनस्याचमनस्य प्रोक्षणस्य मार्जनस्य प्रणयादीनां च विधिर्दृश्यत इति।

**अपां सर्वमयत्वम्**

"आपो वा इदं सर्वं भूतान्यापः प्राणा वा आपः पशवो आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दांस्यापो ज्योतींष्यापो यजूंष्यापः सत्यमापः, सर्वा देवता आपो भूर्भुवः सुवराप ओम्" इति तैत्तिरीयारण्यकश्रुत्या आप एव (जलमेव) सर्वमस्ति, तस्मात् सर्वावाप्तये (तत्तत्कर्मणां पूर्तये कर्मफलानां च समुपलब्धये) तत्तत्कर्मणि अपामुपस्पर्शनं स्पर्शं आचमनं प्रोक्षण-मार्जन प्रणयनादिकं सर्वं क्रियत इति।

---

१. "यद्वै आपः प्रणयति। देवान ह वै यज्ञेन यजमानास्तान् असुररक्षसानि ररक्षुर्न यक्ष्यध्वं इति''''ततो देवा एतं वज्रन्ददृशुर्यदपः—तत एतं वज्रमुद्यच्छन्। तस्य भयेऽनाष्ट्रे निवाते यज्ञमतन्वत—तस्मादपः प्रणयन्ति अनाष्ट्रे नाशयन्तीति नाष्ट्राण्यसुररक्षसानि तद्रहिते "निवाते" तत्संस्पृष्टेन वातेनापि रहिते स्थाने।

२. "अद्भिर्वा इदं सर्वमाप्तम् (शतप०" १।१।१।१४) आप आप्नोतेस्तासामेषा भवति (निरु० दैवतकाण्डे अ० ६। खं० २७।२१ पृ० ६९२) टीका" सर्वमाभिराप्यमिति।

३. यद्वैवास्यात्र होता वा अध्वर्युर्वा ब्रह्मा वा आग्नीध्रो वा स्वयं यजमानो वा नाभ्याप्यति—तदेवास्यै तेन सर्वमाप्तं भवति" (शतप० १।१।१।१५।)

महाभारतस्यादिपर्वान्तर्गतपौलोमपर्वणि सप्तमाध्याये—

आपो देवगणाः सर्वे आपः पितृगणास्तथा
... ... ... ... ... ॥ ८ ॥

इत्युक्तम् ।

अतएव बहुषु स्थलेषु जल एव पूजनं आहुतिप्रदानं च देवोद्देश्येन क्रियते । अपां पर्यायशब्दैरमृतत्वं जीवनत्वादि दिव्यशक्तिसम्पन्नत्वं विदितमास्ते ।

आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।
पयः कीलालममृतं जीवनं भुवनं वनम् ॥
( अमरको० १।१०।३ ॥ )

दर्भाः

अपामेव केचित् विशेषसारभागाः, दर्भात्मना परिणताः । तथाहि—शतपथ-ब्राह्मणे—

वृत्रो ह वा इदं सर्वं वृत्वा शिश्ये ।
यदिदमन्तरेण द्यावा पृथिवी ।
स यदिदं सर्वं वृत्वा शिश्ये तस्माद् वृत्रो नाम[१] ॥ ४ ॥

तमिन्द्रो जघान । हतः पूतिः सर्वत एवापोऽभिप्रसुस्राव । सर्वत एव ह्ययं समुद्रः । तस्मादु हैका आपो बीभत्सांचक्रिरे । ता उपर्युपर्यत्तिप्नुविरे । अत इमे दर्भाः । ता एता अनापूयिता आपः । अस्ति वा इतरासु संसृष्टामिव यदेना वृत्रः पूतिर-भिप्रास्रवत्[२]—॥ ५ ॥ ( श० ब्रा० १।१।१।३ पृ० २६ । )

अतो हि दर्भाणामपि भारतीयकर्मकाण्डेषु सर्वत्रोपयोगः क्रियते । एवं करणैः सर्वेषां पदार्थानां सर्वविधं पावनत्वं सम्पद्यते । दर्भेष्वपि काश्चिद् विशिष्टा शक्तयः सन्ति याश्चापि बहूपकुर्वन्ति । यथावसरं तासां स्वरूपविकृतिरप्यन्यत्र करिष्यते ।

१. वृत्वा शिश्ये इति । आवृत्य शयनं कृतवान् । शीङ् लिटि ( अदा० आ० ) "एरनेकाचः"—( पा० सू० ६।४।८२ ) इति यण् । द्यावापृथिवी इति । द्यौश्च पृथिवी च द्यावापृथिव्यौ ( पा० सू० ६।३।३० ) इत द्यावादेशः । "अन्तरान्तरेण" ( पा० सू० २।३।४ ) इति द्वितीया । द्यावापृथिव्योर्मध्य इत्यर्थः । वरणाद् वृत्रं इति नाम निर्वक्ति स यदिति ॥

२. तमिन्द्रो जघान । स हतः पूतिः सर्वतः एवापोऽभिप्रसुस्राव । सर्वत इव ह्ययं समुद्रः । तस्मादु हैका आपो बीभत्सांचक्रिरे । ता उपर्युपर्यतिप्नुविरे । अत इमे दर्भाः । ता हैता अनापूयिता आपः । अस्ति वा इतरासु संसृष्टमिव यदेना वृत्रः पूतिरभिप्रास्रवत् । तदेवासामेताभ्यां पवित्राभ्यामपहन्ति । अथ मेध्याभिरेवाद्भिः प्रोक्षति । तस्माद्वा एताभ्यामुत्पुनाति ।

**पात्रपरिचयः**

अत्यधिकमुपयोगिनां यज्ञियपात्राणां द्रव्याणां च स्वरूपं लक्षणं चोच्यते सुखावबोधाय—

१—स्रुवः—खादिरः, अङ्गुष्ठपर्ववृत्तगर्तः, पर्वार्धखातः, अरत्निपरिमाणः ।

२—स्फ्यः—खादिरः खड्गाकृतिः, अरत्निमात्रम् ।

३—जुहूः—मूलदण्डा त्वक्कोबिला, हंसमुखसदृशैकप्रणालिकायुता प्रादेशार्धपुष्करा तावत्खाता, पलाशकाष्ठनिर्मिता ।

४—उपभृत्—मूलदण्डा त्वक्कोबिला हंसमुखसदृशैकप्रणालिकायुता प्रादेशार्धपुष्करा तावत्खाता, अश्वत्थकाष्ठनिर्मिता ।

५—ध्रुवा—त्वक्कोबिला हंसमुखसदृशैकप्रणालिकायुता प्रादेशार्धपुष्करा विकङ्कतवृक्षनिर्मिता ।

६—अग्निहोत्रहवणी—त्वक्कोबिला, हंसमुखसदृशैकप्रणालिकायुता प्रादेशार्धपुष्करा तावत्खाता वैकङ्कती ।

७—अग्निहोत्रस्रुवः—स्रुववत् हंसमुखसदृशैकप्रणालिकायुतो वैकङ्कतः ।

एतादृशो माध्यन्दिनीयेषु न प्रचलति । मद्रदेशे आपस्तम्बीयानामेष साम्प्रदायिकः स्रुवः ।

८—उलूखलम्—अर्थलक्षणं वरणकाष्ठनिर्मितम् ।

९—मुसलम्—अर्थलक्षणं वरणकाष्ठनिर्मितम् ।

खादिरं मुसलं कार्यं पालाशः स्यादुलूखलः ।
यद्वोभौ वारणौ कार्यौ तदभावेऽन्यवृक्षजौ ॥

१०—कूर्चः—बाहुमात्रः पीठाकारः ।

११—इडापात्री—अरत्निमात्री चतुरङ्गुलदण्डा मध्यसङ्गृहीता, नवा, चतुरङ्गुलपरिणाहवती ।

१२—पुरोडाशपात्री—प्रादेशमात्री समचतुरस्रषडङ्गुलवृत्तखातवती ।

१३—शम्या—बाहुमात्री पद्मकोशवत् पृथुतीक्ष्णाग्रमुखा ( गदावत् ) ।

१४—उपवेषः—प्रादेशमात्रः पलाशशाखातः कृतः ।

१५—प्रशित्रहरणम्—गोकर्णाकृति, आदर्शाकृति वा ।

१६—शूर्पम्—वैणवं यथेच्छपरिमाणम् ।

प्रस्फोटनं शूर्पमस्त्री, चालनी तितउः पुमान् । ( अ० २।९।२६ ) शूर्पयति शूर्प्यतेऽनेन वा शूर्पमाने ( चु० प० से० ) ( नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ) ( ३।१।१३४ ) अच् । "पुंसि" संज्ञायां घः प्रायेण ( ३।३।११८ ) इति घो वा । "सूर्प च" इति पाठाद् दन्त्यादिरपि शब्दोऽयम् ।

१७—चमसः त्र्यङ्गुलदण्डः चतुरङ्गुलोच्छ्रायः षडङ्गुलविस्तारः प्रादेशमात्रो वरणकाष्ठनिर्मितः। (अप्प्रणयनार्थः)।

१८ योक्त्रम्—गुञ्जानिर्मितम् (पत्न्याः कट्यां बन्धनार्थम्)।

१९—मदन्तीपात्रम्- पित्तलमयम्, संयवनार्थानामपामुष्णीकरणाय।

२०—भैक्षणम्—वरणवृक्षनिर्मितं पिष्टसंयवनार्थमरत्निमात्रम्।

२१—अन्वाहार्यस्थाली—पुरुषचतुष्टयभोजनपर्याप्तान्नपचनयोग्यं ताम्रं पैतलं वा पाकपात्रम्।

२२—पिष्टलेपपात्रम्—वरणवृक्षनिर्मित्रम्।

२३—फलीकरणपात्रम्—वरणवृक्षनिर्मितं प्रादेशमात्रम्।

२४—शकटः—लौकिकशकटाकारस्वार्थलक्षणः।

२५—कपालानि—एकोर्नविंशतिः स्फुटितभाण्डावयवभूतानि वर्तुलानि, चतुरस्रार्ध-चतुरस्राणि वा। एतादृशानि आपस्तम्बीयानामेव माध्यन्दिनीयास्तु अश्वशफमात्रं वृत्तं निर्माय तत्र क्षेत्रे यावतां कपालानां विधौ संख्या श्रूयते तावन्ति शकलानि दक्षिणतोऽधिकसंख्यया यथा भवेयुस्तथा कुर्वन्ति। तत्रैव च पुरोडाशश्रपणं कुर्वन्ति।

२६—इध्मकाष्ठानि—यज्ञियवृक्षकाष्ठानि चाग्नीन्धनार्थम्।

२७—कुशाः—वेद्यास्तरण-पवित्रकरण-परिस्तरणार्थाः।

२८—अध्वर्युब्रह्मयजमानानामासनानि दर्भमयानि दारवाणि वा।

२९—व्रीहयो यवा वा—पुरोडशप्रकृतिभूताः।

३०—आज्यम्—गव्यं माहिषम्, आजं वा।

३१—यवागूः—अग्निहोत्रार्थाः आतञ्चनार्था च।

३२—कृष्णाजिनम्—उलूखलस्याधस्तादास्तरणाय।

**सान्नाय्यपात्राणि**

१—कुम्भी—मृन्मयी पयश्श्रपणार्था अर्थलक्षणा।

२—दोहनपात्रम्—अर्थलक्षणं दारुमयम्।

३—अभिधानी—गोबन्धनी रज्जुः अर्थलक्षणा।

४ निदाने—दोहनकाले गोपादबन्धनार्था वत्सबन्धनार्था च रज्जू।

५—पिधानपात्रम्—कुम्भीमुखपिधानार्थम् आयसा, दारुणा वा (पृ० ३३) निर्मितमर्थलक्षणम्।

६—शिक्यम्—मुञ्जतृणनिर्मितमर्थलक्षणम् दधिपात्रनिक्षेपणार्थम्।

७-यजमानभागदधिपयोनिक्षेपणार्थे यज्ञियवृक्षनिर्मिते द्वे पात्रे।

८—पलाशशाखा—वत्सापाकरणार्था शमीशाखा वा तदर्था।

# षष्ठोऽध्यायः

## कर्मकाण्डानां साम्प्रतिकानुष्ठानस्वरूपाध्यायः

### कर्मकाण्डस्य साम्प्रतिकानुष्ठानस्वरूपचिन्तनम्

भारतीयकर्मकाण्डानां जनसाधारणे यथा प्रसृतिर्वर्तते तत्र तान्त्रिककर्मकाण्डानामनुष्ठानविलोप इवास्ति। यानि चाधुना कर्मकाण्डानि प्रचलितानि तेषु वैदिकमेव कर्मकाण्डं श्रुति-स्मृति-पौराणिकतयाभिज्ञानं सर्वजनसमादृतम्। यद्यप्यत्र द्वितीयाध्याये तेषां पृथक् पृथग्विवरणं प्रदत्तमास्ते। तथापि संक्षेपेण त्रयाणामपि सैद्धान्तिकभेदज्ञापनाय किंचिदिहोपस्थाप्यते।

आर्या हि भारतगौरवमूलभूते लोककल्याणसाधने वैदिके शब्दराशौ परं श्रद्धधानाः—

"यः समिधा य आहुती, यो वेदेन ददाश मर्तो अग्नये।
यो नमसा स्वध्वरः।
तस्येदर्वन्तो रंहयन्त आशवस्तस्य द्युम्नितमं यशः।
न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत्॥" इति।

—(ऋ० ८।१९।५-६)

मोघमन्नं विन्दते अप्रचिताः सत्यं ब्रवीमि वध इत्स तस्य।
नार्यमणं पुष्यति नो सखायं 'केवलाघो भवति केवलादी'॥

—(ऋ १०।११७।)

तदीयमनुशासनं शिरसा हृदयेन चाद्रियन्तोऽद्य यावद् यज्ञादिकर्मानुतिष्ठन्ति।

यद्यपि पूर्वकालापेक्षया संप्रति सर्वस्यापि शास्त्रीयकर्मणो विशेषतश्च प्रत्यक्षश्रुतिसमुपदिष्टस्य श्रौतकर्मणो नानुष्ठानं भवतीत्यस्माकं कालशिक्षासहकृतः प्रमादपरिचय एव, तथापि बहुभिरनार्यैर्वेदवैदिकविद्वेषिभिर्वा बहुवारं कर्ममार्गस्यास्योन्मूलनाय कृतेऽपि बहुविधे प्रयत्ने सारभूयिष्ठत्वादस्य ग्रन्थतः संप्रदायतश्चाक्षुण्ण एवायं मार्गो विराजमान आस्ते।

### कर्मणां त्रैविध्यम्

व्यक्तिशः कर्मणां भेदानन्त्येऽपि प्राधान्येन श्रौतस्मार्तपौराणिकभेदभिन्नतया त्रिविधान्येव कर्माणि वैदिकानीति वैदिकेषु सम्प्रति प्रसिद्धानि। तत्र यानि हि

प्रत्यक्षश्रुतिसमुपदिष्टानि श्रौतादि कर्माणि तेभ्यो स्मार्तेषु देवता-द्रव्यर्त्विगादि-विषयकं किंचिदिव वैलक्षण्यं ततोऽभ्यधिकं च पौराणिकेषु कर्मसूपलभ्यते ।

**देवता**

याज्ञिका हि देवतानां विग्रहवत्वं बहुत्वं चाभिप्रयन्ति । न तु मीमांसकवत् मन्त्रात्मकत्वम् । तत्र एकस्या देवताया बहूनि नामानि गुणतः कर्मतश्च संभवन्ति । तत्र श्रौते स्मार्ते च कर्मणि देवतानां हविर्भावत्व-स्तुति-भावत्व-उभयभावत्वरूपेणास्ति भेदत्रैविध्यम् ( नि० ७।१३ ) पौराणिके तु सर्वासामपि हविः ।

स्तुत्युभयभावत्वरूपमेकविधमेवोपलभ्यते । न हि पौराणिकी काचनेदृशी देवता दृश्यते या केवलं स्तुतिवचनेनान्विता तत्र वान्यत्र वा हविर्भावत्वेन न श्रुता स्यात् । तस्या हि किमप्यभिधानं तु ईदृगुपलब्धुं शक्यते यद्धि स्तुतिवचने प्रयुक्तमपि होमहविर्भावत्वेन न विहितं स्यात् । यथा—शालग्रामः, नर्मदेश्वरः इत्यादि ।

यथा हि श्रौतं बहुषु स्थलेषु 'इन्द्राग्नी, मित्रावरुणौ, अग्नीमरुतौ, इति देवताद्वन्द्वशब्दैर्हविः प्रदानं स्तुतिश्चोपलभ्यते । इतरयोस्तु देवताद्वन्द्वसंबन्धो हविः प्रदानेऽनुश्रूयते । श्रौते स्मार्ते चादृष्टमपि स्त्रीपुंदेवतयौरेकत्र द्वन्द्वश्रुत्या ऐकरूप्येण वा देवतात्वं, पुराणेषु तदनुयायिभिश्च समाद्रियते । यथा—'अर्द्धनारीश्वरः, लक्ष्मीनारायणः, सीतारामौ' इत्यादि ।

श्रौते कर्मणि कामनासंबन्धि गुणसंबन्धि वा एकस्या एव देवताया नाम हविर्विधाने सविशेषणं 'विमृध इन्द्रः, अग्निरनीकवान्, अग्निः पथिकृत्' इत्यादि श्रौते स्मार्ते पौराणे कर्मणि च अग्निं स्विष्टकृतं, आश्वयुज्यादिविशेषितां पौर्णमासीं चेति मितानि स्थलानि वर्जयित्वा न हि देवतायाः सविशेषणाया होमो विधीयते । केवलं विशेषणपदस्य तु देवतात्वं तदुद्देशेन हविः प्रदानं च स्मार्ताः पौराणिकाश्चाभ्यनुजानते 'सीता गौसारः, उपेन्द्रः महेन्द्रः इत्यादिना । पौराणिके प्रतिष्ठाकर्मणि देवताविशेषणानां नाम्ना विशेष्यदेवतायां तत्तदङ्गेषु विधीयमानो न्यासोऽपि श्रौतात्स्मार्ताच्चास्य कर्मणो वैलक्षण्यमावहति ।

स्मार्ते कर्मणि ब्रह्मणे हविः प्रदीयते । पौराणकर्मसु सर्वतोभद्रादिमण्डलेषु ग्रहाधिदेवताप्रत्यधिदेवतासु दिक्पालेषु च ब्रह्मणो देवतात्वेन समर्चनं सृष्टिस्थिति-संहारकर्त्रीषु तिसृषु देवतासु सृष्ट्यधिकारित्वेन च संकीर्तनं भवदपि स्वातन्त्र्येण शिव-विद्यावादिवदर्चनं नोपलभ्यते । श्रौते च सृष्टिकर्त्तुः प्रजापतित्वेन संकीर्तनाद् ब्रह्मशब्देन देवतात्वमत्यल्पमेवोपलभ्यते ।

यथा हि नैरुक्ताः दार्ष्टिविषयिके अग्नेः ( नि० ७।८ ) बल-धन दातृत्वं चेन्द्रस्य ( नि० ७।१० ) प्रवह्लितं ( अन्तर्धानं कर्म-चलनं वा ) गूढाभिसन्धितं चादित्यस्य कर्माभिप्रयन्ति तथैव पौराणिका विभिन्नासु कामनासु भिन्नभिन्नाया देवताया उपासनमनुमन्वन्ते । तथाहि—

ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम् ।
इन्द्रमिन्द्रियकामस्तु प्रजाकामः प्रजापतीन् ॥
देवीं मायां तु श्रीकामस्तेजस्कामो विभावसुम् ।
वसुकामो वसून् रुद्रान् वीर्यकामोऽथ वीर्यवान् ॥
अन्नाद्यकामस्त्वदितिं स्वर्गकामोऽदितेः सुतान् ।
विश्वान्देवान् राज्यकामः साध्यान् संसाधको विशाम् ॥
आयुष्कामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत् ।
प्रतिष्ठाकामः पुरुषौ रोदसी लोकमातरौ ॥
रूपाभिकामो गन्धर्वान् स्त्रीकामोऽप्सर उर्वशीम् ॥' इत्यादि ।

( भा० २।३।२-१० )

माहाभाग्यात्सर्वासु देवतासु ऐश्वर्यं विद्यतेऽभिमतफलदातृत्वशक्तिश्चेति ( नि० ७।४, १३।१ ) राद्धान्तस्तु त्रिविधेष्वपि कर्मसु अविशिष्ट एव ।

श्रौतकर्मणां बहुत्वेऽपि देवतानाम् बहुत्वं पौराणिकदेवतानामिव न दृश्यते । श्रुतिषु देवतानामुपासने आवाहनं स्तुतिः हविःप्रदानमिति रूपत्रयं दृश्यते ( नि० ४।५ ) पुराणेषु च यत् जप-होमा र्चना-भिषेक-दानात्मकत्वेन पञ्चधा विभक्तम-प्यवान्तरभेदेन बहु विभिद्यते ।

**देवताधिष्ठानम्**

श्रौतस्मार्तदेवतानां अग्निमुखत्वं ब्राह्मणमुखत्वं च दृष्टं पौराणिकीनां प्रतिमात्मकाधिष्ठानमुखत्वमेकं विशिष्यते । तत्राधिष्ठानं उपादानभेदेन शिलादार्वा-दिमयं बहुविधं दृश्यते । तथा च—

'शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥

( श्रीमद्भागवतम् )

'प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु ।
अपि वाक्षतपुंजेषु'

( छन्दोगपरिशिष्टम् )

'स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा ।'

( याज्ञवल्क्यस्मृतिः १।२९८ )

एतेष्वन्यतमे कल्पित आश्रये देवताधिया तन्नाम्ना अर्चनाभिषेकादिविधीयते। कल्पितेष्वाश्रयेषु प्रतिष्ठानपूर्वकमावाहनमावश्यकं भवति। शालग्राम-नर्मदेश्वरादि-पुराणोक्तस्वयंसिद्धदेवताश्रयेषु आवाहन-प्रतिष्ठादिमन्तरापि पूजनमभ्यनुज्ञायते।

वैदिकेषु केचन लोकत्रयाश्रयेण अग्निरिन्द्रः सूर्य इति देवतात्रयं मन्वते। पौराणिकाश्च शिव-विष्णु-देवी-सूर्य विनायकेति प्राधान्येन पञ्चानां देवतानामुपासना-मुपदिशन्ति। तत्र वेदे एकस्या एव देवतायाः शान्तमशान्तं चेति नाम द्वैविध्यं देशभेदेन च भिन्नानि नामानि श्रूयन्ते। यथा 'अग्निर्वै देवस्तथैतानि नामानि शर्व इति। यथा प्राच्या आचक्षते, भव इति। यथा वाहीकाः पशूनां पती रुद्रोऽग्निरिति। तान्यस्या-शान्तान्येवेतराणि नामान्यग्निरिति शान्तम्' (श० ब्रा० १।७।३।८) इति। पुराण-देवतानां सर्वासामपि त्रिगुणातीतचिदात्मकत्वेन ऐकरूप्येऽपि प्रयोजनानुरोधेन कृत्यभेदात् सात्त्विकादिगुणात्मकरूपभेदपरिग्रहवशेन व्यवहारभूमौ बहुरूपत्वं दृश्यते। तथा च—

| देवः | शान्तं रूपम् | अशान्तं रूपम् |
|---|---|---|
| शिवस्य | शङ्करः, दक्षिणामूर्तिः, मृत्युञ्जयः, दत्तात्रेयः | भैरवः, क्षेत्रपालः हनुमान् ( मरुतः पुत्र-त्वान्मारुतिः, रुद्रा-वतार इति च गीयते। |
| विष्णोः | चतुर्भुजनारायणः, द्विभुजो विष्णुः, रामः, कृष्णः | नरसिंहः: वराहः |
| शक्तेः | अन्नपूर्णा, लक्ष्मीः, सरस्वती, | चण्डिका, काली, तारा, वनदुर्गा |
| सूर्यस्य गणपतेश्च | प्रायः शान्तमेव रूपम् | |

एतेषां सूर्यादिनवग्रहाणां च यज्ञकर्मणि अङ्गत्वेन, स्वातन्त्र्येण च समर्चनं दृश्यते। तथा च पञ्चसु देवतासु स्वतन्त्रापि गणपतिर्देवता श्राद्धप्रायश्चित्तातिरिक्त-सर्वकर्मसु सर्वप्रथमं समर्च्यते। एवं श्रौतीयान्वारंभणीयेष्टेरिव पद्धतिकारैः स्मार्ते पुण्याहवाचनं, मातृकापूजनम्, आभ्युदयिकश्राद्धं चेति त्रिष्ववश्यकर्तव्यतया प्रतिपाद्यते। सहोमकेषु च स्मार्तपौराणकर्मसु आघारौ, आज्यभागौ, महाव्याहृतयः, सर्वप्रायश्चित्तं, प्राजापत्यं, स्विष्टकृच्च भगवता पारस्करेण ( पा० गृ० १।५।३-४ ) नित्यतया विधीयन्ते।

यद्धि श्रौते यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद् वषट् करिष्यन् ( न० ८।२० ) इत्यनुशासनेन यजनाय देवतायाः मानसिकं ध्यानमभ्यनुज्ञातं तदेव पुराणेषु 'ध्यायेन्नित्यं महेशम्' इति श्लोकरूपेणोक्तं साम्प्रतिकैः वाचनिकत्वेनापि समाद्रियते।

एवं श्रौतेऽनुपलभ्यमानमपि वितत्य-गृहक्षत-दौवारिक-भृंग-राजइन्द्रचौर मृगलोचनादीनां बह्वीनां देवतानां पौराणिककर्मसु पूजनाद्यभ्यनुज्ञायते।

ब्रह्मणस्पति-क्षेत्रस्य पत्यादयश्च पौराणे बृहस्पति-क्षेत्रपालादिनाम्ना आत्म्या ऋभव इत्यादयश्च विलुप्ताः इन्द्रवरुणाभ्यादयश्च यथातथं परिदृश्यते।

**द्रव्यम्**

श्रौतकर्मणि पुरोडाशस्य पशूनां सोमस्य च हविष्ट्वमतीव दृश्यते। पुरोडाशस्य' यद्दैवत्यः पशुर्भवति तद्दैवत्यं पुरोडाशमनुनिर्वपति' ( श० ३।८।३।१ ) इति पशुहविर्यागेऽपि पारतन्त्र्येणाप्यनुष्ठानमपुलभ्यते पशुरूपहविषः. चरोश्च पाकः स्थाल्यां, पुरोडाशस्य पाकः मृत्खण्डात्मकेषु एकद्वयाद्युक्तसंख्याकेषु कपालेषु क्रियते। सोमस्य चापक्वस्यैव हविष्ट्वम्। कासाञ्चिद्दैवतानां कृते मन्थसक्वादिसम्मिश्रणेन सोमस्य हविष्ट्वमाम्नायते। स्मार्तेषु न हि सोमोपयोगः पुरोडाशोपयोगश्च। यतो हि तानि सामान्यतया त्रैवर्णिकाधिकारीणि कर्मण्युपयुक्तस्य च हविषः प्रतिपत्तितया भक्षणविधायकस्य 'हुत्वा शेषप्राशनम्' ( का० श्रौ० ६।१०।२७ ) इति शासनस्य क्षत्रियवैश्याभ्यां समादरणे श्रुतिविरोधः, आनादरणे च शासनभङ्ग इति स्मार्तैर्गृह्य-विद्भिः पुराणे च सोम पुरोडाशहविषी नोच्येते। श्रौते हि राजन्यविशोः सोमभक्षणं ( स्वरूपत एव )[1] पुरोडाशभक्षणं ( अग्निपाकहेतुतया )[2] च नाभ्यनुज्ञायते। पारस्करेण श्रवणाकर्मणि एककपालः पुरोडाश उपदिष्टोऽपि सर्वहुतत्वेन बोधितः स्मार्ते कर्मणि पुरोडाशहविषो भक्षणीयत्वमेवानुगृह्णाति। श्रौताग्निपक्वं द्रव्यस्य ब्राह्मणो यजमानः ऋत्विजश्च भक्षणेऽधिक्रियन्ते। स्मार्ताग्निपक्वस्य तु सर्वेऽपि गृह्याः भक्षणे समनुज्ञायन्ते।

पशुहविषोऽपि गार्ह्ये कर्मणि क्वाचित्क एव उपयोगः। पौराणिकदेवता क्वचित् वृत्तिभेदेन मांसप्रदानविधिरभ्यनुज्ञायते। स्मार्ते पौराणे च कर्मणि चरो-राज्यस्य वा हविषः विशेषः प्रयोग उपलभ्यते। श्रौते हि केवलतण्डुलपाक एव प्राधान्यतया प्रसिद्धश्चरुशब्दः स्मार्ते स्थालीपाकशब्देन व्यवहृतो क्वचन तिलमुद्ग-मिश्रितः, यावो वा उपदिश्यते। स्मार्ते पौराणे च पयस्या आमिक्षा वाजिनम् घृतं चरः इत्यादीनि हवींषि न दृश्यन्ते। श्रौतोक्तः पयसि चरुश्च पायसशब्देन व्यवह्रियते। पौराणिककर्मसु अग्नावपाचितान्यपि तिल-तण्डुल-यवादीनि पृथक्कृत्य समुच्चित्य वा हविष्ट्वेन विधीयन्ते। एवञ्च पौराणिकेषु समित्तिल-चरु-आज्यहवींषि देवताभेदेन समिधां भेदश्च विशेषतोऽवलोक्यते।

१. सोमं मन्यते पपिवान् यत् संपिंषन्त्योषधिम्। सोमं यं ब्राह्मणो विदुर्न तस्याश्नाति कश्चन। ऋ० ८।३।२०।

२. 'तद्वै नाब्राह्मणः पिबेत्, अग्नौ ह्यश्रयन्ति, तस्मान्नाब्राह्मणः पिबेत्' (श० ७।३।१।३६)

त्यागशब्दः स्वाहा-वौषट्-शब्दाभ्यां हविस्त्यज्यते इतरयोस्तु स्वाहा नमः। श्रौते शब्दाभ्यामिति—

**मन्त्रः**

श्रौते एकस्यां कण्डिकायां बहवो मन्त्राः 'परादिना द्रवन्ति' (का० श्रौ० १।३।६) इति परिभाषया यज्ञीयपदार्थस्मारकरूपदृष्टप्रयोजनवत्तया च निश्चीयन्ते। स्मार्ते तु सर्वत्रैवोत्सर्गतः कण्डिकान्त एव मन्त्रो भवति। एवं स्मार्ते हवने आवाहने वा प्रायशः स एव मन्त्र उपयुज्यते यस्य ह्यर्थो देवतया समन्वियात्। पौराणिककर्मसु तु देवतानाम्नः तदेकदेशस्य तादृश्यस्य वा अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निब्रूयादितिवत् (नि० २।१) अक्षरवर्णसामान्येनापि वा आवाहने हवनादौ च कर्मणि लौकिक एव कण्डिकामन्त्राणां विनियोगोऽभ्यनुज्ञायते। यदि श्रौते जलप्रणयनपवित्रकरणादिकं समन्त्रकमुच्यते, तदेव स्मार्ते भगवता पारस्करेण 'रास एव' (पा० गृ० १।१) इत्येवकारमुपाददता मन्त्रप्रयोगं निषिध्य आवृन् मन्त्रेण व्यवस्थाप्यते।

**उच्चारणम्—**

श्रौते कर्मण्युत्सर्गतः जपन्यूङ्खसामानि वर्जयित्वा त्रैस्वर्यं निषिध्य हस्तप्रदर्शनविरहितांस्तान् एव स्वरान्। विधीयते स्मार्ते तु कर्मणि साम्प्रतिका याज्ञिकाः

गृह्यकर्मसु ये मन्त्रा ज्ञेयाः स्वाध्यायपाठतः।
किं च मध्यमवृत्त्या ते न द्रुता न विलम्बिता॥ गद्यकारिका।

इत्यादि प्रमाणयन्तो यथाध्ययनं त्रैस्वर्यं हस्तचालनं च प्रकटयन्ति। पौराणिककर्मसु पौराणिकाः श्लोका वेदमन्त्रवद् मन्त्रत्वेन प्रकीर्त्यमानाः, त्रैवर्णिककर्तृकेषु प्रयोगेषु तत्र तत्र वैदिकमन्त्रैः सह अन्यकर्तृकेषु च स्वातन्त्र्येणैव उपयुज्यन्ते।

**देशः**

श्रौतेषु कर्मसु औषधीनां मूलान्युच्छेत्तवै (का श्रौ० २।६।३) इति श्रुतेः प्रकृत्या सनाथितः जनैरनाकलितश्च देशो व्यहार्यतया अवलोक्यते। इतरयोस्तु अनुष्ठानाधिकरणत्वेन ग्रामादिषु शालाया बहिःप्रदेशस्य वा उपयोगो बहुधा दृश्यते। श्रौते कर्मणि यज्ञानुष्ठानोपयिका भूमिर्वेदिः। सा च त्र्यङ्गुलखाता यथाशास्त्रं विपुलायामिका मध्यसंगृहीतादि गुणवती विधीयते। इतरयोस्तु यज्ञानुष्ठानोपयिको देशः शालात्वेन वा यथानुष्ठानं चतुर्हस्तादिशतहस्तान्तः समचतुरस्रो व्यवह्रियते। तस्याच्छादनं च चतुर्दिक्प्रवणत्वात् मण्डपेन सह श्रौतवन्नप्राग्वंशत्वेन वा नियम्यते। एवं श्रौतकर्मसु उपयुक्तपदार्थनिरसनाय विधीयमानोऽपि उत्करश्चात्वालसाद्रपोवाऽन्यः प्रदेशः स्मार्ते पौराणिके च उपयुक्तपदार्थानां मनुष्यस्वीकृतिरूप-

प्रतिपत्तिकत्वात् न निर्मीयते। मनुष्यानौपयिकद्रव्याणां च 'द्वारमेव हि द्रव्याणां प्रागुदीच्यां दिशि स्मृतम्।' इत्यैशान्यां अपरिगृहीतभूप्रदेशे एव प्रतिपादनमुपदिश्यते।

**अग्नि:**

श्रौते आधानविषया आहितोऽग्नि: साक्षाद्रूपेण समारूढनिर्मथितरूपेण वा हवि: प्रक्षेपाधिकरणीक्रियते।

स्मार्ते च औपासनिकसमिदाहुतिं वर्जयित्वा स्वात्मसंस्कारकाणि गृह्यकल्पाभ्यनुज्ञातानि च सर्वाण्यपि कर्माणि स्मार्ताग्नौ, अन्यानि तु आत्माभ्युदयाय क्रियमाणानि पौराणिकानि स्वापत्यसंस्कारकाणि च लौकिकाग्नावेव भवन्ति।

पौराणिकेषु तु सर्वेषु लौकिक एवाग्नि:।

**अग्न्यायतनम्**

श्रौतेऽग्न्यायतनं चतुरस्रं वृत्तमर्धचन्द्रं इति त्रिधोपलभ्यते। स्मार्ते च पुन: स्वस्य एकाग्नित्वाभिधानात् एककर्मणि चतुरस्रं वृत्तं वेत्येकमेव विधीयते।

पौराणेषु तु सगर्तानि चतुरस्र-वृत्तार्धचन्द्र-त्रिकोण-योनि-पञ्चास्र-षडस्र-सप्तास्राष्टास्रेति दशविधानि कुण्डशब्देनोच्यमानान्युपलभ्यन्ते। कुण्डाभावे तु गर्तविरहितं मेखलाद्यन्वितमनन्वितं वा स्थण्डिलमप्युपदिश्यते। एकस्मिश्च कर्मणि एक:, चत्वार:, पञ्च, नव, दश, शतं च कुण्डानि कर्तुं शक्यन्ते। शूलगवनाम्नि स्मार्तकर्मणि तु वितानसाधनमप्यभ्यनुज्ञायते।

**पदार्था:**

श्रौते हिरण्यस्य यज्ञसाधनता बहुत्र श्रूयते। स्मार्ते पुनरभावात्मक एव तस्योपयोग:। पौराणिकेषु च कलशान्त: प्रक्षेपणाय रत्नाद्यभावे च तदाद्रियते। श्रौते स्मार्ते च स्वशब्देन सार्वत्रिक: समुपयोगो गन्धपुष्पधूपदीपताम्बूलफलयज्ञोपवीतपूगफलनैवेद्यादीनां, पौराणेषु च सर्वत्रैव देवतोपासनायां तेषामावश्यकत्वमिति महद् वैलक्षण्यम्। एवं श्रौते स्मार्ते च प्रधानदेवताभ्यो होम: एकवारं द्विवारं वा विधीयते। पौराणिके च एकस्मिन्नेव कर्मणि एकस्यै देवतायै एकाहुत्यवर: कोटिपरमश्च होमो दृश्यते। सत्यप्याहुतिबाहुल्ये स्रुक्स्रुवादियज्ञपात्राणां परिगणितत्वमेव, न श्रौतवद् बाहुल्यम्। स्मार्ते पौराणे च कर्मणि आसन्यतन्त्रेऽपि न जुह्वा: समादर:। पौराणिकेषु केवलं पूर्णाहुतिविधानायैव जुह्व: समाद्रियन्ते।

**काल:**

गृह्यकल्पेषु परिगणितप्रामाण्ये एव कर्मणि न सार्वकालिकानि, श्रौते तु बहुलानि सार्वकालिकानि च समुपलभ्यन्ते। पौराणिकानि तु श्रौतेभ्योऽपि विशिष्यन्ते, प्रतिदिवसं च व्रतादिकर्मानुष्ठानाय पुरुषं प्ररोचयन्ति।

**ऋत्विजः**

श्रौते कर्मणि चतुरवराः षोडशपरमा ऋत्विजः श्रूयन्ते। अपेक्षिताश्चान्ये ऋत्विक्पदमलभमाना अपि पुरुषाः कार्यं निर्वहन्ति चमसाध्वर्युसदस्यादयः। स्मार्ते स्वयं यजमान एव ऋत्विक्। यष्टुः पूज्यत्वेनाभिमतः प्राधानिक्या दक्षिणया समर्च्यमानः एक आचार्योऽभिधानः कृताकृतावेक्षणकर्मकरणायाभ्यर्हितो ब्रह्माभिधानः ऋत्विक्त्वेन दृश्यते। पौराणिकेषु तु आचार्य-ब्रह्म सदस्य-गाणपत्यो-पदष्टृ-द्वारपाल-होतृ-जापकादि विशेषसंज्ञया व्यवह्रियमाणा एकादयः सहस्रपर्यन्ता ऋत्विक्त्वेनावगम्यन्ते। एतेषां प्रायशः दक्षिणावैषम्ये सर्वतोऽभ्यधिकं आचार्य एवाधिकुरुते। एष एव च पौराणिककर्मसु प्रधानतमो यज्ञीयः पुरुषः। एतस्य सन्तुष्टीकरणमेव कर्मफलसाधनम्। अयमेव च कर्मणि विनियुक्तानां प्रतिपत्तिसापेक्षाणां पदार्थानां अधिकारी पठ्यते पुराणेषु।

**दक्षिणा**

श्रौते सजीवा निर्जीवा चेत्युभयविधा दक्षिणा तत्तत्कर्मसु नियता श्रूयते। स्मार्तकर्मणश्च बहुत्र यजमानैकमात्रकर्तृत्वेन ऋत्विक्संबन्धाभावात् परिक्रयार्थद्रव्यदानरूपाया दक्षिणाया अभाव एव। ब्रह्माचार्याद्यपेक्षितपुरुषप्रवृत्तये च पूर्णपात्रवरादिद्रव्यदानं विधीयते। आचार्याय प्रदातव्यो वरश्च जातिभेदाद् भिद्यते। यथा—'गौर्ब्राह्मणस्य वरः, ग्रामो राजन्यस्य, अश्वो वैश्यस्य' (पा० गृ० १।१।१५-१७) पौराणिकेषु तु हिरण्यं दक्षिणा प्राधान्यतः, भूमिर्गौर्वस्त्राण्यपि विशेषतया दक्षिणाः वर्तन्ते।

**फलम्**

श्रौतकर्मणां बहुविधं फलं श्रूयते। तत्रापि स्वर्गफलस्य अत्यधिकमुल्लेखः स्मार्ते स्वर्गफलश्रुतिरल्पैव। पौराणिकेषु तु स्वर्गः ब्रह्मपदं मोक्षप्राप्तिः सर्वविधैहिकसुखभोगः प्रायशः समेष्वप्यनुश्रूयन्ते।

तदेवं साम्प्रतिककर्मकाण्डस्वरूपचिन्तनमुपन्यस्तम्।

**पुराणेषु श्रौतयज्ञविषयदिग्दर्शनम्**

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्॥

इत्युक्तेः पुराणेतिहासाभ्यां वेदविषयस्य स्पष्टं महिमानं ज्ञात्वा तदीयकर्मसु तदर्थे च श्रद्धेयमित्येतदुपबृहणं ज्ञायते। सत्यपि पुराणानां बहुत्वे जनसाधारणसमादृतोऽतिप्रसिद्धः श्रीमद्भागवतमहापुराणाख्योऽस्ति पुराणग्रन्थः। तस्यैव कतिचिदुदाहरणानि श्रौतयज्ञपरिचयात्मकानि श्रौतवैदिककर्मणां फलसाक्षित्वरूपेणात्र विलिख्यन्ते।

यज्ञापरपर्यायाणि सर्वाण्यपि वैदिककर्माणि मूलतः पञ्चधा विभक्तानि 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति ऐतरेयब्राह्मणम्। तत्र अग्निहोत्रम् दर्शपूर्णमासौ आग्रायणम् चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणी पिण्डपितृयज्ञादयो दर्विहोमा इत्येव सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्याम इति सप्त सोमसंस्थाः, इत्यस्यैव पूर्वोक्तस्य ऐतेरयब्राह्मणवाक्यस्य प्रपञ्चतया गणिताः सन्तीति नाविदितमस्त्यत्र किञ्चिदपि तत्रभवतां भवतां शास्त्रारण्यानीमवगाहमानानां पण्डितपञ्चाननाम्।

एतेषामेव कर्मणां प्रकृतिविकृतिभेदैः आम्नातानि सन्ति बहूनि कर्माणि मानवानामैहिकामुष्मिकेष्टसिद्धिप्रदानि तानि सर्वाण्यपि वैदिककर्माणि यज्ञाः, मन्त्रप्रयोगाश्च मनुष्याणां सर्वेष्टसिद्धिदायका सन्ति। पुरा खलु धर्मैकतानस्थितौ भारतेऽस्मिन् वर्षे इमे साधुसमुज्ज्वलिता सर्वैरपि लौकिकपारलौकिकमनोरथसाधकैः यथाधिकारमवश्यमेवाश्रयणीयत्वेनाभिमता आसन्।

यद्यपि शुकमुखात् गलिते अमृतद्रवसंयुते आलयपेये रसरूपे निगमकल्पतरोः फले पुराणसर्वस्वे श्रीमद्भागवते धर्मापरपर्यायस्य यज्ञपदाभिधेयस्य वैदिककर्मणः वैदिकमन्त्रप्रयोगस्य 'स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम्' (भा० १।१।१३) इति वाक्येन हरितोषणमेव संसिद्धिरभिमता दृश्यते तथापि संसिद्धिरित्यत्र समुपसर्गवशात् साधुः उत्कृष्टा शोभना वा सिद्धिः हरितोषणम् सर्वाभ्यःसिद्धिभ्यः उत्कृष्टा एका सिद्धिः अपरा च लौकिकसर्वविधमनोरथसिद्धिरित्यत्र नास्ति सन्देहः। अतएव अस्माकं सर्वेऽपि पूर्वजाः अतिसावधानतया तादृशेषु श्रौतकर्मसु सर्वदैव तत्परा आसन्। तादृशाः सन्तश्च उत्तमोत्तमाः लौकिकीः पारलौकिकीश्च सिद्धीरपि लभन्तेस्म। एतादृशानाम् वैदिकानां यज्ञानां कर्मणां तथैव हि वैदिकमन्त्रप्रयोगाणां तज्जन्यसिद्धीनां च समुल्लेखः (चर्चा) बहुत्र प्रायः सर्वत्रैवास्ति पुराणेषु।

श्रीमद्भागवतस्य द्वितीयस्कन्धे तृतीयाध्याये नवसु पद्येषु सर्वत्र यजेत इत्याख्यातपदं दृष्ट्वा तत्रादृष्टमध्याहार्यञ्च देवतागतोद्देशांशः द्रव्यगतत्यागांशः देवतामुद्दिश्य त्यक्तस्य द्रव्यस्य कुत्र प्रक्षेप इत्याकाङ्क्षायां यदाहवनीये जुहोति (तै० ब्रा० १०।१०।१०) इत्यादिना आहवनीयादिषु यः प्रक्षेपः क्रियते स प्रक्षेपांशश्च इत्येवं यागविषयकं उद्देशांशः, त्यागांशः, प्रक्षेपांशः इति त्रितयं तत्र तत्र सम्भाव्य तत्तद्देवताकान् वैदिकान् (श्रौतान्) यागान् मत्वा तज्जन्या सिद्धयोऽपि श्रौतसिद्धयः अनुष्ठातॄणां विविधमनोरथपूरका सन्ति इत्यत्र नास्ति सन्देहः। यथा च निर्दिशति भगवान् वेदव्यासः—

ब्रह्मवर्चस्कामस्तु यजेत ब्रह्मणस्पतिम् ।
इन्द्रमिन्द्रियकामस्तु प्रजाकामः प्रजापतीन् ॥ २ ॥
देवीं मायां तु श्रीकामस्तेजस्कामो विभावसुम् ।
वसुकामो वसून् रुद्रान् वीर्यकामोऽथवीर्यवान् ॥ ३ ॥
अन्नाद्यकामस्त्वदितिं स्वर्गकामो दितेः सुतान् ।
विश्वान् देवान् राज्यकामः साध्यान् संसाधको विशाम् ॥ ४ ॥
आयुष्कामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत् ।
प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ ॥ ५ ॥
रूपाभिकामो गन्धर्वान् स्त्रीकामोऽप्सर उर्वशीम् ।
आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम् ॥ ६ ॥
यज्ञं यजेद् यशस्कामः कोशकामः प्रचेतसम् ।
विद्याकामस्तु गिरिशं दाम्पत्यार्थ उमां सतीम् ॥ ७ ॥
धर्मार्थ उत्तमश्लोकं तन्तुं तन्वन् पितॄन् यजेत् ।
रक्षाकामः पुण्यजनान् ओजस्कामो मरुद्गणान् ॥ ८ ॥
राज्यकामो मनून् देवान् निर्ऋतिं त्वभिचरन् यजेत् ।
कामकामो यजेत् सोममकामः पुरुषं परम् ॥ ९ ॥
अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ १० ॥
एतावानेव यजतामिह निःश्रेयसोदयः ।
भगवत्यचलो भावो यद् भागवतसङ्गतः ॥

इत्येवं बहवो यज्ञा फलमुखेन देवताभेदेन च प्रतिपादिताः ।

**सन्तानकामेष्टिः**

नवमे स्कन्धे १ अध्याये ब्रह्मणो मरीचिस्तस्य कश्यपः तस्मात् दाक्षायण्यामदित्यां विवस्वान् तस्य संज्ञायां श्राद्धदेवाख्यो मनुर्जातः। स च श्राद्धदेवो मनुः श्रद्धायां स्वभार्यायाम्—

इक्ष्वाकुनृगशर्यातिदिष्टघृष्टकरूषकान् ।
नरिष्यन्तं पृषध्रं च नभगं च कविं विभुः ॥ (भा० ९।१।१२)

इति दश पुत्रान् जनयामास किन्तु यदा पूर्वं स मनुः श्राद्धदेवोऽप्रज आसीत् । तदा भगवान् वसिष्ठः तस्य पुत्रार्थम् मित्रावरुणयोः इष्टिमकरोत्—

अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान् किल ।
मित्रावरुणयोरिष्टिं प्रजार्थमकरोत् प्रभुः ॥ (भाग० ९।१।१३)

पुत्रार्थं क्रियमाणे तस्मिन् यागे श्रद्धानाम्नी मनोः पत्नी होतारम् उपगम्य तं प्रार्थितवती यत् हे भगवन् अनेन पुत्रार्थं क्रियमाणेन यज्ञेन यथा मम कन्या एव भवेत् तथैव भवता मयि दयां कृत्वा क्रिया कर्तव्या तथैव मन्त्रप्रयोगो विधेय इति। ततः तत्प्रार्थनया द्रवितो होता यदा अध्वर्युणा होतर्यज इति प्रैषो दत्तस्तदा हविषि गृहीते अध्वर्यौ एकाग्रचित्तः सन् होता मनुपत्न्या प्रार्थितं कन्या मे यजमानस्य स्यादितिरूपं ध्यायन् वषट्कारं कृत्वा अयजत्। तेन होतुः कर्मदोषेण तस्य मनोः कन्या एव जाता, यस्या नाम इला आसीत्। तां कन्यां विलोक्य नातिहृष्टमना मनुः गुरुं वसिष्ठं प्राह--

भगवन् किमिदं जातं कर्म वो ब्रह्मवादिनाम्।
विपर्ययमहो कष्टं मैवं स्याद् ब्रह्म विक्रिया॥

(भागव० ६।१।१७)

यूयं मन्त्रविदो युक्तास्तपसा दग्धकिल्विषाः।
कुतः सङ्कल्पवैषम्यमनृतं विबुधेष्विह॥ (भा० ६।१।१८)

एवं श्रुत्वा ध्यानेन सर्वं विज्ञाय भगवान् वसिष्ठ आह--

एतत्सङ्कल्पवैषम्यं होतुस्ते व्यभिचारतः।
तथापि साधयिष्ये ते सुप्रजास्त्वं स्वतेजसा॥ (भा० ६।१।२०)

इत्युक्त्वा गुरुणा वसिष्ठेन आदिपुरुषस्तुत्या इलायाः पुंस्त्वं सम्पादितम्। सा इला सुद्युम्न नाम्ना प्रसिद्धः पुरुषो बभूव। स एव सुद्युम्नः अग्रे सामात्यः ससैन्यः अनुसृगं मेरोरधस्तात् वनं प्रविष्टः स्त्री बभूव। तस्य अश्वोऽपि वडवा जातः, सर्वेऽनुचरा अपि स्त्रीत्वं प्राप्ताः। स्त्रीरूपेण परिणतः सुद्युम्नः स्वकुलाचार्यं तमेव वसिष्ठं पुनः सस्मार। स च आगत्य स्वां वाचमृतां कर्तुं वैदिकविधिना शङ्करमस्तौषीत्। ततः सुद्युम्नः मासं पुमान् मासं च स्त्री इत्येवं सन् मेदिनीं शशास। एवं हि चमत्कारमयी श्रौतक्रिया वैदिकमन्त्रप्रयोगसिद्धिः तत्र चर्चितास्ति।

### पुरुषसूक्तोपस्थानम्

पुरुषसूक्तेन सहस्रशीर्षा पुरुषः इत्यादि षोडशर्चेन उपतिष्ठितो भगवान् परमपुरुषः सद्यः प्रसन्नो भूत्वा ब्रह्मणो द्वारा त्रिदशान् उवाच। अयं प्रसङ्गोऽपि (भाग० १०।१।१७-२१)

भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः।
आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ॥ १७॥
गौर्भूत्वाश्रुमुखी खिन्ना क्रन्दन्ती करुणं विभोः।
उपस्थितान्तिके तस्मै व्यसनं स्वमवोचत॥ १८॥

ब्रह्मा तदुपधार्याथ सहदेवैस्तया सह ।
जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः ॥ १९ ॥
तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ।
पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः ॥ २० ॥
गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदशानुवाच ह ।
गां पौरुषीं मे श्रृणुतामराः पुनर्विधीयतामाशु तथैव मा चिरम् ॥

एभिः पद्यैः श्रीमद्भागवतदशमस्कन्धप्रथमाध्याये सुस्पष्टं वैदिकमन्त्रप्रयोगस्य सिद्धि प्रकटयति ।

**सर्पसत्रम्**

शत्रुसंहारकस्य प्रबलस्य आभिचारिकस्य वैदिकप्रयोगस्यापि प्रभावो विलोक्यताम्—

कलिप्रभावाभिभूतेन महाराजेन परीक्षिता शमीकस्य ब्रह्मर्षेः अंशे रुषा यदा मृतम् सर्पम् निधाय स्वपुरमगात् तदा अर्भकैः सह खेलन् तस्य महर्षेः अतिस्वल्पवयस्को बालकः बालकैस्तद्वृत्तं श्रुत्वा क्रुद्धः सन् प्राह—

अहो अधर्मः पालानां पीव्नां बलिभुजामिव ।
स्वामिन्यघं यद्दासानां द्वारपानां शुनामिव ॥ ३३ ॥
ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपालो निरूपितः ।
स कथं तद्गृहे द्वाःस्थः सभाण्डं भोक्तुमर्हति ॥ ३४ ॥
कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् ।
तद्भिन्नसेतूनद्याहं शास्मि पश्यत मे बलम् ॥ ३५ ॥
इत्युक्त्वा रोषताम्राक्षो वयस्यानृषिबालकान् ।
कौशिक्याप उपस्पृश्य वाग्वज्रं विससर्ज ह ।
इति लङ्घितमर्यादं तक्षकः सप्तमेऽहनि ।
दङ्क्ष्यति स्म कुलाङ्गारं चोदितो मे ततद्रुहम् ॥(भा० १।१८।३३-३७)

इत्येवं तेन शमीकमुनिबालकेन शप्तो महाराजपरीक्षित् तक्षकसर्पेण दष्टो यदा मृतस्तदा सर्पकृतपितृमरणामर्षी परीक्षित्पुत्रो जनमेजयो भृशं चुक्रोध । क्रुद्धः सन् तक्षकेण सहैव सर्वेऽपि सर्पा नष्टा भवेयुरिति बुद्ध्या आभिचारिकं सर्पसत्रं चकार । तत्र समिद्धे होमाग्नौ वैदिकमन्त्रप्रयोगप्रभावेण बहवो महोरगा हन्यमानाः आसन् । किन्तु तक्षको न दृश्यते स्म । अतः मुख्यापराधिनं स्वपितृघातकं तक्षकमदृष्ट्वा राजा जनमेजयः—

उवाच तक्षकः कस्मान्न दह्येतोरगाधमः। ( भा० १२।६।१८ )
तत ऋत्विज ऊचुः राजानम्—

तं गोपायति राजेन्द्र शक्रः शरणमागतम्।
तेन संस्तम्भितः सर्पस्तस्मान्नाग्नौ पतत्यसौ॥ (भा० १२।६।१९)

ततः— पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः।
सहेन्द्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते॥ (भा० १२।६।२०)

पात्यतां सम्प्रति इन्द्रेणापि सहैव तक्षकः—

तच्छ्रुत्वा जुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे।
तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता॥ (भा० १२।६।२१)
इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः।
बभूव सम्भ्रान्तमतिः सविमानः सतक्षकः॥ (भा०१२।६।२२)

एवं हि तदानीं तक्षकेण सह इन्द्रस्यापि अग्नौ पतनसमयः समुपस्थितः। इन्द्रेण सहैव तक्षकः अग्नौ पतनाभिमुखो बभूव।

तं पतन्तं विमानेन सह तक्षकमम्बरात्।
विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः॥ (भा० १२।६।२३)
नैषा त्वया मनुष्येन्द्र वधमर्हति सर्पराट्।
अनेन पीतममृतमथवा अजरामरः॥ (भा०१२।६।२४)
जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्मणा।
राजंस्ततोन्यो नान्यस्य प्रदाता सुखदुःखयोः॥ (भा० १२।६।२५
सर्पचौराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप।
पञ्चत्वमृच्छते जन्तुर्भुङ्क्ते आरब्धकर्म तत्॥ (भा० १२।६।२६)
तस्मात् सत्रमिदं राजन् संस्थीयेताभिचारिकम्।
सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते॥ (भा० १२।६।२७)
इत्युक्तः स तथेत्याह महर्षेर्मानयन् वचः।
सर्पसत्रादुपरतः पूजयामास वाक्पतिम्॥ (भा० १२।६।२८)

एतादृशी श्रौतकर्मणां वैदिकमन्त्रप्रयोगाणां सिद्धिभावः पुराणेषु दृश्यते।

किन्तु हा हन्त अधुना संरक्ष्यापि अनुभूयापि पूर्वमेतादृशीं विद्यां राष्ट्रमेतत् सम्प्रति शत्रुरहितं विधातुं न पारयामो भारतीया वयम् तदत्र किं निदानम् इति।

चिन्तनीयम्। बाधकहेतून् निराकृत्य साधकहेतून् सम्यगाश्रित्य श्रौतविधया वैदिकमन्त्रप्रयोगपद्धत्या बहु कर्त्तुं शक्नुयादस्माकं राष्ट्रमेतदिति। अत्र च—

वेदाः त्यागाश्च यज्ञाश्च नियमाश्च तपांसि च।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥

इत्यादिमन्वादिवचनं विचारयद्भिरस्माभिः सप्रयत्नैर्भाव्यम्। पुराणेषु वैदिकग्रन्थेषु च चर्चिता वैदिकप्रयोगाः पुनरप्यनुभूताः स्युरस्माभिरपि इति कृते सर्वैरपि भारतीयैर्विशेषतः संस्कृतसंरक्षणव्रतपरायणैर्विद्वद्वरेण्यैरवधेयमिति।

---

# सप्तमोऽध्यायः

## मनीषिमताध्यायः

( अत्र कर्मकाण्डे सर्वसाधारण्येन विशेषविवादग्रस्तविषयाणां शास्त्रदिशा विमर्शः कृतः )

**पशुहिंसानुकल्पः**

यद्यपि मीमांसासरण्या वैधपशुहिंसनं युक्तमेव। परं यदि तथानुष्ठानं कथमपि न काम्यते तदा किं विधेयमिति विचारे अस्मद्गुरुचरणाः पण्डितप्रवर-श्रीभगवत्प्रसादमिश्रपादा एवं निर्णयन्ति—

भारतवर्षस्य रत्ननिचयभूता वेदाः पुण्यश्लोकैर्भारतीयैर्महर्षिमणिभिर्याव-दुच्छ्वासं प्राणपणेनापि रक्षिता इति नाविदितमस्त्यैतिह्यवेत्तॄणाम्। त इमे वेदाः संप्रत्यपि यथा कथञ्चिदपि संरक्षणीया एवेत्यत्र न कस्यापि वैमत्यं स्याद् भारतीय-त्वाभिमानिनः। तदिदं वेदसंरक्षणं वेदोक्तानां कर्मणां स्वयमनुष्ठानेन अनुतिष्ठासूनां सहयोगेन कर्मणामनुमोदनेन च सुदृढं भवतीति हृदयेन स्वीकुर्यादेव आस्तिकवरेण्यः। एवं च श्रौतानां हविर्यज्ञसंस्थानां सोमयज्ञसंस्थानां चानुष्ठानमनुष्ठापनमनुमोदनं चावश्यं श्रेयसे कल्पेतैव। श्रौते हि याज्ञिके कर्मणि तत्र तत्र पशुसंज्ञपनमाम्नात-मस्ति। पशूनां संज्ञपनं चेतन्न कर्तुः कारयितुर्वा स्वार्थमूलतया श्रुत्या प्रतिपाद्यते, अपि तु पशोरस्य वेदानर्हत्वादक्षमत्वाच्च अप्राप्यस्य पुण्यकृतां लोकस्य प्राप्तयेपीति। 'पाशविकयोनिमुक्त्यर्थमेवेति'

न वा उ एतान् म्रियसेनरिष्यप्ति देवीं इदेषि पथिभिः सुगेभिः।
यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता आदधातु॥

( ऋ० १।१६२।२१, भा० सं० २३।१६।२५४४ )।

इत्यादिमन्त्रवर्णैः सुस्पष्टमुद्घोष्यते। तमिमं वेदोद्घोषं शृण्वन्निव, स्वार्थपरतया पशुजातेः प्रत्यहं क्रियमाणं मारणक्लेशमशमयन्नात्मानं हिंसापराधेन सवेष्टयन्नपि साम्प्रतिको लोकः श्रौतयज्ञेषु सपाशुकमनुष्ठानं प्रत्यतिष्ठत इति आश्चर्यास्पदमपि कालविजृम्भितमेवेति मन्यामहे। सत्यामेवं स्थितौ श्रौतकर्म-निर्वाहाय कः स्यात् मार्गो यः शास्त्रेणानुकल्पविधया समनुमतो लोकेनाप्यनुगृह्येतेति विचारे। अवकीर्णिप्रायश्चित्तादिगृह्यविधिषु, एतरेयश्रुतिषु च विधिदृष्टलिङ्गेन, पशुसम्बन्धवद् यवानुकल्पेन आज्यमुपयोक्तव्यमिति निर्णयति।

**कर्मणि मन्त्रपाठे स्वरविचारः**

जैमिनीये मीमांसाशास्त्रे द्वादशाध्याय एव मन्त्रा आत्मीयेन स्वरेण कर्मण्यपि प्रयोक्तव्या इति ( १२।३।८ ) निर्णीतम्। तत्र केचिद् विशेषव्यवस्थां कल्पयन्ति। तथा हि कात्यायनश्रौतसूत्रीयो ( १।८।१६-१९ ) विचारः—

प्रयोगकाले उच्चार्यमाणा मंत्राः संहितास्वरेण प्रयोज्या, उत ब्राह्मणस्वरेण, उत एकश्रुत्या इति संशये पूर्वपक्षयति—

'मन्त्रे स्वरक्रिया यथाम्नातमविशेषात्'। १६।

कर्मणि प्रयुज्यमानो मन्त्रो येन स्वरेण संहितायां पठितस्तेनेव स्वरेण प्रयोक्तव्यः। कुतः, स्वरान्तरस्य विशेषेणोपदेशाभावात्।

द्वितीयं पूर्वपक्षमाह—

'भाषिकस्वरो वोपपन्नमन्त्रोपदेशात्' ॥ ७ ॥

अथवा प्रयोगकाले भाषिकस्वरेण ब्राह्मणस्वरेण मन्त्राः प्रयोज्याः न संहिता-स्वरेण, कुतः संहितास्वरेण युक्तस्य मन्त्रस्य पुनर्ब्राह्मणस्वरेण स्वरान्तरोदेशात्। अतो न संहितास्वरः।

छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥ इति।

शाबर-भाष्ये ( १२।३।७ ) भाषिकशब्दार्थो ब्राह्मणस्वरे नियमितः, एवं प्राप्ते सिद्धान्तयति—

'ता नो वा नित्यत्वात्'' ॥ १८ ॥

वाशब्दः पूर्वपक्षव्यावर्तः। ता नः उदात्तादिस्वररहितः एकश्रुतिरेव मन्त्राणां स्वरो भवति। न संहितास्वरो नापि ब्राह्मणस्वरः। कुतः नित्यत्वात्। वर्णस्वरूपमात्रोच्चारणादिना भूतत्वादित्यर्थः। स्वरान्तरस्यानियतत्वात्। उक्तार्थे व्याकरणस्मृतिं प्रमाणयति—

'एकश्रुति दूरात्सम्बुद्धौ, यज्ञकर्मणि, सुब्रह्मण्यसामजपन्यूङ्ख याजमानवर्जम्' ॥१९॥

दूरादाह्वाने-सुब्रह्मण्यानिगद-साम-जप-नू-याजमान भिन्ना ये मन्त्राः यज्ञकर्मणि प्रयुज्यन्ते तेषु च एकश्रुतिस्वरः स्यात्। एतच्च जैमिनिना ( ९।२।८ निर्धारितम् )।

तथा हि न्यायमालायां ( ९।२।८ वर्णके ३ ) याज्यानुवाक्यादीनां मानेन प्रयोगसाधकं तृतीयवर्णकम्—

'त्रैस्वर्यादिसमुच्चये विकल्प्यं ता न एव वा।
प्रयोगादर्धतो द्वौ नो, वचनात्स्मृतिकल्पितात् ॥ १५ ॥

'अग्निर्मूर्धा' इत्यादयो याज्यानुवाक्यादयः मन्त्राः साम प्रसंगाद्विचार्यन्ते। कस्याञ्चिच्छाखायां त्रैस्वर्येणाधीयन्ते । केश्चिच्चातुःस्वर्येण । उदात्तानुदात्त-स्वरितेभ्यो व्यतिरिक्तश्चतुर्थस्वरः एकश्रुतिः । तां चाध्यापकाः 'प्रचय' इत्याचक्षते।

तत्र—प्रयोगवचनस्य सर्वांगोपसंहारित्वात् समुच्चयस्त्रैस्वर्यादीनाम् इत्येकः पक्षः ।

अध्ययननिर्वृत्तिलक्षणस्य प्रयोजनस्य एकत्वाद्विकल्प इति द्वितीयः पक्षः।

न तौ द्वौ पक्षौ युक्तौ, एकश्रुतेर्व्याकरणस्मृतौ विहितत्वात् तथा च पाणिनीयं सूत्रम्—'यज्ञकर्मण्यजपन्यूङ्खसामसु' ( १।२।३३ ) इति ।

'अग्निं गृह्णामि सुरथम्' इत्यादयो मन्त्राः यजमानेनैव जप्यन्ते। न्यूङ्खाः प्रणवाः ( आ० श्रौ० ) सामानि रथन्तरादीनि एतेभ्यो जपादिभ्यो व्यतिरिक्तानां मन्त्राणां यज्ञकर्मण्येकश्रुतिमेवेति । अनया च स्मृत्यानुमितं वेदवाक्यमेतत्—

'ता नो यज्ञकर्मणि' इति ता नः एकश्रुतेः पूर्वाचार्यसंज्ञा । न च एकश्रुतित्वे स्वराध्ययनं व्यर्थमिति वाच्यम् । स्वरविशेषस्य बहुव्रीहितत्पुरुषसमासादिभिः निश्चये सत्यर्थविशेषस्यावबोद्धुं शक्यत्वात्। जपादिषु तु यथाध्ययनस्वरः प्रयोक्तव्यः। इति। ( जै० न्या० वि० ४४७ पृ० )।

स्मार्तप्रभौ ६ पत्रे एते ( आनो भद्रादयः ) मन्त्रा सस्वरं पठनीयाः। मन्त्रसमधीतस्वरबाधे प्रामाणाभावात्। 'मन्त्रो हीनः स्वरतो वर्णतो वेति' निन्दार्थ-वादाच्च ( पा० शि० ५२ )। अत एव 'एकश्रुति दूरात्संबुद्धौ, यज्ञकर्मण्यजपन्यूङ्ख-सामसु' इति ( १।२।३७ ) पाणिनिना, एकश्रुति दूरात्संबुद्धौ, यज्ञकर्मणि सुब्रह्मण्या-सामजपन्यूङ्खयाजमानवर्जम् (१।१८।१६) इति कातीयश्रौतसूत्रे प्रावचनो वा यजुषि सामजपन्यूङ्खवर्जम् ( शु० १।१३६ ) इति यजुःप्रातिशाख्ये ( १।१३१ ) च यज्ञकर्मणि जपादिवर्जनैकश्रुतिविधानेन जपोपस्थानादिषु त्रैस्वर्यं बोधितम्। अभिषेक-पूजनहोमगायत्रीजपादिषु अभिषेकमात्रधारणादौ हस्तस्य व्यापृतत्वान्न हस्तेन स्वर-प्रदर्शनम्। यथाहुः—

जपे होमे मखे श्राद्धेऽभिषेके पितृकर्मणि ।
हस्तस्वरं न कुर्वीत सन्ध्यादौ देवपूजने। इति
उपस्थाने जपे होमे मार्जने यज्ञकर्मणि॥
कण्ठस्वरं प्रकुर्वीत् हस्तस्वरविवर्जितमिति च।

श्रौतोल्लासेऽपि

उपस्थाने जपे होमे दोहे च यज्ञकर्मणि।
हस्तस्वरं न कुर्वीत शेषास्तु स्वरसंयुताः॥

जपरुद्रे तु नेषां प्रवृत्तिः, तेषां गायत्र्यादिजपपरत्वात् तथाप्येकश्रुति दूरादि-त्यादीनाम्। तेषां मपीदमिति यजमानो जपतीत्यादि सूत्रोपात्तं (का० श्रौ० ३।४।१८) जपति शब्दवाच्यजपपरत्वात्।

अत एव प्रातिशाख्ये (१।१३६) जपे पुनरेकश्रुतिस्वरविधानं संगच्छते। तस्माज्जपरुद्रे मन्त्रसमधीतस्वरः प्रयोज्य एव।

वस्तुतस्तु प्रावचनो वा यजुषि (प्रा० १।१३२) इतो सूत्रात्सर्वत्र हस्त-स्वरो वैकल्पिकः। स्वाध्यायादौ तु त्रैस्वर्यमेव अयज्ञकर्मत्वात्। अभिषेकमात्रे रज्वादिना धारणे तु स्वराः प्रयोज्या एवेति नव्याः।

एवं न्यासमन्त्रेष्वपि 'ता नो वा नित्यत्वात्'। (१।८।१७) इति

कातीये करणमन्त्रेष्वभिहितस्तानापरपर्याय एकश्रुतिस्वरो च प्रवर्तते। यज्ञकर्णि कर्मरणमन्त्रेष्वपि वैकल्पिको यथाश्रुतस्वरोऽभिहितः प्रातिशाख्ये 'प्रावचनो वा यजुषीति'।

न च न्यासमन्त्राणां करणत्वमस्ति मन्त्रेण शिखायां न्यासेदिति न्यासक्रियां प्रति मन्त्रस्य कर्मत्वेनान्वयात्। करणत्वेनान्वये किं न्यसेदित्याकाङ्क्षाया अनुपक्षीणत्वात्। एवं च 'मन्त्रान्ते कर्मणि सन्निपात्यो विधानात्' (का० श्रौ० १।४।५) इति परिभाषापि नेह प्रवर्तते। मन्त्राणां कर्मकरणत्वेन कर्मान्वयोक्तेः। परिभाषायाश्च करणमन्त्रविषयत्वात् प्रकृते च करणमन्त्रत्वाभावात्।

'ते चादौ शिखां स्पृट्वा ततो 'याते रुद्रे' त्यादि मन्त्रं सस्वरं जपेदित्यनन्तः तस्मात् त्रैस्वर्यमेव न्यासमन्त्रेषु। अज्ञातस्वरा मन्त्रास्तु एकश्रुत्यैव प्रयोज्याः।

अविज्ञातस्वरा मन्त्राः प्रयोक्तव्या प्रयोक्तृभिः॥
एकश्रुत्यैव होमेषु विज्ञाताश्च विकल्पिताः। इति।

तेन 'तानो वा यज्ञकर्मणी' त्यादिकं (का० श्रौ०) सर्वविज्ञातस्वरविषय-मिति संस्कारचिन्तामणौ (स्मा० प्र० १० पत्रे)।

उपनयनपद्धतौ तु (११ टि०) अथ ये मन्त्राः स्वशाखीयास्ते सस्वरा एव पठनीयाः। ये मन्त्राः सौत्रास्तेषां मध्ये ये शाखान्तरादागतास्तेषां तत्तच्छाखातः स्वरान् ज्ञात्वा तेऽपि सस्वरा एव पठनीयाः। येषां तु सर्वथा मूलं नोपलभ्यते स्वराश्च नावगम्यन्ते तेषां परमेकस्वर्येण पाठो न तु सर्वेषाम्। एवं याज्ञेऽपि याज्याः पुरोऽनु-वाक्याः निषिद्धः। साभिधेन्याः सूक्तवाकः इत्येवमादीन् वर्जयित्वा अन्ये करणमन्त्रा अपि हेयत्वेत्यादयः सर्वे सस्वरं पठनीयाः। रावं यत्र जुहोति चोदवा तत्र सर्वत्रापि होमाङ्गभूतानां मन्त्राणां सस्वरमेव पाठः। एवं न्यासपूजाजपाभिषेकादावपि सस्वरमेव पाठः कर्तव्यः।

न चात्र न्यासादौ हस्तस्य व्यापृतत्वात् कथं स्वरः पठितुं शक्यत इति केषांचित् भ्रमो युक्तः। स्वरो हि कण्ठेन प्रकाश्यः। कण्ठेनोच्यमानस्य स्वरस्य हस्तः सूचकः परम्, न तु हस्तेनैव स्वरः पठ्यते। अत एव हस्तस्य कार्यान्तरव्यापृत्वेऽपि मुखने अक्षरैः साकं पूर्वोक्तेषु कर्मसु स्वराः प्रयोज्या एव निषिद्धवर्जम्।

'एकश्रुति दूरात्सम्बुद्धौ यज्ञकर्मणि' इति प्रतिषेधो याज्याप्रैषादिपरक एव। अत एव 'अग्निर्ज्योतिरग्निः स्वाहा' इत्यादिहोत्रहोमाङ्गभूतो मन्त्रः 'जातवेदस' इति वपायागाङ्गहोमभूतो मन्त्रश्च करणभूतोपि सस्वर एव पठ्यते।

अतश्च ये नाम अन्यपरम्परामनुसरन्तो न्यासहोमादिषु व्यापृतेन हस्तेन स्वरस्य प्रदर्शितुमशक्यत्वात् स्वरोच्चारणमपि परित्यक्तव्यं मन्यते। अत एव च कारणात् स्वरं विना एतादृशानां कार्यान्तराणां प्रचलितत्वात् अनधीतवेदा अपि अपरिज्ञात स्वरा अपि पुस्तकं हस्तेनादाय केवलं पुस्तकवाचनमात्रेणैव कर्माण्यनुष्ठापयन्ति तादृशानां कर्मणां यथाविध्यनुष्ठानाभावात् न केवलमभिलषितफलावाप्तिः, किन्तु निन्दितकरणात् विपरीतफलप्राप्तिर्यजमानाचार्ययोर्भवेत्।

अतो ये नाम कर्मानुतिष्ठन्ति आचार्यो भूत्वानुष्ठपयन्ति वा तैः पूर्वं तत्तदुपयुक्तान् मन्त्रान् सस्वरं गुरुमुखादधीत्य अनन्तरं कर्मानुष्ठाने आचार्यत्वे प्रयतितव्यम्। मन्त्राश्च सस्वरं तेषु तेषु कर्मसु पठनीयाः।

'गृह्यकर्मणि ये मन्त्राः ज्ञेयाः स्वाध्यायपाठतः।
किं च मध्यमवृत्त्या ते न द्रुता न विलम्बिता॥'

इति रेणुः इति।

## अष्टमोऽध्यायः

# कर्मकाण्डस्य युगोपयोगिताध्यायः

**उपक्रमः**

सर्वे हि प्राणिनः सुखार्थं प्रयतन्ते। दुःखं च परिजिहीर्षन्ति। तत्र प्राक्कालिक-कर्मवशात् सुखदुःखयोः स्वाभाविकी प्राप्तिर्भवति। अथापि शास्त्रीयक्रियानुसारणेन प्रारब्धवशात्प्राप्यमाणमपि दुःखं तालवृक्षं सदपि तिलायते, सुखं च सर्षपायितमपि हिमाचलीक्रियते। शास्त्रबोधिताः क्रिया एव धर्मः। शास्त्राणि हि भारतीयेषु वेदाः तन्मूलकार्षवचनानि च सन्ति। अत एव मनुना स्पष्टमुच्यते—

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः। इति।

बहवो हि वेदमाद्रियन्तोऽपि स्मृत्यपरपर्यायं धर्मशास्त्रग्रन्थजातं न प्रमाणपदवीमारोहयन्ति। परमेतन्न विचारसहम्। स्मृत्यादीनां प्रामाण्यस्य मीमांसकैः ससंरम्भं साधितत्वात्। अतएव मनुना—

यः कश्चिद् कस्यचिद् धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥२।७।

इत्युक्तम्। अत्र मनुशब्दः सर्वस्मृतिकाराभिप्रायकः। ततश्चात्र एकत्वमप्यविवक्षितम्। याज्ञवल्कीये धर्मशास्त्रप्रयोजकानां बहूनां युक्तत्वात्। तथाहि—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसंवर्त्ता कात्यायनबृहस्पती॥
पराशरव्यासशंखलिखिता दक्षगौतमौ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रवर्त्तकाः॥ इति। (१।४-५)

अत्र एतेषां प्रत्येकं प्रामाण्येऽपि साकाङ्क्षाणामाकाङ्क्षापरिपूरणमन्यतः क्रियते। अथापि बहुषु स्थलेषु परस्परं वाक्यानि विप्रतिपद्यन्ते। तेषां वाक्यार्थे सन्दिह्यते तात्पर्यं च न बुध्यते। तदर्थं सर्वदेशीयैरपि भारतीयैर्विद्वद्भिः तन्निर्णयाय मीमांसाशास्त्रस्याश्रयणं कृतम्। एवं च धर्मशास्त्रस्य कर्मकाण्डस्य बुभुत्सायै मीमांसादिशास्त्रमत्यन्तमुपकरोति।

**शास्त्रस्वरूपम्**

शिष्यते अनेनेति शास्त्रमिति गृहीतव्युत्पत्तिके शास्त्रशब्दे समास्ते 'शासु अनुशिष्टौ' इति 'पाणिनीयो' धातुः। अनुशिष्टनञ्च इतस्ततो व्यामोहेन सीमित-विचारशक्तित्वेन च हितकर्त्तव्यतानिर्धारकशून्यशक्तिकव्यक्तेर्हितसाधननिर्णय-तत्प्रवं-

तन्नानुकूलतापादको निग्रहानुग्रहशक्तिसम्पन्नो नीतिगर्भो वागादीन्द्रियव्यापारः निग्रहानुग्रहशक्तिसम्पन्नत्वं च शास्त्रस्य वेदमूलकत्वे अतीन्द्रियतत्त्वदर्शितपःसिद्धमहर्षिवचनत्वे एव भवति। अतएव चास्ति शास्त्राणां परिगणनं विद्यास्थानत्वेन धर्मज्ञापकत्वेन कार्याकार्यव्यवस्थापकत्वेन च।

ननु—पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥

इति महाभारते। तद् विरोधि-बौद्धादितर्कैर्न हत्यादिनीत्यभिप्रायकम्। अनुकूलस्तु मीमांसादितर्कः प्रवर्तनीय एव। अत एव मनुः—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ इत्याह। (१२।१०६)

एवं च मीमांसोपबृंहितं धर्मशास्त्रेण निर्णीतं कर्मानुष्ठानं, तस्मादेव च—

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः।
स जीवन् सुखमाप्नोति परत्र च परां गतिम्॥ (मनु० २।९)

इति फलमुद्घोषयति भारतीया संस्कृतिः। तद्विपरीताचरणे च—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥ (गीता १६।१३)

इत्यनिष्टं बोधयन्ती सर्वानपि मानवानभिधत्ते—

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥ (गीता १६।२४)

इति एवं च शास्त्रनिर्देशः सर्वथा सर्वदा च हितावह इति सिध्यति।

**मनुष्यस्याभिलाषः**

मनुष्यः सुखप्राप्तये शान्तये च निरन्तरं प्रयतते। स हि अवनतिफलकादैहिकादामुष्मिकाद्वा नरकाद्[1] सर्वदैव दूरे स्थातुं कामयते। अतएव सः सुखशान्त्याश्रयं स्वर्गं सर्वदा कामयते। तथा च स्वर्गलक्षणम्—

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम्॥
(त० सि० र० पृ० ४३)

१. नरकं न्यरकं-नीचैर्गमनं। नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा।
(निरु० १।१२ पृ० ५४)

सुखशान्त्योः सम्मिश्रणमानन्दः । स च प्रतिव्यक्ति भिन्नोऽपि सर्वसाधारणतया मनुष्यमात्रेणाभिज्ञातोऽभिलषितश्च । मानुष आनन्दः वेदेनैवमुपस्थाप्यते—

'युवा स्यात्साधुयुवाध्यापकः आशिष्ठो दृढिष्ठो बलिष्ठः ।
तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्स एको मानुष आनन्दः ॥'
( तै० आ० ८।८ )

अत्र षट् पदार्थाः मानुषे आनन्दे परिचायिताः भवन्ति । ते च—

१–स्वास्थ्यम्
२–शिक्षा
३—धैर्यम्
४—बलम्
५—सम्पत्तिः
६—भोग इति ।

एतेषां अभिलाषो मानवस्य स्वाभाविकः । मनुष्यस्येव पशुपक्ष्यादयोप्यानन्दं कामयन्ते । सन्ति तेषां सविधेऽप्यानन्दानुभवसाधनानीन्द्रियाणि, परं तेषामभ्युपगमोपायानामस्त्यभावः । पश्वादयो हि आसन्नेष्वेव पदार्थेषु चेतयन्ते । आनन्दप्राप्तिसमुपयिककर्मणां कृते मानवीयगुणानामेवास्त्यावश्यकता । अत एव ते शास्त्रबोधितेषु कर्मसु नाधिक्रियन्ते[1] । मनुष्यस्य विशेषगुणोऽस्ति ज्ञानम् । अत एव भगवता यास्केन मनुष्यनाम निर्वचनं 'मत्वा कर्माणि सीव्यन्ति' ( नि० ३।७ ) इति कुर्वता ज्ञानपूर्वककर्मानुष्ठातृत्वं मनुष्ये व्यवस्थापितम् । पाणिनिनापि संस्कृतवाङ्मयस्य प्रयोगमनुलक्ष्य सविशेषज्ञानवत्वादेव मनुष्याणां सङ्घे 'समाज' शब्दो व्युत्पादितः । मनुष्यातिरिक्तानां सङ्घस्तु 'समज' रूपेण निर्व्यूढः[2] ( पा० ३।३।६९ ) । मनुष्याणां समूहः समाजः । प्रत्येकं च मनुष्यः सामाजिकः प्राणी । कोऽपि व्यावहारिको मनुजः समाजात्पृथगात्मानं संरक्षितुं नेच्छति । अपितु समाजेन सह प्रवृद्धं सम्पर्कं उचितं हितकारि च मनुते । अधिकानां परिचयेन तेषामात्मीयभावनया च सह सविशेषमानन्दमनुभवति । यदा हि मानवः कमपि विशेषमपराधमनुतिष्ठति तदा शासनाधिकारिणः तं कारागार ( जेल ) दण्डेन यातयन्ति ।

---

१. ननु तिर्यञ्चोऽपि न किञ्चित्कामयन्ते । नेति ब्रूमः । कामयन्ते सुखम् । एवं हि दृश्यते-घर्मोपतप्ताश्छायामुपसर्पयन्ति, शीतेन पीडिता आतपम् । ······ ······ ···न चैतदस्ति तिर्यगादीनामप्यधिकार इति । कस्य र्हि ? यः समर्थः कृत्स्नं कर्माभिनिवर्त्तयितुम् । तस्मादेषां न सुखस्याभ्युपायः कर्मेति । ( शा० भा० ६।१।२ )

२. अमरकोषे-पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् ।' ( २।५।४२ )

तस्यायमभिप्रायः—यत् सामाजिकस्य मानवस्य समाजाद् बलाद्धि प्रयोगकरणम्, अपराधस्य शब्दान्तरेण व्याख्या सामाजिकसीमायाः उल्लङ्घनमस्ति। यथा हि—सामाजिकी सीमा प्रत्यक्षतोऽनुभूयते, तथैव विश्वोत्पादयितुः परमेष्ठितुर्भगवतः प्रकृतेर्जीवस्य च नियामिका काचन व्यवस्था अस्ति। सा एव व्यवस्था "शास्त्रम्" इति भारतीयैः कथ्यते।

**मानवस्य व्यवस्थातिक्रमणम्**

तामेतां विश्वनियन्तुर्व्यवस्थां मनुष्य एवैको जीवः अतिक्रामति नान्यः पशुपक्ष्यादिः। तथा च शतपथब्राह्मणे—

"नैव देवाः (प्रजापतेराज्ञां) अतिक्रामन्ति। न पशवो, मनुष्या एवैकेऽतिक्रामन्ति, तस्माद् यौः मनुष्याणां मेद्यति, अशुभे मेद्यति, विहूर्च्छति हि, न ह्ययनाय च न भवति, अनृतं हि कृत्वा मेद्यति।' (श० ब्रा० २।४।२।६) 'यः मनुष्याणां मध्ये पुष्यति, सः अदनादिजनितमदवशेन अशुभे नरकपाताद्यनर्थभूते पापे मेद्यति स्निह्यति तात्पर्येण वर्त्तते। तस्मात् पापात् सः विहूर्च्छाति अतः पतति। सः अयनाय पुण्यलोकगमनायापि न हि भवति। तस्मात् अनृतं असत्यं कृत्वा मेद्यति प्रमत्तो भवति। इत्थं प्रजापत्याज्ञातिक्रमेण अनियमदर्शनात् मनुष्येषु नियमापेक्षा विद्यत इति तात्पर्यार्थं इति सायणभाष्यम्। अत एव च यास्कः 'मर्यादामर्यैरादीयते। मर्या इति मनुष्यनाम। इत्थं मर्यादापदं (निरु० ४।२) मनुष्यसम्बन्धेन निरुवाच।'

अत एव सामाजिकप्राणिनः मनुष्यस्यैतदावश्यकं कर्त्तव्यमस्ति यत्—सः स्वीयस्य मनसः वाण्याः क्रियायाश्च तादृशमेव विस्तारं प्रयोगं वा कुर्याद्यथा स्वार्थसिद्ध्या सह समाजस्य अहितं न सम्भाव्यते। अमुमेवार्थं मनुः—

वयसः कर्मणोऽर्थस्य श्रुतस्याऽभिजनस्य च।
वेशवाग्बुद्धिसारूप्यमाचरन् विचरेदिह ॥ (४।१८)

समाजव्यवस्थायां कस्यापि कर्त्तव्यस्य निर्णये च इदमवधेयं भवति यत्—सर्वसाधारणस्याभिलषितेषु मानवीयानन्दसाधनेषु स्वास्थ्य-शिक्षा-धैर्य-बल-सम्पत्ति-भोगेषु विशेषोपरोधो न स्यात्। भारतीयं धर्मशास्त्रमेतदेवाऽनुलक्ष्य गर्भबीजावापक्षणप्रभृतिमरणान्तं जीवनस्य सम्भावितेषु सम्भूतेषु समुपक्रान्तेषु च विषयेषु दृष्टादृष्टमूलकं विचारं समुपस्थापयति, आज्ञापयति च—

"अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।
या वृत्तिस्तां समास्थाय नरो जीवेदनापदि ॥
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः।
अक्लेशेन शरीरस्य कुर्वीत धनसंचयम् ॥ इति
(मनु० ४।२०३)

**ध॰ः ( अपूर्वम् )**

तदेतद् विविच्यमानं जीवनोपयोगिक्रियाजातं भारतीयाः धर्मशब्देन व्यवहरन्ति। यथा हि धर्मो धर्मशास्त्रस्य विषयः एवं परिवर्जनीयतया अधर्मोऽपि अत्र विचारितो भवति। ययोरेव धर्माधर्मयोर्हेतुतया जन्म-मृत्यु-भोगाः समुद्भवन्ति[1]। धर्मानुष्ठानेन इष्टसाधनताफलकं किमपि तत्त्वमुद्भवति। अधर्मानुष्ठानेन अनिष्टसाधनताफलकं किमपि तत्त्वमुत्पद्यते। तदेव च तत्त्वं मीमांसकैरपूर्वमिति कथ्यते। अपूर्वपदार्थस्य स्वरूपं तन्त्रवार्त्तिके एवमुच्यते—

"कर्मणः प्रागयोग्यस्य कर्मणः पुरुषस्य वा।
योग्यता शास्त्रगम्या या परा सा पूर्वमिष्यते ॥ इति।
( जै० २।१।५ सू० )

भारतीयैः शास्त्रविद्भिः कस्यापि कार्यस्य कारणमन्तरा सद्भावो न स्वीक्रियते। ततश्च प्रत्येकं मानवो व्यक्तिः कमपि विशेषं कारणमाश्रित्यैव जन्मभोगमृत्युभिः संश्लिष्यते। को हि नाम पिता स्वीयान्पुत्रान् समदृशा विलोकयन् अध्यापनादिप्रबन्धं कुर्वन् बुद्धिचारित्र्यजीविकादिषु वैषम्यं पश्यन्नात्मने कुप्यति। सर्वेऽपि पुत्राः स्वस्वपूर्वजन्मकृतकर्मसंस्कारवशात् शरीररचना बुद्ध्यादिभिर्विलक्षणा धनार्जनसुखाद्युपभोगे विषमा भवन्ती प्रत्यक्षसिद्धं कर्मणो माहात्म्यम्। मनुष्यो हि स्वभावतया इन्द्रियाणि बहिर्मुखानि कृत्वा पतनमेवाऽनुसरति[2]। तामेतां पतनोन्मुखीं प्रवृत्तिं समवरुध्य अन्तर्मुखतायाः स्थैर्यलाभाय स्वाभाविकतापादनाय च भारतीयशास्त्राणां संस्कृतेश्च[3] लक्ष्यम्। एतदेव लक्ष्यं जीवने शाश्वतिकीं शान्तिमानन्दं चानुभावयति। तादर्थ्यमेव च मानवीयजीवनस्य एकैकोक्षणः स्वाभाविक्यपि सूक्ष्मा सुभृशं विचार्यते। तस्मादेव च भारतीयपरम्परायां धर्मस्य विस्तृततमं क्षेत्रं भवति। तमिमं धर्मस्य तथ्यमजानानाः धर्मशब्दाद् बिभ्यति अभिक्रोशन्ति च भारतीयेषु शास्त्रेषु तद्विचारकेषु विद्वत्सु च।

---

१. धर्माधर्मौ तद्विपाकाश्चयोऽपि ( मिता० १।१ ) सति मूले तद्विपाको जात्यायुर्भोगाः।
ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्।
( योगदर्शन० २।१३-१४ )

२. पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्। पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्। अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥
( कठोपनिषद् २।१।१–२ )

३. धर्मेण धर्मः परिपाति सेतुम्—भा० ३।१।३६।

आसीत्कदाचिदीदृशः समयः यस्मिन् धर्मस्य लक्षणं तार्किकदिशा न विचार्यतेस्म। अपितु प्रायोगिकदिशैव धर्मतत्त्वं बोधयन्तिस्म, यथा—

यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः।
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते॥
—विश्वामित्रः ( वी० मि० ३१ पृ० प० प्र० )

'यन्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो, यं गर्हन्ते सोऽधर्मः।
( आप० ध० १।२०।७ )

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्युनुज्ञातो यो धर्मस्तन्निबोधत॥ ( मनु० २।१ )

अथ आर्याणामद्वेषरागिणां विदुषां शिष्टानां च यादृशं स्वरूपं शास्त्रेषु[1] दृश्यते न तथोपलभ्यते। अतएव शिष्टाचार एव धर्मस्य ज्ञापकं प्रमाणं न भवितुमर्हति। तस्मादेव धर्मतत्त्वस्य प्रमाणमन्विष्यते[2] विवरणं च तेषां शास्त्रेषु क्रियते।

**आत्मतुष्टिः**

धर्मप्रमापकेषु प्रमाणेषु 'स्वस्य च प्रियमात्मनः' इति ( म० स्मृ० २।१२ या० स्मृ० १।७ ) "आत्मनस्तुष्टिरेव च" इति मनुना ( २।६ ) आत्मतुष्टेः प्राामाण्यमुक्तम्। तत्र "स्वस्य च प्रियम्" इत्यस्य वीरमित्रोदया व्याख्या—

---

१. अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः; यथा ते तत्र वर्त्तेरन्। तथा तत्र वर्त्तेथाः। अथाभ्याख्यातेषु ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षाधर्मकामाः स्युः। यथा ते तेषु वर्त्तेरन् तथा तेषु वर्त्तेथाः। ( तै० उ० १।१।३-४, ) "सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत।" ( आप० ध० १।२०।८ ) शिष्टाः— 'शिष्टाः खलु विगतमत्सराः निरहङ्काराः कुम्भीधान्या अलोलुपा दम्भ-दर्प-लोभ-मोह-क्रोध-विवर्जिताः।

धर्मेणाधिगतो येषां वेदः सपरिबृंहणः।
शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः॥ (बौ० ध० १।१।५-६)

२. 'नहीदानींतनाः शिष्टाः मन्वादिवद्देशकालविप्रकृष्टं वेदं दिव्यज्ञानेन साक्षात्कर्तुं शक्नुवन्ति। येन शिष्टाचारो मूलवेदमनुमापयेत् शक्नोति यं कंचनापि होलाकाद्याचारस्य स्मृतिग्रन्थमवलोकयितुम्।'

( जै० न्या० वि० १।३।५ )

स्वस्य प्रियं प्रीतिः, कारणेन कार्यलक्षणात् । धर्मसन्देहे वैदिकसंस्कारवासितात्मनामेकत्र पक्षे मनःपरितोष इति यावत् । यदाहुर्भट्टपादाः—

एतेन वैदिकानेकधर्मश्रीसंस्कृतात्मनाम् ।
आत्मतुष्टेः प्रमाणत्वं सिद्धं धर्मप्रसिद्धये ॥ इति ।

आत्मन इति न तु सर्वस्य । एतच्चैकदेशभूमिजनमतेपि धर्मः योग्यताबलात् इति ।

विज्ञानेश्वरः—स्वस्य चात्मनः प्रियं वैकल्पिके विषये यथा "गर्भाष्टमेष्टमे वाब्दे" इत्यादावात्मेच्छैव नियामिका इति ।

मानवीयस्य ( २।६ ) आत्मतुष्टिरित्यस्य व्याख्यानमाह मित्रमिश्रः-आत्मतुष्टिरभ्यासादिसन्देहविषय-प्रायश्चित्तव्रतादौ । तथा च प्रायश्चित्तप्रकरणे बृहस्पतिः—

यस्मिन् कर्मण्यस्य कृते मनसः स्यादलाघवम् ।
तस्मिंस्तावत्पुनः कुर्याद्यावत्तुष्टिकरं भवेत् ॥ इति ।

अलाघवं पापशून्यताप्रतिसन्धानविरहः, तन्निबन्धनो परितोष इति यावत् । अव्यवस्थितविकल्पविषयप्राङ्मुखोदङ्मुखाचमनादावेव मनस्तुष्टिः स्वविषयेऽन्यतरस्मिन् धर्मे प्रमाणमिति बहवः । तुष्टिस्तु यस्य, तस्यैत धर्मे प्रमाणमित्युक्तम् । कामस्तु प्रत्यक्षश्रुत्याद्यबोधिते ब्राह्मणोपकारविशेषादौ भोजनव्यतिरेकेण मया जलपानं न कर्त्तव्यमित्याद्याकारस्तदकरणादाविति तु विश्वरूपः । ( वी० मि० या० स्मृ० पृ० २१ ) सूक्तिमुक्ताफले ( पृ० १ ) तु—"साधूनां परमधार्मिकाणामात्मनस्तुष्टिः मनसो रुचिः । सा च धर्ममूलम् । प्रमाणान्तरागोचरत्वेन धर्मं प्रति संशायितेष्वर्थेषु यो धर्मत्वेन मनसे रोचते स धर्म इत्यर्थः ।

व्याख्यानेष्वेषु मनस्तुष्टिर्विकल्पविषये स्वात्मशुचित्वविषये वा धर्मे प्रमाणमित्युक्तम् ।

**आधुनिकानां मतविमर्शः**

आधुनिकाः शास्त्रसम्बन्धमन्तरापि मनस्तुष्टिं प्रमाणयन्ति, तदसत् । यतो हि मनो दूरङ्गमं ज्योतिषां ज्योतिः ( भा० स० ३४।१ ) सदपि चञ्चलम् ( गीता ६।३४।३५ ) ससीमगतिकं च ( केन० १।५ ) नैतत्सर्वदा स्थिरं तिष्ठति । किन्तु सङ्कल्पविकल्पात्मकमेवैतस्य स्वरूपम् । मनसा संकल्पितेषु विकल्पितेषु च विषयेषु बुद्धिर्निर्णयति । परं बुद्धिरपि न पूर्णा । सर्वो हि मानवः स्वात्मबुद्धिकौशलेन कार्यं करोति, तथापि लोकदृष्ट्या तस्मिन्नौचित्यमनौचित्यं मन्दत्वं तीव्रत्वमित्यादयो विचाराः सम्भवन्त्येव । किं बहुना कस्मिंश्चिन्महनीये स्वात्मबुद्धिसमाधेयतामति-

क्रामति विषये सर्वोपि जनः स्वप्रियं हितैषिवर्गमाप्तजनं च मन्त्रयते। तदेतद् बुद्धि-शैथिल्यस्यैव प्रमाणम्। श्रीमद्भगवद्गीतायां तु स्पष्टमेव बुद्धेस्त्रैविध्यमुक्तं यथा—

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी॥
यथा धर्ममधर्मं च कार्यं चाकार्यमेव च।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी॥
अधर्मं धर्ममिति या मन्यते तमसावृता।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी॥

(अ० १८।३०-३२)

एतासु त्रिविधासु बुद्धिषु राजसतामसयोर्बुद्धित्वेऽपि तद्द्वारा निश्चितं कर्म औचित्यं नावहति। केवलं सात्त्विकबुद्धावेव सत्यानिर्णयक्षमता वर्त्तते। साम्प्रत्यपि मनोवैज्ञानिकाः बुद्धेः स्तरं मानवे निश्चिन्वन्ति। प्रत्येकं परस्परमापेक्षिकं बुद्धिकौशलं मानवेषु दृश्यते। प्रायः सर्वतोऽधिकस्य बुद्धिमतः निर्णयं मन्दबुद्धयः प्रमाणयन्ति। वेदेष्वपि "अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः" (ऋक् १०।७१।७) इति मनोवेगेषु विषमत्वं स्पष्टं प्रतिपाद्यते। मनुष्याणामानन्त्यमस्ति। तेषु मनोगत-भावानामप्यसङ्ख्यत्वमिति, आत्मनः परस्य वा तत्र विश्वासकरणं न युक्तसहं भवति। किमुत धर्मविषये। अत एवाह बोधायनः—

बहुद्वारस्य धर्मस्य सूक्ष्मादुरनुगा गतिः।
तस्मान्न वाच्या ह्येकेन बहुज्ञेनापि संशये॥ (बौ० ध० १।१।१३)।

ईश्वर एवैकः ईदृशः यः सर्वज्ञः। स हि अनन्तब्रह्माण्डानां ब्रह्माण्डान्तर-वर्तिनामनन्तजीवानामनन्तजीवसम्बन्धिनामनन्तकर्मणाम्, अनन्तकर्मनिमित्तका-नामनन्तफलानां याथातथ्यं वेद। अत एव सः सर्वज्ञः सर्वशक्तिमान् जगदीश्वर-श्चास्माभिः कथ्यते। तस्य चाज्ञा सर्वथाप्यस्माभिः श्रेयः साधनत्वेन शिरोधार्या। शास्त्राणि च तस्यैव आज्ञा। अत एव महाभारते प्रोच्यते—

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञा सिद्धानि चत्वारि न हातव्यानि सूरिभिः॥ इति।

मानवः—मन्वादिस्मृत्युक्तो धर्मः। विरोधिबौद्धादितर्कैर्न हातव्यानि। अनुकूलस्तु मीमांसादितर्कः प्रवर्त्तनीय एव। अत एव मनुः—"आर्षं धर्मोपदेशं" (१२।१०६) इत्याद्युपदिशति।

**स्वधर्मानुष्ठानेन जीवनसाफल्यम्**

शास्त्रानुसारेण स्वधर्मानुष्ठानेनैव ब्रह्मज्ञानयोगादिक्रियां च विना ब्रह्मत्वं प्राप्नोतीति श्रीमद्भागवते स्पष्टमुक्तम्—( स्क० ४ अ० २४।२९ )

स्वधर्मनिष्ठः शतजन्मभिः पुमान्
विरिञ्चितामेति ततः परं हि माम् ।
अव्याकृतं भागवतोऽथ वैष्णवम्
पदं यथाहं विबुधाः कलात्यये ॥

मनुरपि— न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते ॥ इति ।

शास्त्रीयधर्माचरणेन सत्यधर्मनिर्णयप्रदायिनी सात्त्विकी बुद्धिरुदेति । तदेव च—

'सतां' हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इति स्वरूपा धर्मप्रमाणभूता आत्मतुष्टिः सम्पद्यते । शास्त्रविरोधिनी त्वात्मतुष्टिः कदापि श्रेयसे न भवितुमर्हति ।

'स्वाभिप्रायकृतं कर्म यत् किञ्चिज्ज्ञानवर्जितम् ।
क्रीडाकर्मेव बलानां तत्सर्वं निष्प्रयोजनम् ॥'

इत्याङ्गिरोवचनाद् 'ज्ञानवर्जितं शास्त्रीयज्ञानवर्जितमि'ति मित्रमिश्रव्याख्यानाच्च ( पृ० ११ प० प्र० ) स्पष्टमेव ।

**तर्कप्रामाण्यचिन्तनम्**

आधुनिका हि विदेशे-तदाचारे-तदुन्नतिषु च श्रद्धावन्तो भारतीय धर्मं तत्प्रामाण्यचिन्तनं च दूषयन्तः तर्कस्यान्तःकरणप्रवृत्तेश्चाभ्युदये प्रमाण्यं कथयन्ति । परमेतद् भारतीयानां ज्ञानश्रोतस्तलावगाहिनां कृते न शोभते । यतो हि वयं तर्कस्यान्तःकरणप्रवृत्तेर्वा प्रामाण्यं नापनुदामः, किन्तु तस्य व्यवस्थितत्वं निश्चितश्रेयः साधनत्वं च निवेशयामः । यथाहि दृष्टफानि यानि कर्माणि तेषां मूलं दृष्टमेव प्रयोजनम् । तत्र तर्कस्यान्तःकरणप्रवृत्तेर्वा स्वातन्त्र्यमभ्युपगन्तुं शक्यते । परं तत्रैव भोजनपानादिषु रागतः प्राप्तेषु दृष्टफलेषु कर्मसु विधिविधया इष्टसाधनत्वं निषेधविधयानिष्टसाधनत्वं वा बोध्यते तत्रैवादृष्टमन्वेति, तत्रैव च शास्त्रं प्रवर्त्तते । यथा भोजने—

श्रीकामश्चेत्प्राङ्मुखः, सत्यकामश्चेदुदङ्मुखः, यशस्कामश्चेद्दक्षिणामुखः, जीवन्मातृकवर्जम् ( का० मो० सू० १ ) शयने ह्यायुष्यं दक्षिणाः शिरा. ।

दाम्पत्यसम्बन्धप्रतिष्ठापने—

दश पूर्वान्दशपरानात्मानं चैकविंशकम् ।
ब्राह्मीपुत्रः सुकृतकृन्मोचयेदेनसः पितॄन् ॥
देवोढाजः सुतश्चैव सप्त सप्त परावरान् ।
आर्षोढाजः सुतः त्रीं त्रीन् षट् षट् कामोढजः सुतः ॥
( मनु० ३।३७-३८ ) ( या० स्मृ० १।५८।६० ) ।

धनोपार्जने—

सप्त वित्तगमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥ इत्यादयः ।
( मनु० १०।११५ )

एतेषु शास्त्रप्रतिपादितेषु कर्मसु न तर्कः प्रसरति । तेषामादेशानां हृदयङ्गमता यथा भवति तथानुकूलास्तर्काः वैज्ञानिकप्रयोगाश्चानुगन्तुं शक्यन्ते । यदि तेषां अवरोधो वैपरीत्यं वा लक्ष्येत तदा शास्त्रीयादेशानां अवहेलना अश्रद्धा वा न करणीया । अदृष्टफलस्य शास्त्रैकमात्रवेद्यत्वात् इति तर्कप्रामाण्यचिन्तनाद्विरम्यते ।

**आदर्शचरित्रम्**

यो हि शास्त्रविरुद्धः आत्मतुष्टिपदार्थः पुण्यबुद्ध्या क्रियते स धर्मादर्शतत्त्वं प्रतिपद्यते । यस्तु कामक्रोधलोभमोहशोकादिनोपलभ्यते स यथाविधि प्रतिषेधं वर्तिष्यते । तेन विश्वामित्रस्यापि यद्रागद्वेषपूर्वकमपि तपोबलाद् रुढस्य चरितं तत् 'सर्वं बलवतः पथ्य' मित्यनेन न्यायेन महान्ति च तपांसि कृत्वा तानि क्षयं नयत उत्तरकालं वा पापशुद्धिं प्रायश्चित्तैः कुर्वाणस्य जीर्यन्त्यपि । मन्दतपसां तु गजैरिव महावटकाष्ठादिभक्षणमात्मविनाशायैव स्यात् । इति ।

यथा वा कश्चन पितृषु शास्त्रेषु वा विशेषश्रद्धावान् अल्पप्रयाससाध्ये कर्मणि सत्यपि विशेषशास्त्रीयधर्मपरिग्रहेणात्मनस्तोषं[1] भावयति तादृशी आत्मतुष्टिः परेषामप्यादशरूपतां धत्ते एतमेव च सिद्धान्तमाह—भगवान्नारायणः—

'लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसि ।
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ इति ।
( गीता ३।२०-२१ )

---

१. एतच्च ( गयाश्राद्धं ) यदा फलभूमार्थिना द्विस्त्रिर्वा क्रियते तदा प्रेतशिलाश्राद्धवर्ज्यं कुर्यात्, तस्य प्रेतत्वविमोक्षार्थत्वात् तस्य च जातत्वादिति केचित् । वस्तुतस्तु संन्यासिश्राद्धवदत्रापि सर्वं कार्यं, साङ्गेऽधिकारादिति युक्तं प्रतीमः । ( २७७ नि० सि० )

**शास्त्राज्ञापरिपालनाग्रहकारणम्**

भारतीयां संस्कृतिं शास्त्राणि च वर्जयित्वा प्रायः सर्वेष्वपि देशेषु केवलं दृष्टं फलमेवानुश्रित्य कार्यं प्रवर्त्तयन्ति। भारतीयास्तु दृष्टफलकेऽपि वस्तुनि अदृष्टं फलं अतीन्द्रियतत्त्वदर्शिमहर्षिवचनैरवगम्य सर्वमपि कार्यं निश्चिन्वते। अतएव शास्त्रदीपिकाकारेण स्पष्टमुक्तम्—

'अस्ति अभियुक्तानभियुक्तयोर्विशेषः। शास्त्रस्था हि शब्दैकसमधिगम्यधर्माविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति। म्लेच्छास्तु दृष्टार्थव्यवहारस्य यथाकथंचित् सिद्धेः प्रयोजनाभावान्नाविप्लुतिसिद्धौ यतन्ते। अतो यद्यपि प्रतिपादकतामात्रं म्लेच्छेष्वपि सिद्ध्यति तथापि विप्लुतिसम्भावान्न तेषु शब्दार्थतत्त्वसिद्धिरित्यार्यप्रसिद्ध्यैव निर्दोषया बलीयस्यार्थसिद्धिरिति।'

( १।३।५ पृ० ३३ )

तदेवं जीवनावश्यकताहेतुभूतेषु सर्वेष्वपि कार्येषु अदृष्टं भारतीया अन्विष्यन्ति, सादृष्टे च दृष्टे कर्मणि प्रवर्तन्ते।

**विज्ञानाविर्भावः**

धर्मशास्त्रीयस्मार्तपदार्थानां चाधुनातना वैज्ञानिकत्वं संशेरते। परमेतत्प्रतिपादिततत्त्वानां यन्त्रादिभौतिकोपकरणाधारवश्येन वैज्ञानिकत्वालाभेऽपि मेधोपकरणसहाय्येन वैज्ञानिकत्वं स्वयमुद्भवतीति शास्त्रे प्रतिपाद्यते। यथा

'यथा यथा हि पुरुषः शास्त्रं समधिगच्छति।
तथा तथास्य मेधा स्याद् विज्ञानं चास्य रोचते। इति॥

एवं च भारतीयं कर्मकाण्डं श्रुतिस्मृतिधर्मशास्त्रनिबन्ध-पुराणप्रतिपादितं सर्वथा सर्वदा सर्वस्य च यथाधिकारं श्रेयसे भवतीति निश्चीयतेतमाम्।

# अनुसन्धानप्रबन्धप्रसङ्गे दृष्टग्रन्थानां सूची

अमरकोषः
अधिकरणकौमुदी
आग्निवेश्यगृह्यसूत्रम्
आपस्तम्बधर्मसूत्रम्
आश्वलायनगृह्यसूत्रम्
ईश्वरसंहिता
ऋग्वेदभाष्यभूमिका
काण्वसंहिताभाष्यभूमिका
कात्यायनश्रौतसूत्रम् ( कर्कभाष्यम् )
कात्यायनस्नानसूत्रम्
कालमाधवः
कात्यायनशुल्वसूत्रम्
कर्मप्रदीपः
खादिरगृह्यसूत्रम्
गादाधरी
श्रीमद्भगवद्गीता
जैमिनीयगृह्यसूत्रम्
जैमिनीयन्यायमालाविस्तारः
तन्त्रवार्तिकम्
तन्त्रसिद्धान्तरत्नावलिः
तैत्तिरीयोपनिषद्
तैत्तिरीयभाष्यभूमिका
ताण्ड्यब्राह्मणम्
दत्तकचन्द्रिका
अर्थसंग्रहः
अथर्ववेदसंहिता
आपस्तम्बगृह्यसूत्रम्
आपस्तम्बश्रौतसूत्रम्
आश्वलायनश्रौतसूत्रम्

ऋग्वेदः
कठोपनिषद्
कात्यायनभोजनसूत्रम्
काठकगृह्यसूत्रम्
कातीयेष्टिदीपकः
कृष्णम्भट्टी
केनोपनिषद्
गरुणपुराणम्
गायत्रीपुरश्चरणपद्धतिः
गौतमधर्मसूत्रम्
जैमिनीयन्यायमाला
जैमिनीयसूत्राणि
तन्त्ररत्नम्
तैत्तिरीयारण्यकम्
तैत्तिरीयब्राह्मणम्
तैत्तिरीयसंहिता
त्रिस्थलीसेतुप्रघट्टकम्
दत्तकमीमांसा
दानमयूखः
धर्मप्रदीपः
धर्मकल्पद्रुमः
निर्णयसिन्धुः
न्यायप्रकाशः
नारदपुराणम्
पद्मपुराणम्
पाणिनीयशिक्षा
प्रयोगपारिजातः
बोधायनगृह्यसूत्रम्
बोधायनधर्मसूत्रम्

मनुस्मृतिः
माध्यन्दिनीयसंहिता ( भाष्य )
कुल्लूकभट्टीया
मिताक्षरा
मीमांसान्यायप्रकाशः
यज्ञतत्त्वप्रकाशः
याज्ञवल्क्यशिक्षा
वायुपुराणम्
वेदान्तसारः
शास्त्रदीपिका
शान्तिमयूखः
शान्तिसारः
संस्कारगणपतिः
सांख्यकारिका
धर्मद्वैतनिर्णयः
धर्मसिन्धुः
निरुक्तम्
निघण्टुः
नारसिंहपुराणम्
नारायणोपनिषद्
पारस्करगृह्यसूत्रम्
प्रतिज्ञापरिशिष्टम्
बृहदारण्यकोपनिषद्
बोधायनश्रौतसूत्रम्
भारतसर्वस्वम्
मानवगृह्यसूत्रम्
मन्वर्थमुक्तावलिः
मार्कण्डेयपुराणम्
मीमांसापरिभाषा
मुहूर्तचिन्तामणिः
याज्ञवल्क्यस्मृतिः
योगदर्शनम्
वीरमित्रोदयः
शतपथब्राह्मणम्
शाबरभाष्यम्
शान्तिकमलाकरः
सनातनधर्मोद्धारः
संस्कारभास्करः
स्मार्तप्रभुः
स्मृतिचन्द्रिका
स्मृतिमुक्ताफलम्
अग्निपुराणम्
भविष्यपुराणम्
वाल्मिकीयरामायणम्
शब्दकल्पद्रुमः
लौगाक्षिगृह्यसूत्रम्
गोभिलगृह्यसूत्रम्
सत्याषाढश्रौतसूत्रम्
कौशिकगृह्यसूत्रम्
वाराहपुराणम्
सूक्तार्थसंग्रहः
स्मृतिनक्षत्रम्
वाजसनेयसंहिता
मत्स्यपुराणम्
विष्णुधर्मोत्तरपुराणम्
सिद्धान्तकौमुदी
वाराहगृह्यसूत्रम्
वैखानसगृह्यसूत्रम्
सांख्यायनगृह्यसूत्रम्
कौशीषतकगृह्यसूत्रम्
माण्डूक्योपनिषद्
देवयाज्ञिकपद्धतिः